## स्नानविधिः

आयुर्बलं यशो वर्चः प्रजाः पशु वसूनि च।
ब्रह्मप्रज्ञां च मेधां च त्वं नो देहि वनस्पते ॥ इति दन्तधावनकाष्ठ मभिमन्त्र्य ।

क्लीं कामदेवाय सर्वजनप्रियाय नमः । इति दन्तधावनम् ।

क्लींकाररूपायै सर्वजनप्रियायै नमः । ओं ह्रीं श्रीं - श्रीं ह्रीं ओं कमले कमलालये प्रसीद प्रसीद श्रीं ह्रीं श्रीं महालक्ष्म्यै नमः इति मुखप्रक्षाळनं कृत्वा स्नानं कुर्यादिति शिवम् ।

## स्नानविधिः

अनन्तरं स्नानार्थं बहिर्गच्छेत् । आचम्य । ओं भूः ओं भुवः ओगं सुवः ओं महः ओं जनः ओं तपः ओगं सत्यं - ओं तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् । तीर्थे स्नात्वा हस्तमात्रं कुण्ड विभाव्य । अंकुशमुद्रया क्रोमिति बीजेन सूर्यमण्डलान्तर्गतानि तीर्थान्याकृष्य तत्र श्रीचक्रं विभाव्य ।

देवीध्यानम् - मुक्ताविद्रुमहेमनीलधवळछायैर्मुखैस्त्र्यक्षणैर्युक्ता
मिन्दुनिबद्धरत्नमकुटां तत्वार्थवर्णात्मिकाम् ।
गायत्रीं वरदाभयांकुशकशाश्शुभ्रं कपालं गदां
शङ्खं चक्रमधारविन्दयुगळं हस्तैर्वहन्तीं भजे ॥

जगन्मये जगत्पूज्ये महादेवि महेश्वरि ।
गायत्रि वेदजननि त्वां मद्य प्रणमाम्यहम् ॥

तत्पादलाक्षारुणजलं विभाव्य —

ओं तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् । इति त्रिवारं शिरसि मार्जयेत् । पुनर्निमज्य तीरमागत्य वासांसि परिधाय ओमापो

ज्योतिरसोऽमृतं ब्रह्म भूर्भुवस्सुवरोम् । ऊर्ध्वकेशि विरूपाक्षि मांसशोणित-भोजनि । तिष्ठ देवि शिखाबन्धे चामुण्डेष्टेश्वराजिते । ओं भूर्भुवस्सुवः । ओं तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् । मान-स्तोके तनये मान आयुषि । मानो गोषु मानो अश्वेषु रीरिषः । वीरान्मानो रुद्रभामितोवधीर्हविष्मन्तो नमसा विधेम ते । इति शिखां बध्वा ।

## अथ भस्मस्नानविधिः

भस्मना उद्धूळ्य अस्य श्री भस्मस्नानमहामन्त्रस्य अग्निऋषिः अमृत विराट्छन्दः सदाशिवो देवता ।

मम समस्तपापक्षयद्वारा सर्वप्रायश्चित्तार्थं देहशुद्धयर्थं भस्मस्नान महं करिष्ये । इति सङ्कल्प्य ।

विभूतिमादाय वामहस्ते निक्षिप्य । दक्षिणकरेण संस्पृष्ट्वा । मुखमुद्रया मुखपर्यन्तं नीत्वा ।

ओं शम्भु शम्भु शिवश्शम्भु सदाशिवः । इति व्याहृतिना नित्यं दिनान्यायान्ति यान्ति च । चन्द इति भस्म । अग्निरिति भस्म । वायुरिति भस्म । जलमिति भस्म । व्योमेति भस्म । सर्वगं ह्वायिदं भस्म । मन इत्येतानि चक्षूंषि भस्मानि । त्रियायुषं जमदग्नेः कश्यपस्य त्रियायुषं यद्देवानां त्रियायुषं तन्मे अस्तु त्रियायुषं । त्रियम्बकं यजामहे सुगन्धि पुष्टिवर्धनम् । उर्वा-रुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात् । आपोवा इदगं सर्वं विश्वाभूतान्यापः प्राणा वा आपः पशव आपोन्नमापोमृत मापस्सम्राडापो विराडाप स्स्वरा डापश्छन्दागुस्यापो ज्योतीगुंष्वापोयजूगुंष्यापस्सत्यमापस्सर्वादेवता आपो भूर्भुव स्सुवराप ओं । मानस्तोके तनये मान आयुषि मानो गोषु मानो अश्वेषु रीरिषः । वीरान्मानो रुद्रभूमितोवधीर्हविष्मन्तो नमसा विधेमते । पञ्च-ब्रह्ममन्त्रान्लिखित्वा । सद्यो जातं प्रपद्यामि सद्यो जाताय वै नमो नमः । भवे भवे नाति भवे भवस्व मां भवोद्भवाय नमः ।

वामदेवाय नमो ज्येष्ठाय नमः। श्रेष्ठाय नमो रुद्राय नमः। कालाय नमः। कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रथनाय नमस्सर्वभूतदमनाय नमो मनोन्मनाय नमः।

अघोरेभ्योथ घोरेभ्यो घोरघोरतरेभ्यः। सर्वेभ्य स्सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः।

तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयात्।

ईशान स्सर्वविद्याना मीश्वर स्सर्वभूतानाम्। ब्रह्माधिपति र्ब्रह्मणोधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम्।

ओं नमश्शिवाय। इति दशवारं जपित्वा। ओं परब्रह्मणे नमः (शिरसि)। ओं नमश्शिवाय नमः (ललाटे)। ओं ब्रह्मणे नमः (दक्षिणकर्णे)। ओं विष्णवे नमः (वामकर्णे)। ओं हव्यवाहनाय नमः (हृदये) ओं स्कन्दाय नमः (नाभौ)। ओं इन्द्राय नमः (दक्षिणभुजे)। ओं आदित्याय नमः (तन्मध्ये)। ओं सोमाय नमः (तन्मणिबन्धे)। ओं वामदेवाय नमः (वामभुजे)। ओं प्रभञ्जनाय नमः (तन्मध्ये)। ओं वसुभ्यो नमः (तन्मणिबन्धे)। ओं हराय नमः (पृष्ठे)। सर्वाङ्गानि च लेपयेत्। इति भस्मना स्नात्वा।

## प्रातस्सन्ध्याविधिः

### अनन्तरं सन्ध्यामारभेत्

ओं अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोपि वा। यस्स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तर श्शुचिः (आचम्य)। अच्युताय नमः। अनन्ताय नमः। गोविन्दाय नमः। केशवाय स्वाहा। नारायणाय स्वाहा। माधवाय स्वाहा। गोविन्दाय नमः। विष्णवे नमः। मधुसूदनाय नमः। त्रिविक्रमाय नमः। वामनाय नमः। श्रीधराय नमः। हृषीकेशाय नमः। पद्मनाभाय नमः।

दामोदराय नमः। सङ्कर्षणाय नमः। वासुदेवाय नमः। प्रद्युम्नाय नमः। अनिरुद्धाय नमः। पुरुषोत्तमाय नमः। अधोक्षजाय नमः। नारसिंहाय नमः। अच्युताय नमः। जनार्दनाय नमः। उपेन्द्राय नमः। हरये नमः। श्रीकृष्णाय नमः।

उत्तिष्ठन्तु भूतपिशाचाः। एते भूमिभारकाः। एतेषा मविरोधेन ब्रह्मकर्म समारभे।

ओं ओं ओं दैवी गायत्री छन्दः प्राणायामे विनियोगः। ओं भूः। ओं भुवः। ओगं सुवः। ओं महः। ओं जनः। ओं तपः। ओगं सत्य। ओं तत्सवितु-र्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात्। ओमापो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवस्सुवरोम्। मम उपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं शुभे शोभने मुहूर्ते अद्य ब्रह्मणः द्वितीयपरार्धे श्वेतवराहकल्पे वैवस्वत मन्वन्तरे कलियुगे प्रथमपादे जम्बूद्वीपे भारतवर्षे भरतखण्डे अस्मिन्वर्तमाने व्यावहारिक चान्द्रमानेन प्रभवादि षष्टिसंवत्सराणां मध्ये .... संवत्सरे .... अयने .... ऋतौ .... मासे .... पक्षे .... शुभतिथौ .... वासरयुक्तायां शुभनक्षत्र शुभयोग शुभकरण एवंगुणविशेषणविशिष्टायां शुभतिथौ (श्रीगायत्री-देवतामुद्दिश्य श्रीगायत्रीदेवताप्रीत्यर्थं प्रातस्सन्ध्या मुपासिष्ये)

ओं आपोहिष्ठा मयो भुवः। ओं तान ऊर्जे दधातन। ओं महे रणाय चक्षसे। ओं योवश्शिवतमो रसः। ओं तस्य भाजयते हनः। ओं उशतीरिव मातरः। ओं तस्मा अरङ्गमामवः। ओं यस्य क्षयाय जिन्दथ। ओं आपोजनयथाचनः। ओं सूर्यश्च मामन्युश्च मन्युपतयश्च मन्यु कृतेभ्यः। पापेभ्यो रक्षन्तां यद्रात्र्या पाप मकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना रात्रिस्तदवलुंपतु यत्किंच दुरितं मयि इद महं माममृत योनौ सूर्ये ज्योतिषि जुहोमि स्वाहा। इत्यपः पीत्वा। आचम्य। ओं दधिक्राव्णो अकारिषम्। जिष्णो रश्वस्य वाजिनः। सुरभिनो मुखाकरत्प्रण

आयूगं्षि तारिषत् आपोहिष्ठा मयो भुवः। तान ऊर्जे दधतन। महे-रणाय चक्षसे। योव शिवतमो रसः। तस्य भाजयते हनः। उशतीरिव मातरः। तस्मा अरंग मामवः। यस्य क्षयाय जिन्वथ। आपो जनयथाचनः। हिरण्यवर्णाश्शुचयः पावकाः यासुजातः कश्यपो यास्विन्द्रः। अग्नि या गर्भं दधिरे विरूपास्तान आपश्शग्ग् स्योना भवन्तु। या सागं् राजा वरुणो याति मध्ये सत्यानृते अवपश्यन् जनानां। मधुश्च्युत श्शुचयो याः पावकास्ता न आपश्शग् स्योना भवन्तु। यासां देवा दिवि कृण्वन्ति। भक्षं या अन्तरिक्षे बहुधा भवन्ति। याः पृथिवीं पयसोन्दन्ति शुक्रास्तान आपश्शग्ग् स्योना भवन्तु। शिवेन मा चक्षुषा पश्यतापश्शिवयातनु वोपस्पृशत त्वचं मे। सर्वागं् अग्नीगं् रप्सुषदो हुवे वोमयि वर्चो बलमोजो निधत्त। द्रुपदा दिवमुंचतु द्रुपदादिवे-न्मुमुचानः। स्विन्नस्नात्वीमलादिव। पूतं पवित्रेणेवाज्यं आपश्शुन्धन्तु मैनसः। आचम्य - प्राणानायम्य। एवंगुणविशिष्टायां शुभतिथौ प्रातस्सन्ध्यावन्दनार्घ्य-प्रदानानि करिष्ये। ओं भूर्भुवस्सुवः। ओं तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात्। एवं त्रिरर्घ्यं दत्वा। आचम्य। प्राणानायम्य। एवं गुणविशेषणविशिष्टायां शुभतिथौ कालातीतप्रायश्चित्तार्घ्यप्रदानं करिष्ये।

हरोम्हि पाप्मानं मे विद्धि। हिरण्यगर्भ स्समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् सदाधार पृथिवीं द्यामुते मां कस्मै देवाय हविषा विधेम। ओं भूः ओं भुवः। ओगं् सुवः। ओं महः। ओं जनः। ओं तपः। ओगं् सत्यं। ओं तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्। इति चतुर्थार्घ्यः।

उत्तिष्ठ देवि गन्तव्यं पुनरागमनाय च।
प्रसीद देवि हृष्टात्मा प्रविश्य हृदयं मम ॥

इत्युपसंहृत्य। असावादित्यो ब्रह्मा। उद्यन्तमस्तं यन्तमादित्य मभि-ध्यायन् कुर्वन्ब्राह्मणो विद्वान्सकलं भद्रमश्नुतेऽसावादित्यो ब्रह्मेति ब्रह्मैव

सन्ब्रह्माप्येति य एवं वेद। प्रातस्सन्ध्यां तर्पयामि। गायत्रीं तर्पयामि। ब्राह्मीं तर्पयामि। निमृजीं तर्पयामि। ऋग्वेदीं तर्पयामि। इति कृत्वा। आचम्य। प्राणानायम्य। एवंगुणविशिष्टायां शुभतिथौ वन्दनमन्त्रजपं करिष्ये।

अस्य श्री प्रातस्सन्ध्यावन्दनमहामन्त्रस्य सान्दीपनभगवानृषिः अनुष्टुप्छन्दः सन्ध्यादेवी देवता शोभनवक्त्रा मिति बीजं नीलग्रीवामिति शक्तिः। त्रिनेत्रामिति कीलकं मम शीघ्रं सन्ध्यादेवीप्रसादसिद्ध्यर्थे जपे विनियोगः। आं ऐं अंगुष्ठाभ्यां नमः। उं क्लीं तर्जनीभ्यां नमः। मं सौः मध्यमाभ्यां नमः। आं ऐं अनामिकाभ्यां नमः। उं क्लीं कनिष्ठिकाभ्यां नमः। मं सौः करतल करपृष्ठाभ्यां नमः। एवं हृदयादिन्यासः। भूर्भुवस्सुवरो मिति दिग्बन्धः।

ध्यानम् – कृत्वा सन्ध्यामभिध्यायेन्नीलग्रीवां सुशोभनाम्।
वरदाभयहस्तां तां त्रिणेत्रां चन्द्रशेखरां ॥

प्रणवं परमात्मानं जपित्वा भक्तिसंयुतः।
स्वात्मानमात्मना ध्यायेत् प्रकुर्याद्वन्दनं बुधः ॥

सन्ध्यादेवि महाभागे सर्वदेवनमस्कृते।
त्वदुपासनमात्रेण सर्वपापैः प्रमुच्यते ॥

अहो महाबहूरूपे दिव्ये सन्ध्ये सरस्वति।
अजरे अमरे नित्ये ब्रह्मयोनि नमोस्तु ते ॥

आब्रह्मभुवना ल्लोकादाशेषा ल्लोकपर्वताः।
ये वसन्ति द्विजा देवा स्तेभ्यो नित्यं नमाम्यहम् ॥

या सन्ध्या सा जगद्रूपा मायातीता तु निष्कळा।
ईश्वरी केवलाशक्तिस्तत्वत्रयसमुद्भवा ॥

**लमित्यादि पञ्चपूजा —**

मनुः ओं आं ऐं ॐ क्लीं मं सौः ओं परोरजसि सावदोम् । दों वसासि-जररोप ओम् । ओं नमो नारायणाय । ओमापो ज्योतिरसोऽमृतं ब्रह्म भूर्भुव स्सुवरों । ओं भूः । ओं भुवः । ओगं सुवः । ओं महः । ओं जनः । ओं तपः । ओगं सत्यम् । तत्सवितुर्वरेण्यम् भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् । ओं श्रीं ईं ईं ओं औं हलहलखें ध्यें औं ओं ऐं सं सं रं यं हं क्षं हसौः ह्यं अरीन्मर्दय मर्दय प्रज्वल प्रज्वल ओं तत्सवितुर्वरेण्यं ओं श्रीं ईं ईं ओं औं हलहलखें ध्यें औं ओं ऐं सं सं रं यं हं क्षं हसौः ह्यं अरीन्मर्दय मर्दय प्रज्वल प्रज्वल भर्गो देवस्य धीमहि ओं श्रीं ईं ईं ओं औं हलहलखें ध्यें औं ऐं सं सं रं यं हं क्षं हसौः ह्यं अरीन्मर्दय मर्दय प्रज्वल प्रज्वल धियो यो नः प्रचोदयात् । ओं भूर्भुवस्सुवः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् । परोरजसि सावदोम् । ओं नमो नारायणाय । इति सकृज्जप्त्वा ।

## अथ भूशुद्धिः

आचम्य – अस्य श्री भूशुद्धिमहामन्त्रस्य भूवराहऋषिः सुतल छन्दः भूमिर्देवता आसने विनियोगः । लां बीजं लीं शक्तिः लूं कीलकं मम सर्वमन्त्रसिद्ध्यर्थे जपे विनियोगः । लां अंगुष्ठाभ्यां नमः । लीं तर्जनीभ्यां नमः । लूं मध्यमाभ्यां नमः । लैं अनामिकाभ्यां नमः । लौं कनिष्ठिकाभ्यां नमः । लः करतलकरपृष्ठाभ्यां नमः । एवं हृदयादिन्यासः । भूर्भुवस्सुवरो मिति दिग्बन्धः ।

ध्यानम् – समुद्रमेखले देवि पर्वतस्तनमण्डले । विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्व मे । स्योना पृथिवी भवानृक्ष रानिवेशिनियच्छान श्शर्म सप्रथाः । इति भूमिं सम्प्रोक्ष्य ।

पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता। त्वं च धारय मां देवि पवित्रं कुरु चासनम्। अपसर्पन्तु ये भूता ये भूता भूमिभारकाः। ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया। अपक्रामत भूताद्या स्सर्वे ते भूमिभारकाः। सर्वेषा मविरोधेन ब्रह्मकर्म समारभे।

इत्यासनोपरि हस्तं निक्षिप्य। लमितिपञ्चपूजां कृत्वा। भूगायत्रीं पञ्चवारं जपित्वा।

धनुर्धराय विद्महे सर्वसिध्यै च धीमहि। तन्नोधरा प्रचोदयात्।

ततः आसनोपरि कूर्मयन्त्रं विलिख्य आसने वामपार्ष्णिना हस्तद्वयेन भूतत्रयेन ताळत्रयं कुर्यात्। अनन्तासनाय नमः। कूर्मासननाय नमः। कमलासनाय नमः। पद्मासनाय नमः। योगासनाय नमः। वीरासनाय नमः। सुखासनाय नमः। असिताङ्गभैरवाय नमः। संहारभैरवाय नमः। इति छोटमुद्रया ओं रं सहस्रारहुं फट् स्वाहा। रं अग्निबीजेन अग्निप्राकार त्रयं विचिन्त्य।

हेतुकं पूर्वपीठेतु आग्नेये त्रिपुरान्तकम्। दक्षिणे चाग्निभेताळं नैरुत्यां यमजिह्विकम्। कालाख्यं वारुणीपीठे वायव्यान्तु कराळकम्। उत्तरे एकपादन्तु ईशाने भीमरूपकम्। आकाशे तु निरालम्बं पाताळे बडबानलम्। यथा यथा क्षेत्रे रक्षतां वटुकस्तथा। सर्वमङ्गळमाङ्गल्ये शिवे सर्वार्थसाधके, शरण्ये त्र्यम्बके देवि नारायणि नमोस्तु ते। इति भूशुद्धिः।

## अथ भूतशुद्धिः

अस्य श्री भूतशुद्धिमहामन्त्रस्य ब्रह्मेन्द्रेश्वरा ऋषयः अमृतविराट्-छन्दः जीवात्मा देवता देहशुद्धयर्थे विनियोगः। हमिति मूलाधार कुण्डलिनीमुत्थाप्य हृदिस्थ जीवात्मना संयोज्य तां द्वादशान्तस्थित

परमात्मना संयोज्य भूतानि प्रविलापयेत् । पादादि जानुपर्यन्तं पृथ्वीस्थानं पृथ्वीमण्डलं पीतवर्णं वज्रलाञ्छनं लं बीजयुक्तं ब्रह्मदैवत्यं पञ्चगुणात्मनि पृथिवीं प्रविलपयामि । जान्वादि नाभिपर्यन्तं अपांस्थानं अम्मण्डल अर्धचन्द्राकारं शुक्लवर्णं पद्मलाञ्छनम् । वं भीजयुक्तं विष्णुदैवत्यं चतुर्गुणात्मनि आपः प्रविलापयामि । नाभ्यादि हृदयपर्यन्त अग्निस्थानं अग्निमण्डलं त्रिकोणाकारं रक्तवर्णं स्वस्तिकलाञ्चनम् र बीजयुक्तं रुद्रदेवत्यं त्रिगुणात्मनि अग्नि प्रविलापयामि । हृदयादि भ्रूमध्यपर्यन्तं वायुस्थानं वायुमण्डलं षट्कोणाकारं धूम्रवर्णं षड्बिन्दुलाञ्छनम् । यं बीजयुक्तं ईश्वरदेवत्यं, द्विगुणात्मनि वायु प्रविलापयामि । भ्रूमध्यादि ब्रह्मरन्ध्रान्तं आकाशस्थानं आकाशमण्डलं वर्तुलाकारं कृष्णवर्णं ध्वजलाञ्छनम् । हं बीजयुक्तं सदाशिवदैवत्यं एकगुणात्मनि आकाशं प्रविलापयामि । सोहं द्वादशान्तस्थित परमात्मनि जीवात्मानं प्रविलापयामि । अधोकुक्षिस्थित वामभागे पापपुरुषं ध्यायेत् ।

वामकुक्षिस्थितं पापपुरुषं कज्जलप्रभम् ।
ब्रह्महत्या शिरोयुक्तं स्वर्णस्तेय भुजद्वयम् ।
सुरापानहृदायुक्तं गुरुतल्पकटिद्वयम्
तत्संयोगपदद्वन्द्वमङ्गप्रत्यङ्कपातकम् ।
उपपातकरोमाणं रक्तश्मश्रुविलोचनम्
खड्गचर्मधरं कृष्णं कुक्षौ पापं विचिन्तयेत् ।

पाशांकुशमुद्राभ्यां आं क्रोंमिति पापपुरुषं बहिर्निस्सार्य तस्य दहनं कुर्यात् । यमिति षोडशवारं जप्त्वा भूतानि संशोष्य लमिति षोडशवारं जप्त्वा पिण्डीकरणं दद्यात् । हमिति मूलाधार कुण्डलनी मुत्थाप्य हृदिस्थ जीबात्मना संयोज्य तां द्वादशान्तस्थित परमात्मना संयोज्य, आकाशाद्वायुः, वायोरग्निः, अग्नेरापः अद्भ्यः पृथिवी पृथिव्या ओषधयः ओषधीभ्योन्नं अन्नात्पुरुषः स वा एष पुरुषोन्नरसमयः इति भूतशुद्धिः ।

## अथान्तर्मातृका

अस्य श्री अन्तर्मातृका सरस्वतीन्यासमहामन्त्रस्य ब्रह्मा ऋषिः गायत्री छन्दः अन्तर्मातृका सरस्वती देवता। हलो बीजानि स्वराश्शक्तयः। बिन्दवः कीलकं अन्तर्मातृका सरस्वती प्रसादसिद्ध्यर्थे जपे विनियोगः। अं कं खं गं घं ङं आं अंगुष्ठाभ्यां नमः। इं चं छं जं झं ञं ईं तर्जनीभ्यां नमः। उं टं ठं डं ढं णं ऊं मध्यमाभ्यां नमः। एं तं थं दं धं नं ऐं अनामिकाभ्यां नमः। ओं पं फं बं भं मं औं कनिष्ठिकाभ्यां नमः। अं यं रं लं वं शं षं सं हं ळं क्षं अः करतलकरपृष्ठाभ्यां नमः। एवं हृदयादिन्यासः। भूर्भुवस्सुवरोमिति दिग्बन्धः।

ध्यानम् – ओंकारीं तनुमात्मपञ्चमनिभां षट्चक्रसञ्चारिणीम्
ईडा पिङ्गळ मध्यवर्ति विलसद्ब्रह्माण्डमध्यस्थिताम्।
इन्दुर्बाणधरां धनुर्वरकरां पुष्पायुधां मोहिनीम्
तारापूर्णमुखीं भजे सुखकरीं मन्तर्महामातृकाम्॥

लमित्यादिपञ्चपूजा – विशुद्धचक्रे षोडशदळकमले अं नमः हंसः। आं नमः हंसः। इं नमः हंसः। ईं नमः हंसः। उं नमः हंसः। ऊं नमः हंसः। ऋं नमः हंसः। ॠं नमः हंसः। लृं नमः हंसः। ॡं नमः हंस। एं नमः हंसः। ऐं नमः हंसः। ओं नमः हंसः। औं नमः हंसः। अं नमः हंसः। अः नमः हंसः। एतत्प्रकारेण षोडशस्वरान् जप्त्वा। अनाहत चक्रे। कं नमः हंसः। खं नमः हंसः। गं नमः हंसः। घं नमः हंसः। ङं नमः हंसः। चं नमः हंसः। छं नमः हंसः। जं नमः हंसः। झं नमः हंसः। ञं नमः हंसः। टं नमः हंसः। ठं नमः हंसः। एवं कादिठान्तं जप्त्वा। मणिपूरक चक्रे। डं नमः हंसः। ढं नमः हंसः। णं नमः हंसः। तं नमः हंसः। थं नमः हंसः। दं नमः हंसः। धं नमः हंसः। नं नमः हंसः। पं नमः हंसः। फं नमः हंसः। स्वाधिष्ठानचक्रे - बं नमः हंसः। भं नमः हंसः। मं नमः हंसः। यं नमः

हंसः। रं नमः हंसः। लं नमः हंसः। मूलाधारचक्रे - वं नमः हंसः। शं नमः हंसः। षं नमः हंसः। सं नमः हंसः। आज्ञाचक्रे - हं नमः हंसः क्षं नमः हंसः। ब्रह्मरन्ध्र सहस्रदळकमले अकारादि क्षकारान्तं अनुलोम विलोमेन न्यसेत्।

अं नमः हंसः आं इं ईं उं ऊं ऋं ॠं ऌं ॡं एं ऐं ओं अं अः नमः हंसः। कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं ळं क्षं नमः हंसः। पुनरेवं विलोमेन न्यसेत्। हं सं षं शं वं लं रं यं म भं बं फं पं नं धं दं थं तं णं ढं डं ठं टं ञं झं जं छं चं ङं घं गं खं कं आं अं औं ओं ऐं एं ॡं ऌं ॠं ऋं ऊं उं ईं इं आं अं नमः हंसः। इत्यन्तर्मातृकान्यासः।

### अथ बहिर्मातृका

अस्य श्री बहिर्मातृका सरस्वतीन्यासमहामन्त्रस्य ब्रह्मा ऋषिः गायत्री-छन्दः बहिर्मातृका सरस्वतीदेवता हलोबीजानि स्वराश्शक्तयः। बिन्दवः कीलकं बहिर्मातृका सरस्वतीप्रसादसिद्ध्यर्थे जपे विनियोगः। अं कं खं गं घं ङं आं अंगुष्ठाभ्यां नमः। इं चं छं जं झं ञं ईं तर्जनीभ्यां नमः। उं टं ठं डं ढं णं ऊं मध्यमाभ्यां नमः। एं तं थं दं धं नं ऐं अनामिकाभ्यां नमः। ओं पं फं बं भं मं औं कनिष्ठिकाभ्यां नमः। अं यं रं लं वं शं षं सं हं ळं क्षं अः करतलकरपृष्ठाभ्यां नमः। एवं हृदयादिन्यासः। ओं भूर्भुवस्सुवरोमिति दिग्बन्धः।

ध्यानम् – पञ्चाशद्वर्णभेदै विहितवदनदोः, पादयुक्कुक्षिवक्षो
देशां भास्वत्कपर्दाकलितशशिकळामिन्दुकुन्दावदाताम्।
अक्षस्रक्कुम्भचिह्नामभयवरकरां क्लृप्तपद्मासनस्था –
मिच्छाकल्पामतुच्छस्तनजघनभरां भारतीं तां नमामि ॥

लघितिपञ्चपूजा – अं नमः (शिरसि)। आं नमः (मुखवृत्ते) इं नमः (दक्षिणनेत्रे)। ईं नमः (वामनेत्रे)। उं नमः (दक्षिणकर्णे)। ऊं नमः (वामकर्णे)। ऋं नमः (दक्षिणनासापुटे)। ॠं नमः (वामनासापुटे) लृं नमः (दक्षिणगण्डे)। ॡं नमः (वामगण्डे)। एं नमः (ऊर्ध्वोष्ठे)। ऐं नमः (अधरोष्ठे)। ओं नमः (ऊर्ध्वदन्तपङ्क्तौ)। औं नमः (अधोदन्तपङ्क्तौ)। अं नमः (शिरोवृत्तौ)। अः नमः (जिह्वाग्रे)। कं नमः (दक्षिणबाहुमूले)। खं नमः (तत्कूर्परे)। गं नमः (दक्षिणमणिबन्धे)। घं नमः (दक्षिणकरांगुलिमूले)। ङं नमः (दक्षिणकरांगुळ्यग्रे)। चं नमः (वामबाहुमूले)। छं नमः (तत्कूर्परे)। जं नमः (वाममणिबन्दे)। झं नमः (वामकरांगुळिमूले)। ञं नमः (वामकरांगुळ्यग्रे)। टं नमः (दक्षिणोरुमूले)। ठं नमः (दक्षिणजानुनि)। डं नमः (दक्षिणगुल्फे)। ढं नमः (दक्षिणपादांगुळिमूले) णं नमः (दक्षिणपादांगुळ्यग्रे)। तं नमः (वामोरुमूले)। थं नमः (वामजानुनि)। दं नमः (वामगुल्भे)। धं नमः वामपादांगुळिमूले)। नं नमः (वामपादांगुळ्यग्रे)। पं नमः (दक्षिणपार्श्वे)। फं नमः (वामपार्श्वे)। बं नमः (पृष्ठे)। भं नमः (नाभौ)। मं नमः (जठरे) यं नमः (हृदये)। रं नमः (दक्षिणस्कन्धे)। लं नमः (गळपृष्ठे)। वं नमः (वामस्कन्धे)। शं नमः (हृदयादि दक्षिणकरांगुळ्यन्तं)। षं नमः (हृदयादि वामकरांगुळ्यन्तं)। सं नमः (हृदयादि दक्षिणपादांगुळ्यन्तं)। हं नमः (हृदयादि वामपादांगुळ्यन्तं)। क्षं नमः (कट्यादि ब्रह्मरन्ध्रान्तं)। हसौः अं क्षं हसौः नमः त्रिव्यापकत्वेन सर्वाङ्गव्यापकं कुर्यात्। इति बहिर्मातृका।

## अथ प्राणप्रतिष्ठाविधिः

अस्य प्राणप्रतिष्ठामहामन्त्रस्य ब्रह्माविष्णुमहेश्वरा ऋषयः ऋग्यजुस्सामाथर्वणश्छन्धांसि। सकलसृष्टिस्थितिसंहारकारिणी प्राणशक्तिः परा देवता

आं बीजम् ह्रीं शक्तिः क्रों कीलकं मम प्राणप्रतिष्ठासिद्ध्यर्थे जपे विनियोगः। अं आं कं खं गं घं ङं आं पृथिव्यापस्तेजोवाय्वाकाशात्मने अंगुष्ठाभ्यां नमः। ह्रीं इं चं छं जं झं ञं ईं शब्दस्पर्शरूपरसगन्धात्मने तर्जनीभ्यां नमः। क्रों उं टं ठं डं ढं णं ऊं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने मध्यमाभ्यां नमः। आं एं तं थं दं धं नं ऐं वाक्पाणिपादपायूपस्थात्मने अनामिकाभ्यां नमः। ह्रीं ओं पं फं बं भं मं औं मनोबुद्धिचित्ताहङ्कारात्मने कनिष्ठिकाभ्यां नमः। क्रों अं यं रं लं वं शं षं सं हं ळं क्षं आः वचनादानगमनविसर्गानन्दात्मने करतलकरपृष्ठाभ्यां नमः। एवं हृदयादिन्यासः। भूर्भुवस्सुवरोमिति दिग्बन्धः।

ध्यानम् – रक्ताम्भोधिस्थपोतोल्लसदरुणसरोजाधिरूढाकराब्जैः
पाशं कोदण्डमिक्षूद्भव मळिगुण मप्यंकुशं पञ्चबाणान्।
बिभ्राणासृक्कपालं त्रिणयनसहिता पीनवक्षोरुहाढ्या
देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परा नः॥

असुनीते पुनरस्मासु चक्षुः पुनः प्राणमिह नो देहि भोगम्।
ज्योक्पश्येम सूर्यमुच्चरन्त मनुमते मृडयान स्वस्ति॥

आवाहिताभव-एवं त्रिः इति प्राणप्रतिष्ठाविधि स्समाप्तः।

## अथ प्रातस्सन्ध्याजपविधिः

ओमित्येकाक्षरं ब्रह्म अग्निर्देवता ब्रह्म इत्यार्षं गायत्रं चन्दं परमात्मं सरूपं सायुज्यं विनियोगः।

ओं आयातु वरदा देवि अक्षरं ब्रह्मसम्मितम्।
गायत्रीं छन्दसां मातेदं ब्रह्म जुषस्व मे॥

यदह्नात्कुरुते पापं तदह्नात्प्रतिमुच्यते
यद्रात्र्यात्कुरुते पापं तद्रात्र्यात्प्रतिमुच्यते
सर्ववर्णे महादेवि सन्ध्याविद्ये सरस्वति ।।

ओजोसि सहोसि बलमसि भ्राजोसि देवानान्धामनामासि विश्वमसि विश्वायुः सर्वमसि सर्वायुरभिभूरों गायत्री मावाहयामि सावित्री मावाहयामि सरस्वती मावाहयामि छन्दऋषीनावाहयामि श्रियमावाहयामि गायत्र्या गायत्रीच्छन्दो विश्वामित्रऋषिः सविता देवता अग्निर्मुखम् ब्रह्मा शिरः विष्णुर्हृदयम् । रुद्रश्शिखा पृथिवी योनिः प्राणापानव्यानोदान समाना सप्राणाश्वेतवर्णा साङ्ख्यायन सगोत्रा गायत्री चतुर्विंश‍् शत्यक्षरा त्रिपदा षट्कुक्षिः पञ्चशीर्षोपनयने विनियोगः । ओं भूः ओं भुवः ओग‍ं सुवः ओं महः ओं जनः ओं तपः ओग‍ं सत्यं ओं तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् । ओमापो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवस्सुवरोम् । मम उपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रातस्सन्ध्या यथाशक्ति गायत्रीमन्त्रजपं करिष्ये । ओं तत्सवितुः अंगुष्ठाभ्यां नमः । वरेण्यं तर्जनीभ्यां नमः । भर्गो देवस्य मध्यमाभ्यां नमः । धीमहि अनामिकाभ्यां नमः । धियो यो नः कनिष्ठिकाभ्यां नमः । प्रचोदयात् करतलकरपृष्ठाभ्यां नमः । एवं हृदयादिन्यासः भूर्भुवस्सुवरोमिति दिग्बन्धः ।

ध्यानम् – मुक्ताविद्रुमहेमनीलधवळच्छायै र्मुखैस्त्रीक्षणै
र्युक्ता मिन्दुनिबद्धरत्नमकुटां तत्वार्थवर्णात्मिकाम् ।
गायत्रीं वरदाभयांकुशकशाश्शुभ्रं कपालं गदां
शङ्खं चक्रमथारविन्दयुगळं हस्तैर्वहन्तीं भजे ।।

यो देवस्सवितास्माकं धियो धर्मादिगोचराः । प्रेरयेत्तस्य यद्भर्गस्तद्वरेण्य मुपास्महे ।

## शापविमोचनमन्त्राः

ओं नमो भगवति महादेवि परब्रह्मस्वरूपिणि गायत्री शापविमोचनं कुरु कुरु स्वाहा । यद्वेदा गायत्री ब्रह्मेत्युपासीत यद्रूपा ब्रह्मविदो विदुः तां पश्यन्ति धीरा स्सुमनसा वाचमक्रतः तेजनासोमृतत्वं भजन्ते । ब्रह्मशापा द्विमुक्ता भव । १

तत्पापानिश्चाङ्गीश्वग्निभूतांधिया मग्निसन्धायन्ति विष्णुरायुधान् ब्रह्म-रूपां सावित्री मुपासीत । तेजनासोमृतत्वं भजन्ते वसिष्ठशापा-द्विमुक्ता भव । २

गायत्रीं भजाम्यग्निमुखीं । विश्वामित्रार्चायद्दुद्भूवा । देवता चक्रिरे विश्वसृष्टिः । तां कल्याणीमिष्टकरीं प्रपद्ये । यन्मुखनिसृता वेदा गायत्री । तां पश्यन्ति धीरा स्सुमनसा वाचमक्रतः । तेजनासोमृतत्वं भजन्ते । विश्वामित्रशापाद्विमुक्ता भव । ३

अस्माक इत्यस्य मन्त्रस्य ब्रह्मा ऋषिः अनुष्टुप्छन्दः सूर्यो देवता गोतमशापविमोचने विनियोगः । अस्माकमुतमंगळधीश्रवोसि देव सूर्यः परिषद्यः । तां पश्यन्ति धीरा स्सुमनसा वाच मक्रतः । तेजनासोमृतत्वं भजन्ते । गोतमशापा द्विमुक्ता भव । ४

ओष्ठाभिधाना नकुलीदन्तैः परिवृतापविः सर्वस्यै वाच" ईशाना चारु मामिह वादयेत् । तां पश्यन्ति धीरास्सुमनसा वाचमक्रत। तेजनासोऽमृतत्वं भजन्ते । नकुलीशापा द्विमुक्ता भव । ५

सुमुखं सम्पुटं चैव विततं विस्तृतं तथा । द्विमुखं त्रिमुखं चैव चतुः-पञ्चमुखोन्नतं षण्मुखाधोमुखीचैव व्यापकाञ्जलिकं तथा ।

शकटं यमपाशं च ग्रथितं सन्मुखोन्मुखम् ।
प्रलम्बं मुष्टिकं चैव मत्स्यः कूर्मवराहकम् ।
सिंहाक्रान्तं महाक्रान्त मुद्गरं पल्लवं तथा ।
एते मुद्राः प्रयोक्तव्याः गायत्र्यास्सुप्रकीर्तिताः ।
शतकृत्वा तु गायत्री दशकृत्वा तुरीयकम् ।
अन्ते चायुतगायत्री अदौ शापविमोचनम् ॥
जपादौ पाशबीजं च जपान्तेकुशबीजकम् ।
जपमध्ये तु मायायाः तज्जपस्सफलं भवेत् ॥

जपादौ आं जपमध्ये ह्रीं जपान्ते क्रोम् । इति बीजत्रयं तत्तत्काले जपेत् । पञ्चपूजां कृत्वा ।

तदनन्तरं यथाशक्ति गायत्रीजपः । ओं तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् । इति षोडशवारम् ।

ओं ४ ओं भूः ओं भुवः ओगं सुवः ओं महः ओं जनः ओं तपः ओगं सत्यम् श्रीं ह्रीं क्लीं ऐं सौः ओं ह्रीं श्रीं तत्सवितुर्वरेण्यं क ५ भर्गो देवस्य धीमहि ह ६ धियो यो नः प्रचोदयात् । स ४ परोरजसि सावदों हसकल हसकहल सकलह्रीं सौः ऐं क्लीं ह्रीं श्रीं ओमापो ज्योतीरसोऽमृतं ब्रह्म भूर्भव-स्सुवरोम् । ऐं क्लीं सौः सौः क्लीं ऐं । अनुलोमविलोमेन षोडशवारम् । परो-रजसि सावदोम् । दोंवसासिजररोप इति षोडशवारम् । ओं नमो नारायणाय इति षोडशवारम् । अन्ते अयुतगायत्रीजपः । ओं भूर्भुवस्सुवर्म-हर्जनस्तपस्सत्यं तद्ब्रह्म तदाप आपो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवस्सुवरोम् । अयं अयुत गायत्री मनुः इति षोडशवारम् जप्त्वा दिग्विमोचनध्यान पञ्च-पूजान्तं कुर्यात् । सुरभिर्ज्ञानचक्रे च योनिः कूर्मोऽथ पङ्कजम् । लिङ्गं निर्वाणकं चैव अष्टौ मुद्राः प्रकीर्तिताः ।

## अथ उपस्थानम्

ओं मित्रस्य चर्षिणी धृत श्रवो देवस्यसानसि सत्यं चित्रश्रवस्तमं मित्रोजनान् यातयति प्रजानन्मित्रोदाधारपृथिवीमुतद्याम् । मित्रः कृष्टीरनिमिषाभिचष्टे सत्याय हव्यं घृतवद्विधेम । प्रसमित्रमर्त्यो अस्तु प्रयस्वान्यस्त आदित्य शिक्षति व्रतेन । न हन्यते न जीयते त्वोतोनैनमगं्हो अश्नोत्यन्तितो न दूरात् । ओं नमः प्राच्यैदिशे याश्चदेवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमोनमो । दक्षिणायै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नमः । प्रतीच्यै दिशे याश्च देवता एतस्यां प्रतिवसन्येताभ्यश्च नमो नम । उदीच्यै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नम । ऊर्ध्वायै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नमोऽधरायै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नमोवान्तरायै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नमो । गङ्गायमुनयो र्मध्ये ये वसन्ति ते मे प्रसन्नात्मानश्चिरञ्जीवितं वर्धयन्ति नमो । गङ्गायमुनयो र्मुनिभ्यश्च नमः । सन्ध्यायै नमः सावित्र्यै नमः गायत्र्यै नमः सरस्वत्यै नमः सर्वाभ्यो देवताभ्यो नमः देवेभ्यो नमः ऋषिभ्यो नमः मुनिभ्यो नमः गुरुभ्यो नमः मातृभ्यो नमः पितृभ्यो नमः कामोकार्षीन्मन्युरकार्षीन्नमो नमः पृथिव्यप्तेजोवायुराकाशात् ॐ नमो भगवते वासुदेवाय यागं् सदा सर्वभूतानि चराणि स्थावराणि च सायं प्रातर्नमस्यन्ति सामा सन्ध्याभिरक्षतु । शिवाय विष्णुरूपाय शिवरूपाय विष्णवे, शिवस्य हृदयं विष्णुर्विष्णोश्च हृदयं शिवः । यथा शिवमयो विष्णुः एवं विष्णुमय शिवः, यथान्तरं न पश्यामि तथा मे स्वस्तिरायुषि ।। नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च । जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ।। आकाशात्पतितं तोयं यथा गच्छति सागरम् । सर्वदेवनमस्कारः केशवं प्रति गच्छति ।। श्रीकेशवं प्रति गच्छत्योन्नम इति । उत्तमे शिखरे देवि भूम्यां पर्वतमूर्धनि । ब्राह्मणेभ्यो ह्यनुज्ञाता गच्छ देवि यथासुखम् ।। स्तुतो मया वेदमाता प्रचोदयन्ती पवने द्विजाता, आयुः पृथिव्यां द्रविणं ब्रह्मवर्चसम् । मह्यं दत्वा प्रयातं ब्रह्मलोकम् ।। नमो स्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षि–

शिरोरुबाहवे। सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः ।। इदं द्यावापृथिवी सत्यमस्तु पितर्मातर्यदिहोपब्रुवेवां । भूतं देवाना मवमे अवोभिः विद्यामेषं वृजिनं जीरदानुम् । सर्वदेवेषु यत्पुण्यं सर्वतीर्थेषु यत्फलम् । तत्फलं पुरुष आप्नोति स्तुत्वा देवं जनार्दनम । स्तुत्वा देवं जनार्दन ॐ नम इति । वासनाद्वासुदेवस्य वासितं ते जगत्रयम् । सर्वभूतनिवासोसि वासुदेव नमोस्तु ते । चतुस्सागरपर्यन्तं गोब्राह्मणेभ्य श्शुभं भवतु – अहं भो अभिवादये – आचम्य कायेन वाचा मनसेन्द्रियैर्वा बुध्यात्मना वा प्रकृतेस्स्वभावात् । करोमि यद्य-त्सकलं परस्मै नारायणायेति समर्पयामि ।।

सर्वं श्रीकृष्णार्पणमस्तु । श्रीहरिवासुदेवार्पणमस्तु ।

प्रातस्सन्ध्यावन्दनं सम्पूर्णम् ।

## अथ तान्त्रिकप्रातस्सन्ध्याविधिः

मूलेन आचम्य - त्रिः प्राणानायम्य - मम उपात्तदुरितक्षयद्वारा श्री पर-मेश्वरप्रीत्यर्थं श्रीमहात्रिपुरसुन्दरी राजराजेश्वरी परदेवता मुद्दिश्य श्री परदेवता प्रीत्यर्थं प्रातस्सन्ध्या मुपासिष्ये । देवीमानरीत्या सङ्कल्प्य । श्रीनाथादिगुरुत्रयं गणपति पीठत्रयं भैरवम् । सिद्धौघं वटुकत्रयं पदयुग दूतीक्रमं मण्डलम् । वीरा-द्व्यष्टचतुष्कषष्टिनवकं वीरावळीपञ्चकम् । श्रीमन्मालनिमन्त्रराजसहितं वन्दे गुरोर्मण्डलम् । गुरुपादुकामनुमुच्चार्य स्तम्बनचतुरश्रमत्स्यगोखुरयोन्याख्याभिः पञ्चमुद्राभिः श्रीगुरुं प्रणम्य मूलमन्त्रं ऋष्यादि ध्यानान्तं विधाय स्वपुरतः धेनुमुद्रया जलममृतीकृत्य मूलविद्ययाष्टवारमभिमन्त्र्य तेन जलेन मार्जनं कुर्यात् । तथाहि –

अ नमः आं नमः इं नमः ईं नमः उ नमः ऊं नमः ऋं नमः ॠं नमः लृं नमः लॄं नमः ए नमः ऐं नमः ओं नमः औं नमः अं नमः अः नमः इति मार्जयित्वा दक्षिणहस्तेन जलमादाय कं नमः खं नमः गं नमः

घं नमः ङं नमः चं नमः छं नमः जं नमः झं नमः ञं नमः टं नमः ठं नमः डं नमः ढं नमः णं नमः तं नमः थं नमः दं नमः धं नमः नं नमः पं नमः फं नमः बं नमः भं नमः मं नमः क ५ ह ६ स ४ इति जलं पीत्वा यं नमः रं नमः लं नमः वं नमः शं नमः षं नमः सं नमः हं नमः क ५ ह ६ स ४ इति शिरसि संप्रोक्ष्य सूर्यमण्डले देवीं यथोक्तरूपां ध्यायेत् ।

## ध्यानम्

सकुंकुमविलेपनामळिकचुम्बिकस्तूरिकाम्
समन्दहसितेक्षणां सशरचापपाशांकुशाम् ।
अशेषजनमोहिनीमरुणमाल्यभूषांबरां
जपाकुसुमभासुरां जपविधौ स्मरेदम्बिकाम् ॥

चतुर्भुजे चन्द्रकळावतंसे कुचोन्नते कुंकुमरागशोणे ।
पुण्ड्रेक्षुपाशांकुशपुष्पबाणहस्ते नमस्ते जगदेकमातः ॥

दक्षिणहस्ते जलमादाय - लं वं रं यं हं इति त्रिरभिमन्त्र्य । क ५ ह ६ स ४ इति च त्रिरभिमन्त्र्य तज्जलबिन्दुभिः वामांगुष्टानामिकाभ्यां क ५ ह ६ स ४ इति स्वशिरसि त्रिः प्रोक्ष्य । अवशिष्टजलं वामहस्ते विधाय तेजोरूपं तज्जलं कृष्णवर्णं विभाव्य पिङ्गळया बहिर्निर्गतं मत्वा तज्जलं पुनः दक्षिणहस्ते कृत्वा स्ववामभागे ज्वलद्वज्रशिलां ध्यात्वा ओं ३ क्लीं पशुहुं फट् इति तस्यां शिलायामास्फाल्य हस्तौ प्रक्षाळ्य मूलविद्यया जलमादाय क १५ प्रवहन्नाड्या सहस्रदळकमलगतपरमामृतेनैकीभूतं विभाव्य राजदण्डविवरान्नेत्रमार्गेण निर्गमय्य तज्जलं वामकरे विधाय तेन जलेन अमृतमालिनी स्वाहेति मन्त्रेण सर्वांगुळिभिः स्वशिरसि त्रिः प्रोक्ष्य । ओं ऐं ह्रीं श्रीं क ५ आत्मतत्वं शोधयामि स्वाहा । ओं ४ ह ६ विद्यातत्वं शोधयामि

स्वाहा। ओं ४ स ४ शिवतत्वं शोधयामि स्वाहा। ओं ४ स ४ शिवतत्वं शोधयामि स्वाहा। ओं ४ ह ६ विद्यातत्वं शोधयामि स्वाहा। ओं ४ क ५ आत्मतत्वं शोधयामि स्वाहा। ओं ४ क १५ सर्वतत्वं शोधयामि स्वाहा। इति च त्रिधा एवं नवधा जलं पिबेत्। अर्घ्यमञ्जलिनादायोत्थाय क ५ वाग्भवेश्वरी विद्महे ह ६ कामेश्वरी च धीमहि स ४ तन्नश्शक्तिः प्रचोदयात्। श्री महात्रिपुरसुन्दरी श्रीपादुकायै एषोर्घ्यं स्वाहा :

इति त्रिरर्घ्यं दत्वा। ह्रां ह्रीं स श्रीसूर्य एष तेर्घ्यं स्वाहा इति सूर्याभिमुखमर्घ्याञ्जलित्रयं दत्वा मूलविद्यया देवीं त्रिसन्तर्प्य क १५ श्री महात्रिपुरसुन्दरी श्रीपादुकां तर्पयामि। ह्रां ह्रीं स श्रीसूर्यं तर्पयामि नमः। इति त्रिस्सन्तर्प्य। मूलाधारे क ५ तटित्कोटिसमप्रभ मूलादि ब्रह्मरन्ध्रान्तं संचिन्त्य तत्तेजः सुषुम्नावर्त्मना ब्रह्मरन्ध्रं नीत्वा वहन्नासाध्वना आकाशस्थ वह्निमण्डले समावाह्य तत्तेजसोद्भतां वाग्भवेश्वरीं ध्यायेत्। तद्यथा पीतांबरां पीतस्रग्विभूषानुलेपनाम्। तटित्कोटिसमाभासां बालामक्षस्रगुज्वलाम्। पुस्ताभयकराम्भोजां वह्निपीठे निषेदुषीम्। वाग्मिनीं वाग्भवोद्भूतां त्रीक्षणां सुस्मितां स्मरेत्। इत्याकाशस्थ वह्निमण्डले ध्यात्वा क ५ त्रिपुरा वागीश्वरी त्रिपादुकां पूजयामि नमः - इति गन्धपुष्पाक्षतैस्त्रि सम्पूज्य पुनः वक्ष्यमाण वाग्भवगायत्रीमुच्चार्य ऐं त्रिपुरादेवी विद्महे वाग्भवेश्वरी धीमहि तन्नो मुक्तिः प्रचोदयात्।

त्रिपुरा वागीश्वरी श्रीपादुकायै अर्घ्यं कल्पयामि स्वाहा इति त्रिरर्घ्याञ्जलि मुत्क्षिप्य पुनः प्रथमकूटमुच्चार्य क ५ त्रिपुर वागीश्वरी श्रीपादुकां तर्पयामि नः इति त्रिस्सन्तर्प्य गुरुपादुका प्राणायाम त्रयं च कृत्वा पुनः ऋष्यादि करषडङ्गन्यासं कृत्वा ओं ४ क १५ दिन नित्यविद्याहसः अं नमः (शिरसि) ओं ४ क १५ दिननित्यविद्याहसः आं नमः (मुखवृत्ते) ओं ४ क १५ दिननित्यविद्याहंसः इं नमः (दक्षिणनेत्रे) ओं ४ क १५ दिन-

नित्यविद्याहंसः इँ नमः (वामनेत्रे) ओं ४ क १५ दिननित्यविद्याहंसः उं नमः (दक्षिणकर्णे) ओं ४ क १५ दिननित्यविद्याहंसः ऊं नमः (वामकर्णे) ओं ४ क १५ दिननित्यविद्याहंसः ऋं नमः (दक्षिणनासापुटे) ओं ४ क १५ दिननित्यविद्याहंसः ॠं नमः (वामनासापुटे) ओं ४ क १५ दिननित्य विद्याहंसः ऌं नमः (दक्षिणगण्डे) ओं ४ क १५ दिननित्यविद्याहंसः ॡं नमः (वामगण्डे) ओं ४ क १५ दिननित्यविद्याहंसः एं नमः (ऊर्ध्वोष्ठे) ॐ ४ क १५ दिननित्यविद्याहंसः ऐं नमः (अधरोष्ठे) ॐ ४ क १५ दिननित्य-विद्याहंसः ॐ नमः (ऊर्ध्व दन्तपङ्क्तौ) ॐ ४ क १५ दिवनित्यविद्याहंसः औं नमः (अधो दन्तदङ्क्तौ) ॐ ४ क १५ दिननित्यविद्याहंसः अं नमः (शिरोवृत्ते) ॐ ४ क १५ दिननित्यविद्याहंसः अः नमः (जिह्वाग्रे) ॐ ४ क १५ दिननित्यविद्याहंसः कं नमः (दक्षिणबाहुमूले) ॐ ४ क १५ दिननित्य-विद्याहंसः खं नमः (तत्कूर्परे) ॐ ४ क १५ दिननित्यविद्याहंसः गं नमः (दक्षिणमणिबन्दे) ॐ ४ क १५ दिननित्यविद्याहंसः घं नमः (दक्षिण-(करांगुळिमूले) ॐ ४ क १५ दिननित्यविद्याहंसः ङं नमः (दक्षिणकरांगुळ्यग्रे) ॐ ४ क १५ दिननित्यविद्याहंसः चं नमः (वामबाहुमूले) ॐ ४ क १५ दिननित्यविद्याहंसः छं नमः (तत्कूर्परे) ॐ ४ क १५ दिननित्यविद्या-हंसः जं नमः (वाममणिबन्धे) ॐ ४ क १५ दिननित्यविद्याहंसः झं नमः (वामकरांगुळिमूले) ॐ ४ क १५ दिननित्यविद्याहंसः ञं नमः (वाम करांगुळ्यग्रे) ॐ ४ क १५ दिननित्यविद्याहंसः टं नमः (दक्षिणोरुमूले) ॐ ४ क ५ दिननित्यविद्याहंसः ठं नमः (दक्षिणजानुनि) ॐ ४ क १५ दिननित्यविद्याहंसः डं नमः (दक्षिणगुल्बे) ॐ ४ क १५ दिननित्यविद्या-हंसः ढं नमः (दक्षिण पादांगुळिमूले) ॐ ४ क १५ दिननित्यविद्याहंसः णं नमः (दक्षिणपादांगुळ्यग्रे) ॐ ४ क १५ दिननित्यविद्याहंसः तं नमः (वामोरुमूले) ॐ ४ क १५ दिननित्यविद्याहंसः थं नमः (वामजानुनि) ॐ ४ क १५ दिननित्यविद्याहंसः दं नमः (वामगुल्बे) ॐ ४ क १५ दिननित्य-विद्याहंसः धं नमः (वामपदांगुळिमूले) ॐ ४ क १५ दिननित्यविद्याहंसः

नं नमः (वामपादांगुळ्यग्रे) ॐ४ क १५ दिननित्यविद्याहंसः पं नमः (दक्षिणपार्श्वे) ॐ४ क १५ दिननित्यविद्याहंसः फं नमः (वामपार्श्वे) ॐ४ क १५ दिननित्यविद्याहंसः बं नमः (पृष्ठे) ॐ४ क १५ दिननित्यविद्याहंसः भं नमः (नाभौ) ॐ४ क १५ दिननित्यविद्याहंसः मं नमः (जठरे) ॐ४ क १५ दिननित्यविद्याहंसः यं नमः (हृदये) ॐ४ क १५ दिननित्यविद्याहंसः रं नमः (दक्षिणस्कन्धे) ॐ४ क १५ दिननित्यविद्याहंसः लं नमः (गळपृष्ठे) ॐ४ क १५ दिननित्यविद्याहंसः वं नमः (वामस्कन्धे) ॐ४ क १५ दिननित्यविद्याहंसः शं नमः (हृदयादि दक्षिणकरांगुळ्यन्तं) ॐ४ क १५ दिननित्यविद्याहंसः षं नमः (हृदयादि वामकरांगुळ्यतं) ॐ४ क १५ दिननित्यविद्याहंसः सं नमः (हृदयादि दक्षिणपादांगुळ्यन्तं) ॐ४ क १५ दिननित्यविद्याहंसः हं नमः (हृदयादि वामपादांगुळ्यन्तं) ॐ४ क १५ दिननित्यविद्याहंसः ळं नमः (कट्यादिपादांगुळ्यन्तं) ॐ४ क १५ दिननित्यविद्याहंसः क्षं नमः (कट्यादि ब्रह्म रन्ध्रान्तं) ॐ४ क १५ दिननित्यविद्याहंसः क्षं हसौः नमः इति त्रिर्व्यापकत्वेन सर्वाङ्गव्यापकं कुर्यात् ।

ओं ४ अ १५ वाग्भवेश्वरी विद्महे ह ६ कामेश्वरी च धीमहि स ४ तन्नश्शक्तिः प्रचोदयात् इति तुरीयगायत्रीं यथाशक्ति जपेत् । सा यथा –

ऐं त्रिपुरादेवी विद्महे वाग्भवेश्वरी धीमहि तन्नो मुक्तिः प्रचोदयात् इति यथाशक्ति जपेत् । ततो मूलविद्यां जपेत् ।

प्रातर्मूलाधारगते कमले वह्निमण्डले
वाग्बीजरूपां नित्यां तां विद्युत्पटलभासुराम्
पुष्पबाणेक्षुकोदण्डपाशांकुशलसत्कराम्
स्वेच्छागृहीतवपुषीं युगनित्याक्षरात्मिकाम्
घटिकावरणोपेतां परितः प्राञ्जलीपथ

ज्ञानमुद्रावरकरान् वाग्भवोपास्तितत्परान्
नवनाथान् स्मरेन्मूलपङ्कजे योनिमण्डले ।। इति ध्यात्वा



## अथ नाथपारायणम्

ओं ४ क १५ दिननित्यविद्याहंसः अं आं इं ईं उं ऊं ऋं ॠं ह्रीं श्रीं अं प्रकाशानन्दनाथश्री । ओं ४ क १५ दिननित्यविद्याहंसः लुं लूं एं ऐं ओं औं अं अः ह्रीं श्रीं लुं विमर्शानन्दनाथश्री । ओं ४ क १५ दिननित्यविद्याहंसः कं खं गं घं जं ह्रीं श्रीं कं आनन्दनाथश्री । ओं ४ क १५ दिननित्यविद्याहंसः चं छं जं झं ञं ह्रीं श्रीं चं ज्ञानानन्दनाथश्री । ओं ४ क १५ दिननित्यविद्याहंसः टं ठं डं ढं णं ह्रीं श्रीं टं सत्यानन्दनाथश्री । ओं ४ क १५ दिननित्यविद्याहंसः तं थं दं धं नं ह्रीं श्रीं तं पूर्णानन्दनाथश्री । ओं ४ क १५ दिननित्यविद्याहंसः पं फं बं भं मं ह्रीं श्रीं पं स्वभावानन्दनाथश्री । ओं ४ क १५ दिननित्यविद्याहंसः यं रं लं वं शं ह्रीं श्रीं यं प्रतिभानन्दनाथश्री । ओं ४ क १५ दिननित्यविद्याहंसः षं सं हं ळं क्षं ह्रीं श्रीं षं सुभगानन्दनाथश्री । इति नाथपारायणम् ।।

## अथ कालनित्याजपः

ओं ४ क १५ दिननित्यविद्याहंसः अं शिव । ओं ४ क १५ दिननित्यविद्याहंसः कं शक्तिः । ओं ४ क १५ दिननित्यविदयाहंसः खं सदाशिव । ओं ४ क १५ दिननित्यविदयाहंसः गं ईश्वर । ओं ४ क १५ दिननित्यविदयाहंसः घं शुद्धविदया । ओं ४ क १५ दिननित्यविदयाहंसः ङं माया । ओं ४ क १५ दिननित्यविदयाहंसः चं कल । ओं ४ क १५ दिननित्यविदयाहंसः छं विदया । ओं ४ क १५ दिननित्यविदयाहंसः जं राग । ओं ४ क १५ दिननित्यविदयाहंसः झं काल । ओं ४ क १५ दिननित्यविदयाहंसः ञं

नियति । ओं ४ क १५ दिननित्यविद्याहंसः टं पुरुष । ओं ४ क १५ दिननित्यविद्याहंसः ठं प्रकृति । ओं ४ क १५ दिननित्यविद्याहंसः डं अहंकार । ओं ४ क १५ दिननित्यविद्याहंसः ढं बुद्धि । ओं क १५ दिननित्यविद्याहंसः णं मनः । ओं ४ क १५ दिननित्यविद्याहंसः तं श्रोत्र । ओं ४ क १५ दिननित्यविद्याहंसः थं त्वक् । ओं ४ क १५ दिननित्यविद्याहंसः दं चक्षुः । ओं ४ क १५ दिननित्यविद्याहंसः धं जिह्व । ओं ४ क १५ दिननित्यविद्याहंसः नं घ्राण । ओं ४ क १५ दिननित्यविद्याहंसः पं वाक् । ओं ४ क १५ दिननित्यविद्याहंसः फं पाणि । ओं ४ क १५ दिननित्यविद्याहंसः बं पाद । ओं ४ क १५ दिननित्यविद्याहंसः भं पायु । ओं ४ क १५ दिननित्यविद्याहंसः मं उपस्थ । ॐ ४ क १५ दिननित्यविद्याहंसः यं शब्द । ॐ ४ क १५ दिननित्यविद्याहंसः रं स्पर्श । ॐ ४ क १५ दिननित्यविद्याहंसः लं रूप । ॐ ४ क १५ दिननित्यविद्याहंसः वं रस । ॐ ४ क १५ दिननित्यविद्याहंसः शं गन्ध । ॐ ४ क १५ दिननित्यविद्याहंसः षं आकाश । ॐ ४ क १५ दिननित्यविद्याहंसः सं वायु । ॐ ४ क १५ दिन नित्यविद्याहंसः हं वह्नि । ॐ ४ क १५ दिननित्यविद्याहंसः ळं अप् । ॐ ४ क १५ दिननित्यविद्याहंसः क्षं पृथिवि । इति कालनित्याजपः । क १५ इति यथाशक्ति जपः । क १५ इति यथाशक्तिजपः दिग्विमोकः । गुरुपादुका मुच्चार्य ।

## अथ घटिकापारायणम्

ॐ ४ क १५ दिननित्यविद्याहंसः अकारघटिका । ॐ ४ क १५ दिननित्यविद्याहंसः आकारघटिका । ॐ ४ क १५ दिननित्यविद्याहंसः इकारघटिका । ॐ ४ क १५ दिननित्यविद्याहंसः ईकारघटिका । ॐ ४ क १५ दिननित्यविद्याहंसः उकारघटिका । ॐ ४ क १५ दिननित्यविद्याहंसः ऊकार घटिका । ॐ ४ क १५ दिननित्यविद्याहंसः ऋकारघटिका । ॐ ४ क १५ दिननित्यविद्याहंसः ॠकारघटिका । ॐ ४ क १५ दिननित्यविद्याहंसः ऌकार-

घटिका। ॐ ४ क १५ दिननित्यविद्याहंसः ॡकारघटिका। ॐ ४ क १५ दिननित्यविद्याहंसः एकारघटिका। ॐ ४ क १५ दिननित्यविद्याहंसः ऐकारघटिका। ॐ ४ क १५ दिननित्यविद्याहंसः ओकारघटिका। ॐ ४ क १५ दिननित्यविद्याहंसः औकारघटिका। ॐ ४ क १५ दिननित्यविद्याहंसः अंकारघटिका। ॐ ४ क १५ दिननित्यविद्याहंसः ककारघटिका। ॐ ४ क १५ दिननित्यविद्याहंसः खकारघटिका। ॐ ४ क १५ दिननित्यविद्याहंसः गकारघटिका। ॐ ४ क १५ दिननित्यविद्याहंसः घकारघटिका। ॐ ४ क १५ दिननित्यविद्याहंसः ङकारघटिका। ॐ ४ क १५ दिननित्यविद्याहंसः चकारघटिका। ॐ ४ क १५ दिननित्यविद्याहंसः छकारघटिका। ॐ ४ क १५ दिननित्यविद्याहंसः जकारघटिका। ॐ ४ क १५ दिननित्यविद्याहंसः झकारघटिका। ॐ ४ क १५ दिननित्यविद्याहंसः ञकारघटिका। ॐ ४ क १५ दिननित्यविद्याहंसः टकारघटिका। ॐ ४ क १५ दिननित्यविद्याहंसः ठकारघटिका। ओं ४ क १५ दिननित्यविद्याहंसः डकारघटिका। ॐ ४ क १५ दिननित्यविद्याहंसः ढकारघटिका। ॐ ४ क १५ दिननित्यविद्याहंसः णकारघटिका। ॐ ४ क १५ दनित्यविद्याहंसः तकारघटिका। ॐ ४ क १५ दिननित्यविद्याहंसः थकारघटिका। ॐ ४ क १५ दिननित्यविद्याहंसः दकारघटिका। ॐ ४ क १५ दिननित्यविद्याहंसः धकारघटिका। ओं ४ क १५ दिननित्यविद्याहंसः नकारघटिका। ॐ ४ क १५ दिननित्यविद्याहंसः पकारघटिका। ॐ ४ क १५ दिननित्यविद्याहंसः फकारघटिका। ॐ ४ क १५ दिननित्यविद्याहंसः बकारघटिका। ॐ ४ क १५ दिननित्यविद्याहंसः भकारघटिका। ॐ ४ क १५ दिननित्यविद्याहंसः मकारघटिका। ॐ ४ क १५ दिननित्यविद्याहंसः यकारघटिका। ॐ ४ क १५ दिवनिन्यविद्याहंसः र कारघटिका। ॐ ४ क १५ दिननित्यविद्याहंसः लकारघटिका। ॐ ४ क १५ दिननित्यविद्याहंसः वकारघटिका। ॐ ४ क १५ दिननित्यविद्याहंसः शकारघटिका। ॐ ४ क १५ दिननित्यविद्याहंसः षकारघटिका। ॐ ४ क १५ दिननित्यविद्याहंसः सकारघटिका। ओं ४

क १५ दिननित्यविद्याहंसः हकारघटिका । ओं ४ क १५ दिननित्यविद्याहंसः ळकारघटिका । ओं ४ क १५ दिननित्यविद्याहंसः क्षकारघटिका ।

इति घटिकापारायणम् ।

## अथ उपस्थानम्

ये चिन्तयन्त्यरुणमण्डलमध्यवर्तिरूपं तवाम्ब नवयावकपङ्करम्यम् ।
तेषां सदैव कुसुमायुधबाणभिन्नवक्षस्थला मृगदृशो वशगा भवन्ति ॥

इत्युपस्थाय - नमस्कृत्य -

मित्रोसि वरुणोसि समहं विश्वै देवैः क्षत्रस्य नाभिरसि क्षत्रस्य योनिरसि स्योनामासीद सुषदा मासीद मात्वाहिगुम् सीन्माहीगं सीन्निषसाद धृतव्रतो वरुणः पस्त्यास्वासाम्राज्याय सुक्रतुर्ब्रह्मां ३ त्वगुम् राजन् ब्रह्मासि सवितासि सत्यसवो ब्रह्मा त्वगुम् राजन् ब्रह्मासीन्द्रोसि सत्यौजाः ब्रह्मां त्वगुम् राजन् ब्रह्मासि मित्रोसि सुशेवो ब्रह्मां त्वगुम् राजन्ब्रह्मासि वरुणोसि सत्यधर्मेन्द्रस्य वज्रोसि वार्त्रघ्नस्तेन मे रथ्यदिशोभ्ययगं राजा भूत्सुश्लोकां सुमङ्गलां ४ सत्य राजान् इति मन्त्रमुच्चार्य । नमस्ते मङ्गळावासे सर्वज्ञे करुणानिधे । ब्रह्मपत्नि नमस्तेस्तु मम पाशं च नाशय । नमः प्राच्यैदिशे देवि प्रागधिष्ठानदेवते । वागीश्वरि नमस्तेस्तु धियो यो नः प्रचोदयात् । दक्षिणायै दिशे देवि ब्रह्मविद्ये सरस्वति । विष्णुपत्नि नमस्तेस्तु मम पाशं च नाशय । दक्षिणादिगधिष्ठात्रि-धियो यो नः प्रचोदयात् । पश्चिमायै दिशे देवि ब्रह्मविद्ये सरस्वति । अन्नपूर्णे नमस्तेस्तु मम पाशं च नाशय । रुद्रपत्नि नमस्तेस्तु धियो यो नः प्रचोदयात् महातुरीये सर्वज्ञे सर्वलोकदयापरे । उदीच्यै च दिशे देवि शिवपत्नि नमोस्तु ते । उदग्दिशासमारूढे मम पाशं च नाशय । प्रसीद वरदे देवि धियो यो नः प्रचोदयात् । व्योमदेशाद्यधिष्ठाने गगनान्तरचारिणि । प्रसीद वरदे देवि मम पाशं च नाशय । त्रिपुरेशि नमस्तेस्तु धियो यो नः प्रचोदयात् ।

अथोदिशिस्थे वरदे पाताळान्तरचारिणि । पृथ्वि त्वां च नमस्तेस्तु मम पाशं च नाशय । भूम्यधिष्ठान देवेशि धियो यो नः प्रचोदयात् ।

अवान्तरदिशे तस्यै चांतरिक्षाधिदेवते । त्रिपुरेशि नमस्तेस्तु मम पाशं च नाशय । प्रसन्न वरदे देवि धियो यो नः प्रचोदयात् । इति कालत्रयेप्येक-मुपस्थानन्तु सर्वदा । त्रिपुरा सर्वरूपाणि चराणि स्थावराणि च । सायं प्रातस्तु मध्याह्ने सर्वदा सा परास्थिता । उत्तमे शिखरे जाते भूम्यां पर्वतमूर्धनि । ब्राह्मणेभ्योभ्यनुज्ञाता गच्छ देवि यथासुखम् । गुं गुरुभ्यो नमः । दुं दुर्गायै नमः । गं गणपतये नमः । क्षं क्षेत्रपालकाय नमः । सं सरस्वत्यै नमः । पं परमात्मने नमः ।

श्रीशिवाचार्यवर्याद्यां शङ्कराचार्यमध्यमाम् ।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम् ।
दिव्यश्रीपादुकां ध्यात्वा परितुष्याम्यहं सदा ।
श्रीगुरुं परमं वन्दे पश्चात्तं परमं गुरुम् ।
परमेष्ठिगुरुं वन्दे परापरगुरुं भजे ॥

आनन्दाख्यगुरुं वन्दे तच्छिष्यस्तत्कृपावशः ।
श्रीनाथादींश्च संपूज्य सम्प्रदायक्रमादहम् ॥

योगगोत्रं समुच्चार्य आनन्द स्वच्छन्द चिद्रूपानन्द स्वगोत्र स्वनाम शर्मा अहं भो अभिवादये ।

इति तान्त्रिकप्रातस्सन्ध्याविधिः ।

## अथ माध्याह्निकविधिः

अपवित्रः पवित्रो वा सर्वावस्थांगतोपि वा । यस्मरेत्पुण्डरीकाक्षं स बाह्या-भ्यन्तरश्शुचिः ॥ आचम्य – उत्तिष्ठन्तु भूतपिशाचाः । एते भूमिभारकाः

एतेषा मविरोधेन ब्रह्मकर्म समारभे। ओं देवी गायत्री च्छन्दः प्राणायामे विनियोगः ओं भूः ओं भुवः ओगं् सुवः ओं महः ओं जनः ओं तपः ओगं् सत्यम् ओं तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ओमापो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवस्सुवरोम्। एवं गुणविशेषणविशिष्टायां शुभतिथौ गायत्रीदेवतामुद्दिश्य गायत्रीदेवताप्रीत्यर्थं माध्याह्निकसन्ध्या मुपासिष्ये।

ओं आपोहिष्टामयो भुवः तान ऊर्जे दधातन महेरणाय चक्षसे योव शिवतमोरसः तस्य भाजयते हनः उशतीरिव मातरः तस्मा अरंगमामवः। यस्यक्षयाय जिन्वथ आपो जनयथाचनः।

आपः पुनन्तु पृथिवीं पृथिवि पूता पुनातु माम्। पुनन्तु ब्रह्मणस्पतिर्ब्रह्मपूता पुनातु माम्। यदुच्छिष्टमभोज्यं यद्वा दुश्चरितं मम सर्वं पुनन्तु मामापोसतां च प्रतिग्रहग्ग् स्वाहा इत्यपपीत्वा।

आचम्य —

ओं दधिक्रावुण्णो अकारिषं जिष्णो रश्वस्य वाजिनः सुरभिनो मुखाकरत् प्रणआयूगं्षि तारिषत् आपो हिष्ठा मयो भुवः तान ऊर्जे दधातन महेरणाय चक्षसे योवशिशवतमो रसः तस्य भाजयते हनः उशतीरिव मातरः तस्मा अरंग मामवः यस्य क्षयाय जिन्वथ आपो जनयथाचनः।

हिरण्यवर्णाश्शुचयः पावकायासुजातः कश्यपोयास्विन्द्रः अग्निं या गर्भं दधिरे विरूपास्तान आपश्शग्ग् स्योना भवन्तु यासागं् राजा वरुणो याति मध्ये सत्यावृते अवपश्यन् जनानां मधुश्चुतश्शुचयो याः पावकास्तान आपश्शग्ग् स्योना भवन्तु शिवेन मा चक्षुषा पश्यतापशिशवया तनुवोपस्पृशत त्वचम्मे अग्निग् सर्वागं् रप्सुषदोहुवेवो मयि वर्चो बलमोजो निधत्त। द्रुपदा दिव मुञ्चनु, द्रुपदा दिवेन्मुमुचानः स्विन्नस्नात्वीमलादिव पूतं पवित्रेणेवाज्यं आपश्शुन्धन्तु मैनसः॥

आचम्य – प्राणानायम्य – एवंगुणविशेषणविशिष्टायां शुभतिथौ माध्याह्निकअर्घ्यप्रदानं करिष्ये ॥

हगं् सश्शुचिषद्वसुरंतरिक्षसद्धोतावेदिषतिथिर्दुरोणसत् नृषद्वरसदृतसद्व्यो मसदब्जागोजाऋतजा अद्रिजाऋतं बृहत् ॥

ओं भूर्भुवस्सुवः ओं तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ।

इत्यर्घ्यं दत्वा – असावादित्यो ब्रह्म – आचम्य – माध्याह्निकसन्ध्यां तर्पयामि । सावित्रीं तर्पयामि । रौद्रीं तर्पयामि । निमृजीं तर्पयामि । यजुर्वेदीं तर्पयामि । इति सन्तर्प्य । आचम्य – उपस्थानम् ॥

आसत्येनरजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च । हिरण्ययेन सविता रथेना देवोयाति भुवना विपश्यन् । उद्वयं तमसस्परि पश्यन्तो ज्योतिरुत्तरम् । देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् । उदुत्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् । चित्रं देवाना मुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्राद्या वापृथिवी अन्तरिक्षगं् सूर्य आत्मा जगतस्तस्थुषश्च । तच्छक्षुर्देव हितं पुरस्तच्छुक्रामुच्चरत् पश्येम शरदश्शतम् जीवेम शरपश्शतम् नन्दाम शरदश्शतम् मोदाम शरदश्शतम् भवाम शरदश्शतम् श्रुणवाम शरदश्शतम् प्रब्रवाम शरदश्शतम् मजीतास्वाम शरदश्शतम् ज्योक्चसूर्यं धृशेय उदगान्महतोर्णवाद्वि भ्राजमानस्सरिरस्य मध्यात्समावृषभो लोहिताक्षन्सूर्योविपश्चिन्मनसा पुनातु । सन्ध्यायै नमः । सावित्र्यै नमः गायत्र्यै नमः सरस्वत्यै नमः सर्वाभ्यो देवताभ्यो नमः देवेभ्यो नमः ऋषिभ्यो नमः मुनिभ्यो नमः गुरुभ्यो नमः मातृभ्यो-नमः पितृभ्यो नमः कामोकार्षीन्मन्युरकार्षी न्नमो नमः । पृथिव्यापस्तेजो वायुराकाशात् । ओं नमो भगवते वासुदेवाय यागं् सदा स्सर्वभूतानि चराणि स्थावराणि च । सायं प्रातर्नमस्यन्ति सा मासन्ध्याऽभिरक्षतु । शिवाय विष्णुरूपाय शिवरूपाय विष्णवे । शिवस्य हृदयं विष्णुर्विष्णोश्च हृदयगं् शिवः । यथा

शिवयो विष्णुरेवं विष्णुमयश्शिवः यथान्तरं न पश्यामि तथा मे स्वस्तिरायुषि। नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च। जगद्धिताय कृष्णाय गोविन्दाय नमो नमः। आकाशात्पतितं तोयं यथागच्छति सागरम्। सर्वदेवनमस्कारः केशवं प्रतिगच्छति। श्रीकेशवं प्रतिगच्छत्यों नम इति।

## वन्दनगायत्रीजपः

आचम्य – प्राणानायम्य - एवंगुणविशेषणविशिष्टायां शुभतिथौ वन्दन महामन्त्रजपं करिष्ये। अस्य श्रीवन्दन महामन्त्रस्य सान्दीपनभगवान् ऋषिः अनुष्टुप्छन्दः सन्ध्यादेवता शोभनवक्त्रामिति बीजं नीलग्रीवामिति शक्तिः त्रिनेत्रामिति कीलकं मम शीघ्रं सन्ध्यादेवी प्रसादसिद्ध्यर्थे जपे विनियोगः। ओं ऐं अंगुष्ठाभ्यां नमः उं क्लीं तर्जनीभ्यां नमः मं सौः मध्यमाभ्यां नमः ओं ऐं अनामिकाभ्यां नमः उं क्लीं कनिष्ठिकाभ्यां नमः मं सौः करतल करपृष्ठाभ्यां नमः एवं हृदयादिन्यासः भूर्भुवस्सुवरोमिति दिग्बन्धः।

ध्यानम् – कृत्वा सन्ध्यामभिध्याये न्नीलग्रीवां सुशोभनाम्।
वरदाभयहस्तां तां त्रिनेत्रां चन्द्रशेखराम्॥ १
प्रणवं परमात्मानं जपित्वा भक्तिसंयुतः।
स्वात्मानमात्मना ध्याये त्प्रकुर्याद्वन्दनं बुधः॥ २
सन्ध्यादेवि महाभागे सर्वदेवनमस्कृते।
त्वदुपासनमात्रेण सर्वपापैः प्रमुच्यते॥ ३
अहो महा बहुरूपे दिव्ये सन्ध्ये सरस्वति।
अजरे अमरे नित्ये ब्रह्मयोनि नमोस्तु ते॥ ४
आब्रह्मभुवनाल्लोका दाशेषाल्लोकपर्वताः।
ये वसन्ति द्विजा देवास्तेभ्यो नित्यं नमाम्यहम्॥ ५
या सन्ध्या सा जगद्रूपा मायातीता तु निष्कळा।
ईश्वरी केवलाशक्ति स्तत्वत्रयसमुद्भवा॥ ६

र्लामित्यादि पञ्चपूजां कृत्वा । अथ मनुः —

ओं आं ऐं उं क्लीं मं सौः ओं परोपरजसि सावदों दों बसासि जररोम ओम् । ओं नमो नारायणाय ओमापो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवस्सुवरों ओं भूः ओं भुवः ओगं सुवः ओं महः ओं जनः ओं तपः ओगं सत्यं ओं तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् । ओं श्रीं ईं ईं ओं औं हलहलखें ध्यें औं ओं ऐं सरसं रं मं हं क्षं हसौः ह्यं अरीन् मर्दय मर्दय प्रज्वल प्रज्वल ओं तत्सवितुर्वरेण्यं ओं श्रीं ईं ईं ओं औं हलहलखें ध्यें औं ओं ऐं सरस रं मं हं क्षं हसौः ह्य अरीन् मर्दय मर्दय प्रज्वल प्रज्वल धियो यो नः प्रचोदयात् ओं भूर्भुवस्सुवः ओं तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् । परो रजसि सावदोम् । ओं नमो नारायणाय इति सकृत् जप्त्वा ।

ओमित्येकाक्षरं ब्रह्म अग्निर्देवता ब्रह्म इत्यार्षं गायत्रं छन्दं परमात्मा स्वरूपं सायुज्यं विनियोगः । ॐ आयातु वरदा देवि अक्षरं ब्रह्मसम्मितम् । गायत्रीं छन्दसां मातेदं ब्रह्म जुषस्व मे । यदह्नात्कुरुते पापं तदह्नात्प्रतिमुच्यते । सर्ववर्णे महादेवि सन्ध्याविद्ये सरस्वति ॥

ओजोसि सहोसि बलमसि भ्राजोसि देवानां धाम नामासि विश्वमसि विश्वायुः सर्वमसि सर्वायुरभिभूरों गायत्रीमावाहयामि सावित्रीमावाहयामि सरस्वतीमावाहयामि छन्दऋषीनावाहयामि श्रियमावाहयामि गायत्र्या गायत्री छन्दो विश्वामित्रऋषिः सविता देवता । अग्निर्मुखं ब्रह्मा शिरः विष्णुर्हृदयम् रुद्रश्शिखा पृथिवी योनिः प्राणापानव्यानोदानसमानाःप्राणाः श्वेतवर्णा सांख्यायन सगोत्रा गायत्री चतुर्विंगशत्यक्षरात्रिपदाषट्कुक्षिः पञ्चशीर्षोपनयने विनियोगः । ओं भूः ओं भुवः ओगं सुवः ओं महः ओं जनः ओं तपः ओगं सत्यं ओं तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ओमापो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवस्सुवरोम् । मम उपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं माध्याह्निक

सन्ध्यायां यथाशक्ति गायत्रीमन्त्रजपं करिष्ये। ॐ तत्सवितुः अंगुष्ठाभ्यां नमः। वरेण्यं तर्जनीभ्यां नमः। भर्गो देवस्य मध्यमाभ्यां नमः। धीमहि अनामिकाभ्यां नमः। धियो यो नः कनिष्ठिकाभ्यां नमः। प्रचोदयात् करतलकरपृष्ठाभ्यां नमः। एवं हृदयादिन्यासः। भूर्भुवस्सुवरोमिति दिग्बन्धः।

ध्यानम् –

मुक्ताविद्रुमहेमनीलधवळच्छायैर्मुखैस्त्रीक्षणैर्युक्ता
मिन्दुनिबद्धरत्नमकुटां तत्वार्थवर्णात्मिकाम्।
गायत्रीं वरदाभयांकुशकशाश्शुभ्रं कपालं गदां
शंखं चक्रमधारविन्दयुगळं हस्तै र्वहन्तीं भजे॥

यो देवस्सवितास्माकं धियो धर्मादिगोचराः।
प्रेरयेत्तस्य यद्भर्गस्तद्वरेण्यमुपास्महे॥ (शापविमोचनम्)

ओं नमो भगवति महादेवि परब्रह्मस्वरूपिणि गायत्रि शापविमोचनं कुरु स्वाहा। इति गायत्रीशापविमोचनम्।

यद्वेदा गायत्री ब्रह्मेत्युपासीत यद्रूपा ब्रह्मविदो विदुः।
तां पश्यन्ति धीरास्सुमनसा वाचमक्रतः तेजसा सोऽमृतत्वं भजन्ते।

ब्रह्मशापाद्विमुक्ता भव। तत्पापानिश्रांगीश्वग्निभूतां श्रयाग्नि सन्धायन्ति विष्णुरायुधान् ब्रह्मरूपां सावित्रीमुपासीत तेजनासोऽमृतत्वं भजन्ते। वसिष्ठशापाद्विमुक्ता भव। गायत्रीं भजामग्निमुखीं विश्वविमोचनीं यद्बुद्ध्या देवता चक्रिरे विश्वसृष्टिः तां कल्याणीमिष्टकरीं प्रपद्ये यन्मुखन्निसृता वेदा गायत्री तां पश्यन्ति धीरास्सुमनसा वाचमक्रतः तेजनासोऽमृतत्वं भजन्ते विश्वामित्रशापाद्विमुक्ता भव।

अस्माक इत्यस्य मन्त्रस्य ब्रह्मा ऋषिः अनुष्टुप्छन्दः सूर्यो देवता गौतम शापविमोचने विनियोगः।

अस्माकमुतमङ्गळधिश्रवोसि देवसूर्यः परिषद्यः तां पश्यन्ति धीरा स्सुमनसा वाचमक्रतः तेजनासोऽमृतत्वं भजन्ते । गौतमशापाद्विमुक्ता भव । ओष्ठाभिधानानकुलीदन्तैः परिवृतापविः । सर्वस्यै वाच ईशाना चारु मामिह वादयेत् । तां पश्यन्ति धीरा स्सुमनसा वाचमक्रतः । तेजनासोऽमृतत्वं भजन्ते । नकुलीशापाद्विमुक्ता भव । सुमुखं सम्पुटं चैव विततं विस्तृतं तथा । द्विमुखं त्रिमुखं चैव चतुःपञ्चमुखोन्नतम् । षण्मुखाधोमुखी चैव व्यापकाञ्जलिकं तथा । शकटं यमपाशं च ग्रथितं सन्मुखोन्मुखम् । प्रलम्बं मुष्टिकं चैव मत्स्यः कूर्मं वराहकम् । सिंहाक्रान्तं महाक्रान्तं मुद्गरं पल्लवं तथा ।। एते मुद्राः प्रयोक्तव्याः गायत्र्या स्सुप्रकीर्तिताः । शतकृत्वा तु गायत्री दशकृत्वा तुरीयकम् । अन्ते चायुतगायत्री आदौ शापविमोचनम् । जपादौ पाशबीजं च जपान्तेकुंशबीजकम् । जपमध्ये तु मायायास्तज्जस्सफलं भवेत् ।।

जपादौ आं जपमध्ये ह्रीं जपान्ते क्रों इति बीजत्रयं तत्तत्काले जपेत् । पञ्चपूजां कृत्वा गायत्रीजपं कुर्यात् ।

ओं तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् । ओं ४ ओं भूः ओं भुवः ओग् सुवः ओं महः ओं जनः ओं तपः ओंग् सत्यम् श्रीं ह्रीं क्लीं ऐं सौः ओं ह्रीं श्रीं तत्सवितुर्वरेणियं क ५ भर्गो देवस्य धीमहि ह ६ धियो यो नः प्रचोदयात् स ४ परोरजसि सावदोम् हसकल हसकहल सकलह्रीं सौः ऐं क्लीं ह्रीं श्रीं ओमापो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवस्सुवरोम् इति एकवारम् । ऐं क्लीं सौः क्लीं ऐं अनुलोमविलोमेन एकवारम् । परोरजसि सावदों दों वसानिजररोप इति एकवारम् । ओं नमो नारायणाय इत्येकवारम् । ओं भूर्भुवस्सुवर्महर्जनस्तपस्सत्यं तद्ब्रह्म तदाप आपो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवस्सुवरोम् । अयं अयुतगायत्रीमनुः इति एकवारं जप्त्वा ।

सुरभिज्ञानचक्रे च योनिः कूर्मोथ पंकजम् आज्ञनिर्याणकं चैव अष्टौ मुद्राः प्रकीर्तिताः । तत्सद् ब्रह्मार्पणमस्तु । ओं तत्सवितुः अंगुष्ठाभ्यां नमः । वरेण्यं

तर्जनीभ्यां नमः। भर्गो देवस्य मध्यमाभ्यां नमः। धीमहि अनामिकाभ्यां नमः। धियो यो नः करतलकरपृष्ठाभ्यां नमः। एवं हृदयादिन्यासः। भूर्भुवस्सुवरोमिति दिग्विमोकः। तत्सद् ब्रह्मार्पणमस्तु।

उत्तमे शिखरे जाते भूम्यां पर्वतमूर्धनि। ब्राह्मणेभ्योह्यनुज्ञाता गच्छ देवि यथासुखम्। स्तुतो मया वरदा वेदमाता प्रचोदयन्ती पवने द्विजाता। आयः पृथिव्यां द्रविणं ब्रह्मवर्चसम्। मह्यं दत्वा प्रजातं ब्रह्मलोकम्॥

नमोस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे। सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः॥ इदं द्यावापृथिवी सत्यमस्तु पितर्मातर्यदिहोपब्रुवेवाम्। भूतं देवाना मवमे अवोभिः विद्यामेषं वृजिनं जीरदानुम्॥ सर्ववेदेषु यत्पुण्यं सर्वतीर्थेषु यत्फलम्। तत्फलं पुरुष आप्नोति स्तुत्वा देवं जनार्दनम्। स्तुत्वा देवं जनार्दनमों नम इति — वासनाद्वासुदेवस्य वासितं ते जगत्त्रयम्। सर्वभूतनिवासोपि वासुदेव नमोस्तु ते॥ चतुस्सागतपर्यन्तं गोब्राह्मणेभ्यश्शुभमस्तु नित्यम्॥ अहं भो अभिवादये। आचम्य। कायेन वाचा मनसेन्द्रियैर्वा बुध्यात्मना वा प्रकृतेस्स्वभावात्। करोमि यद्यत्सकलं परस्मै श्रीमन्नारायणायेति समर्पयामि॥

सर्वं कृष्णार्पणमस्तु॥

माध्याह्निकसन्ध्या सम्पूर्णा॥



## अथ तान्त्रिकमाध्याह्निकविधिः

मूलेन आचम्य — मूलेन त्रिः प्राणानायम्य ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं श्रीत्रिपुरसुन्दरी राजराजेश्वरी परदेवतामुद्दिश्य श्रीपरदेवताप्रीत्यर्थं माध्याह्निकसन्ध्यामुपासिष्ये। देवीमानरीत्या संकल्प्य —

श्रीनाथादिगुरुत्रयं गणपतिं पीठत्रयं भैरवम्
सिद्धौघं वटुकत्रयं पदयुगं दूतीक्रमं मण्डलम् ।
वीराद्व्यष्टिचतुष्कषष्टिनवकं वीरावळीपञ्चकम्
श्रीमन्मालिनिमन्त्रराजसहितं वन्दे गुरोर्मण्डलम् ।

गुरुपादुका मनुच्चार्य - स्तम्भनचतुरश्रमत्स्यगोखुरयोन्याख्याभिः पञ्चमुद्राभि श्श्रीगुरुं प्रणम्य मूलमन्त्रं ऋष्यादिध्यानान्तं विधाय स्वपुरतः धेनुमुद्रया जलममृतीकृत्य मूलविद्ययाष्टवार मभिमन्त्र्य जलेन मार्जनं कुर्यात् ।

अं नमः आं नमः इं नमः ईं नमः उं नमः ऊं नमः ऋं नमः ॠं नमः लुं नमः लूं नमः एं नमः ऐं नमः ओं नमः औं नमः अं नमः आं नमः इति मार्जयित्वा दक्षिणहस्तेन जल मादाय कं नमः खं नमः गं नमः घं नमः ङं नमः चं नमः छं नमः जं नमः झं नमः ञं नमः टं नमः ठं नमः डं नमः ढं नमः णं नमः तं नमः थं नमः दं नमः धं नमः नं नमः पं नमः फं नमः बं नमः भं नमः मं नमः क १५ इति जलं पीत्वा यं नमः रं नमः लं नमः वं नमः शं नमः षं नमः सं नमः हं नमः ळं नमः क्षं नमः क १५ इति शिरसि प्रोक्ष्य सूर्यमण्डले देवीं यथोक्तरूपां ध्यायेत् ।

ध्यानम् – सकुंकुमविलेपनामळिकचुम्बिकस्तूरिकां
समन्दहसितेक्षणां सशरचापपाशांकुशाम् ।
अशेषजनमोहिनीमरुणमाल्यभूषाम्बरां
जपाकुसुमभासुरां जपविधौ स्मरेदम्बिकाम् ॥

चतुर्भुजे चन्द्रकळावतंसे कुचोन्नते कुंकुमरागशोणे ।
पुण्ड्रेक्षुपाशांकुशपुष्पबाणहस्ते नमस्ते जगदेकमातः ॥

दक्षिणहस्ते जलमादाय लं वं रं यं हं इति त्रिभिरभिमन्त्र्य क १५ इति च

त्रिभिरभिमन्त्र्य तज्जलबिन्दुभिः वामांगुष्ठानामिकाभ्यां क १५ इति स्वशिरसि त्रिः प्रोक्ष्य अवशिष्टजलं वामहस्ते निधाय तेजोरूपं तज्जलमिडयाकृष्य स्वदेहांत स्थितं सकलकलुषं प्रक्षाल्य तज्जलं कृष्णवर्णं विभाव्य पिङ्गलया बहिर्निर्गतं मत्वा तज्जलं पुनः दक्षिणहस्ते कृत्वा स्ववामभागे ज्वलद्वज्रशिलां ध्यात्वा ओं श्रीं पशुहुं फट् इति तस्यां शिलायामास्फाल्य हस्तौ प्रक्षाल्य मूलविद्यया जलमादाय क १५ प्रवह्न्नाड्या सहस्रदळकमलगतपरमामृते नैकीभूतं विभाव्य राजदन्तविवरान्नेत्रमार्गेण निर्गमय्य तज्जलं वामकरे निधाय तेन जलेन अमृत मालिनी स्वाहेति मन्त्रेण स्वशिरसि त्रिः प्रोक्ष्य ओं ऐं ह्रीं श्रीं क १५ आत्मतत्वं शोधयामि स्वाहा। ओं ४ स ४ शिवतत्वं शोधयामि स्वाहा ओं ४ ह ६ विद्यातत्वं शोधयामि स्वाहा। ओं ४ क १५ आत्मतत्वं शोधयामि स्वाहा। ओं ४ क १५ सवतत्वं शोधयामि स्वाहा। इति च त्रिधा एवं नवधा जलं पिबेत्। अर्घ्यमञ्जलिनादाय उत्थाय क ५ वाग्भवेश्वरी विद्महे ह ६ कामेश्वरी च धीमहि स ४ तन्नशक्तिः प्रचोदयात्। श्रीमहात्रिपुरसुन्हरी श्री पादुकायै एषोर्घ्यं स्वाहा इति त्रिरर्घ्यं दत्वा ह्रां ह्रीं स श्री सूर्यं एष तेऽर्घ्यं स्वाहा इति सूर्याभिमुख मघ्यांजलित्रयं दत्वा मूलविद्यया देवीं त्रिस्सन्तर्प्य क १५ श्रीमहात्रिपुरसुन्दरी श्रीपादुकां तर्पयामि। ह्रां ह्रीं स श्रीं सूर्यं तर्पयामि नमः इति त्रि स्सन्तर्प्य अनाहतं मूलविद्याकामराजकूट रक्तवर्णं ध्यायन् तत्तेजः सुषुम्नामार्गेण वह्न्नासापुटाध्वना निस्सार्य सूर्यमण्डले समावाह्य तदुद्भूतां कामेश्वरीं ध्यायेत्। तद्यथा –

रक्तां सुरक्तांबरभूषणाढ्यां पाशांकुशाभीतिवरान् दधानाम्
शुचिस्मिता मुत्कुटया वनाढ्यां कामेश्वरीं संस्मरतां त्रिनेत्राम्।

इति ध्यात्वा ॐ ४ ह ६ कामराजकूटमुच्चार्य श्रीत्रिपुराकामेश्वरी श्रीपादुकां पूजयामीति त्रिस्सम्पूज्य पुनः ॐ ४ कामराजकूटगायत्री मुच्चार्य क्लीं त्रिपुरादेवी विद्महे कामेश्वरी च धीमहि तन्नः क्लिन्ने प्रचोदयात्। श्रीत्रिपुरा कामेश्वरी श्रीपादुकायै अर्घ्यं कल्पयामि स्वाहा। इति त्रिरर्घ्याञ्जलिमुत्क्षिप्य

पुनः कामराजकूटमुच्चार्य ह् ६ श्रीत्रिपुराकामेश्वरी श्रीपादुकां तर्पयामि नमः इति त्रिस्सन्तर्प्य गुरुपादुकां प्राणायामत्रयं कृत्वा

तुरियविद्यागायत्रीं जपेत् । सा यथा। ॐ ४ क ५ वाग्भवेश्वरी विद्महे ह् ६ कामेश्वरी च धीमहि स ४ तन्नश्शक्तिः प्रचोदयात् इति यथाशक्ति जप्त्वा कामराजकूटगायत्रीं जपेत् । सा यथा – ॐ ४ क्लीं त्रिपुरादेवी विद्महे कामेश्वरी च धीमहि तन्नः क्लिन्ने प्रचोदयात् इति यथाशक्ति जप्त्वा षट्त्रिंशत्तत्वात्मकत्वेन मूलविद्यां जपेत् । तद्यथा –

तत्र मध्याह्ने हृदयाम्भोजकर्णिके सूर्यमण्डले
कामराजात्मिकां देवीमलक्तकनमारुणाम्
प्रसूनबाणपुण्ड्रेक्षुचापपाशांकुशान्विताम्
परितश्चात्ममुख्याभिष्षट्त्रिंशत्तत्वशक्तिभिः
रक्तमाल्याम्बरालेपभूषाभिः परिवारिताम्
युगनित्याक्षरमयीं घटिकावरणां स्मरेत् ॥

पुष्पबाणेक्षुकोदण्डधराश्शोणवपुर्धराः हृत्पङ्कजे च ताः कामराजोपास्ति परायणाः । इति देवीं ध्यात्वा ॥

## — अथ कालनित्याजपः —

ॐ ४ क १५ दिननित्यविद्याहंसः अं शिव । ॐ ४ क १५ दिननित्यविद्याहंसः कं शक्ति । ॐ ४ क १५ दिननित्यविद्याहंसः खं सदाशिव । ॐ ४ क १५ दिननित्यविद्याहंसः गं ईश्वर । ॐ ४ क १५ दिननित्यविद्याहंसः घं शुद्धविद्या । ॐ ४ क १५ दिनननित्यविद्याहंसः ङं माया । ॐ ४ क १५ दिननित्यविद्याहंसः चं कला । ॐ ४ क १५ दिननित्यविद्याहंसः छं विद्या । ॐ ४ क १५ दिननित्यविद्याहंसः जं राग । ॐ ४ क १५ दिननित्यविद्याहंसः झं

काल । ॐ ४ क १५ दिननित्यविद्याहंसः ञं नियति । ॐ ४ क १५ दिननित्य विदयाहंसः टं पुरुष । ॐ ४ क १५ दिननित्यविदयाहंसः ठं प्रकृति । ॐ ४ क १५ दिननित्यविद्याहंसः ड अहङ्कार । ॐ ४ क १५ दिननित्यविद्या हंसः णं मनः । ॐ ४ क १५ दिननित्यविद्याहंसः तं श्रोत्र । ॐ ४ क १५ दिननित्यविदयाहंसः थं त्वक् । ॐ ४ क १५ दिननित्यविदयाहंसः दं चक्षुः । ॐ ४ क १५ दिननित्यविदयाहंसः धं जिह्वा । ॐ ४ क १५ दिननित्यविदया हंसः पं वाक् । ॐ ४ क १५ दिननित्यविदयाहंसः फं पाणि । ॐ ४ क १५ दिननित्यविदयाहंसः बं पाद । ॐ ४ क १५ दिननित्यविदयाहंसः भं पायु । ॐ ४ क १५ दिननित्यविदयाहंसः मं उपस्थ । ॐ ४ क १५ दिननित्यविदया हंसः यं शब्द । ॐ ४ क १५ दिननित्यविदयाहंसः रं स्पर्श । ॐ ४ क १५ दिननित्यविदयाहंसः लं रूप । ॐ ४ क १५ दिननित्यविदयाहंसः वं रस । ॐ ४ क १५ दिननित्यविदयाहंसः शं गन्ध । ॐ ४ क १५ दिननित्यविदया-हंसः षं आकाश । ॐ ४ क १५ दिननित्यविदयाहंसः सं वायु । ॐ ४ क १५ दिननित्यविदयाहंसः हं वह्नि । ॐ ४ क १५ दिननित्यविदयाहंसः ळं अप् । ॐ ४ क १५ दिननित्यविदयाहंसः क्षं पृथिवी । इति कालनित्याजप । क १५ इति यथाशक्तिजपः ॥

अनन्तरं हृदयकमले कामराजकूटं बालार्ककोटिप्रभं हृदयादि ब्रह्मरन्ध्रान्तं हृदयादि मूलाधारान्तं च व्याप्तरश्मिकदम्बकं ध्यायन् कामराजकूटं जपेत् । ह ६ प्राणायामपूर्वक जपं देव्यै समर्प्य । उपस्थानम् ॥

तेजोसि तेजो मयि धेह्यपो अन्वचारिषगं् रसेद समसृक्ष्महि पयस्वागं् अग्नि आगमं तस्मासगं् सृजवर्चसा प्रजया च धनेन च समावर्त पृथिवीत्सनुधः स्समुसूर्यः । समुविश्वमिदं जगत् वैश्वानरज्योतिर्भूयासं विभुं कामं पृश्नियै भू स्वाहा । सोमगं् राजानं वरुणमग्निमन्वारभामहे । आदित्यन्विष्णुगं् सूर्यं ब्रह्माणं च बृहस्पतिम् । देवस्य त्वा सवितुः प्रसवेश्विनो र्बाहुभ्यां पूष्णो

हस्ताभ्यागं सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेस्त्वासाम्राज्येनाभिषिञ्चामीन्द्रस्य बृहस्पते स्त्वासाम्राज्येनाभिषिञ्चामि ॥

नमस्ते मङ्गळावासे सर्वज्ञे करुणानिधे ।
ब्रह्मपत्नि नमस्तेस्तु मम पाशं च नाशय ॥

नमः प्राच्यै दिशे देवि प्रागधिष्ठानदेवते ।
वागीश्वरि नमस्तेस्तु धियो यो नः प्रचोदयात् ॥

दक्षिणायै दिशे देवि ब्रह्मविद्ये सरस्वति ।
विष्णुपत्नि नमस्तेस्तु मम पाशं च नाशय ॥

दक्षिणादिगधिष्ठात्रि धियो यो नः प्रचोदयात् ॥

पश्चिमायै दिशे देवि ब्रह्मविद्ये सरस्वति ।
अन्नपूर्णे नमस्तेस्तु मम पाशं च नाशय ॥

रुद्रपत्नि नमस्तेस्तु धियो यो नः प्रचोदयात् ।

महातुरीये सर्वज्ञे सर्वलोकदयापरे ।
उदीच्यै च दिशे देवि शिवपत्नि नमोस्तु ते ॥

उदग्दिशासमारूढे मम पाशं च नाशय ।
प्रसीद वरदे देवि धियो यो नः प्रचोदयात् ॥

व्योमदेशाद्यधिष्ठाने गगनान्तरचारिणि ।
प्रसीद वरदे देवि मम पाशं च नाशय ॥

त्रिपुरेशि नमस्तेस्तु धियो यो नः प्रचोदयात् ।
त्रिपुरेशि नमस्तेस्तु मम पाशं च नाशय ।
अधोदिशिस्थे वरदे पाताळान्तरचारिणि ।
पृथ्वि त्वां च नमस्तेस्तु मम पाशं च नाशय ॥

भूम्यधिष्ठानदेवेशि धियो यो नः प्रचोदयात् ।

अवान्तरदिशे तस्यै चान्तरिक्षाधिदेवते ।
त्रिपुरेशि नमस्तेस्तु मम पाशं च नाशय ॥

प्रसन्नवरदे देवि धियो यो नः प्रचोदयात् ।
इति कालत्रयेप्येकमुपस्थावं तु सर्वदा
त्रिपुरा सर्वरूपाणि चराणि स्थावराणि च ।
सायंप्रातस्तु मध्याह्ने सर्वदा सापरा स्थिता
उत्तमे शिखरे जाते भूम्यां पर्वतमूर्धनि
ब्राह्मणेभ्यो ह्यनुज्ञाता गच्छ देवि यथासुखम् ॥

गुं गुरुभ्यो नमः । दुं दुर्गायै नमः । गं गणपतये नमः । क्षं क्षेत्रपालकाय नमः । सं सरस्वत्यै नमः । पं परमात्मने नमः ।

श्रीशिवाचार्यवर्याद्यां शङ्कराचार्यमध्यमाम् ।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम् ॥

दिव्यश्रीपादुकां ध्यात्वा परितुष्याम्यहं सदा ।
श्रीगुरुं परमं वन्दे पश्चात्तं परमं गुरुम् ॥

परमेष्ठिगुरुं वन्दे परापरगुरुं भजे ।
आनन्दाख्यगुरुं वन्दे तच्छिष्यस्तत्कृपावशः ॥

श्रीनाथादींश्च सम्पूज्य सम्प्रदायक्रमादहम् ।

इति गुरुपादुकामुच्चार्य योगगोत्रं समुच्चार्य आनन्दस्वच्छन्दचिद्रूपानन्द गोत्रस्स्वनामशर्माहं भो अभिवादये ॥

॥ इति तान्त्रिकमाध्याह्निकविधिः ॥



## — अथ सायंसन्ध्याविधिः —

## — भस्मस्नानविधिः —

भस्मना उद्धूल्य अस्य श्री भस्मस्नानमहामन्त्रस्य अग्नि ऋषिः अमृत विराट् छन्दः सदाशिवो देवता मम समस्तपापक्षयद्वारा सर्वप्रायश्चित्तार्थं देह शुद्धयर्थं भस्मस्नानमहं करिष्ये ।

इति सङ्कल्प्य विभूति मादाय वामहस्ते निक्षिप्य दक्षिणकरेण स्पृष्ट्वा मुखमुद्रया मुखपर्यंतं नीत्वा ॐ शम्भुश्शम्भुश्शिवश्शम्भूरुद्रश्शम्भुस्सदाशिवः इति व्याहृतिना नित्यं दिनान्यायान्ति यान्ति च । छन्द इति भस्म । अग्निरिति भस्म । वायुरिति भस्म । जलमिति भस्म । व्योमेति भस्म । सर्वगं् ह्वा इदं भस्म । मन इत्येतानि चक्षूंषि भस्मानि । त्रियायुषं जमदग्नेः कश्यपस्य त्रियायुषं यद्देवानां त्रियायुषं तन्मे अस्तु त्रियायुषं । त्रियम्बकं यजामहे सुगन्धि पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीयमामृतात् । आपो वा इदगं् सर्वं भूतान्यापः प्राणा वा आपः पशव आपोन्नमापोमृतमापस्सम्राडापो विराडाप स्स्वराडापश्छन्दाग्स्यापो ज्योतीग्ष्यापो यजूग्ष्यापस्सत्यमापस्सर्वा देवता आपो भूर्भुवस्सुवराप ओम् । मानस्तोके तनये मान आयुषि मानो गोषु मानो अश्वेषु रीरिषः । वीरान्मानो रुद्रभामितोवधीर्हविष्मन्तो नमसा विधेम ते । सद्यो जातं प्रपद्यामि सद्यो जाताय वै नमो नमः । भवे भवे नातिभवे भवस्व मां भवोद्भवाय नमः । ॐ वामदेवाय नमो ज्येष्ठाय नम श्श्रेष्ठाय नमो रुद्राय नमः । कालाय नमः । कलविकरणाय नमः । बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमस्सर्वभूतदमनाय नमो मनोन्मनाय नमः ।

अघोरेभ्योथ घोरेभ्यो घोरघोरतरेभ्यः । सर्वेभ्य स्सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ।

तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात् ।

ईशानस्सर्वविद्यानामीश्वरस्सर्वभूतानां ब्रह्माधिपति ब्रह्मणोधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ।

ॐ नमश्शिवाय इति दशवारं जपित्वा ॐ परब्रह्मणे नमः (शिरसि) ॐ नमश्शिवाय नमः (ललाटे) ॐ ब्रह्मणे नमः (दक्षिणकर्णे) ओं विष्णवे नमः (वामकर्णे) ओं हव्यवाहनाय नमः (हृदये) ओं स्कन्दाय नमः (नाभौ) ओं इन्द्राय नमः (दक्षिणभुजे) ओं आदित्याय नमः (तन्मध्ये) ओं सोमाय नमः (तन्मणिबन्धे) ओं वामदेवाय नमः (वामभुजे) ओं प्रभञ्जनाय नमः (तन्मध्ये) ओ वसुभ्यो नमः (तन्मणिबन्धे) ओं हराय नमः (पृष्ठे) सर्वाङ्गानि च लेपयेत् । इति भस्मस्नानविधिः ।।

अपवित्रः पवित्रो वा सर्वावस्थां गतोपि वा । यस्स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरश्शुचिः ।। आचम्य – उत्तिष्ठन्तु भूतपिशाचाः ये ते भूमिभारकाः । येतेषा मविरोधेन ब्रह्मकर्म समारभे ।।

ओं ओं ओं देवी गायत्री छन्दः प्राणायामे विनियोगः । ओं भूः ओं भुवः ओगं सुवः ओं महः ओं जनः ओं तपः ओगं सत्यं ओं तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् । ओमापो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवस्सुवरोम् । ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं गायत्रीदेवता मुद्दिश्य गायत्री देवताप्रीत्यर्थं सायंसन्ध्या मुपासिष्ये । ओं आपोहिष्ठामयो भुवः ओं तान ऊर्जे दधातन ओं महेरणाय चक्षसे ओं योवश्शिवतमो रसः तस्य भाजयते हनः ओं उशतीरिव मातरः ओं तस्मा अरङ्ग मामवः ओं यस्य क्षयाय जिन्वथ ओं आपो जनयथाच नः । ओं अग्निश्च मामन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्ताम् यदह्ना पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना अहस्तदवलुम्पतु यत्किञ्च दुरितं मयि इदमहं माऽमृतयोनौ सत्ये ज्योतिषि जुहोमि स्वाहा । इत्यपः पीत्वा आचम्य – ओं दधिक्रावुण्णो अकारिषं प्रण आयूगंषि तारिषत् आपो हिष्ठामयो भुवः आपो जनयथाच नः । हिरण्य-

वर्णाश्शुचयः पावकायासुजातः कश्यपो यास्विन्द्रः अग्नि या गर्भं दधिरे विरूपा स्तान आपश्शग् स्योना भवन्तु यासागं राजा वरुणो याति मध्ये सत्यानृते अवपश्यन् जनानां मधुश्च्युतश्शुचयो याः पावकास्तान आपश्शग् स्योना भवन्तु यासां देवादि विकुर्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति याः पृथिवीं पयसो न्दन्ति शुक्रास्तान आपश्शग् स्योना भवन्तु । शिवेन मा चक्षुषा पश्यतापश्शिवया तनुवोपस्पृशतत्वचम्मे । सर्वागं् अग्नीगं् रप्सुदोहुवो मयि वर्चो बलमोजो निधत्त । द्रुपदा दिवमुञ्चतु द्रुपदा दिवेन्मुमुचानः स्विन्नस्नात्वीमलादिव । पूतं पवित्रेणेवाज्यं आपश्शुद्धन्तु मैनसः । आचम्य - प्राणानायम्य । एवंगुणविशेषण विशिष्टायां शुभतिथौ सायंसन्ध्यार्घ्यप्रदानं करिष्ये । ओं भूर्भुवस्सुवः …….. प्रचोदयात् । इति त्रिरर्घ्यं दत्वा । आचम्य - प्राणानायम्य । एवंगुणविशेषण विशिष्टायां शुभतिथौ कालातीतदोषप्रायश्चित्तार्थं अर्घ्यप्रदानं करिष्ये । लमिति पञ्चपूजा । हरोसि पाप्मानं मे विद्धि हिरण्यगर्भस्समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् सदाधार पृथिवीं द्यामुते मा कस्मै देवाय हविषा विधेम । ओं भूः ओं भुवः ओगं् सुवः ओं महः ओं जनः ओं तपः ओगं् सत्यं ओं तत्स-वितुर्वरेण्यं …….. प्रचोदयात् । इति चतुर्थार्घ्यं दत्वा । असावादित्यो ब्रह्म । उद्यन्तमस्तं यन्तमादित्य मभिध्यायन् कुर्वन्ब्राह्मणो विद्वान्सकलं भद्र मश्नुतेऽसा वादित्यो ब्रह्मेति ब्रह्मैव सन् ब्रह्माप्येति य एवं वेद । सायंसन्ध्यां तर्पयामि । सरस्वतीं तर्पयामि । वैष्णवीं तर्पयामि । निमृजीं तर्पयामि । सामवेदीं तर्पयामि । इति कृत्वा । आचम्य - प्राणानायम्य ।

## — भूशुद्धिः —

अस्य भूशुद्धिमहामन्त्रस्य भूरवराहऋषिः सुतलं छन्दः भूमिर्देवता आसने विनियोगः । लां बीजं लीं शक्तिः लूं कीलकं मम सर्वमन्त्रसिद्ध्यर्थे जपे विनि-योगः । लां अंगुष्ठाभ्यां नमः । लीं तर्जनीभ्यां नमः । लूं मध्यमाभ्यां नमः । लैं अनामिकाभ्यां नमः । लौं कनिष्ठिकाभ्यां नमः । लः करतलकरपृष्ठाभ्यां नमः । एवं हृदयादिन्यासः । भूर्भुवस्सुवरोमिति दिग्बन्धः ।

ध्यानम् – समुद्रमेखले देवि पर्वतस्तनमण्डले ।
विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्व मे ॥

स्योनापृथिवी भवानृक्षरा निवेशिनी यच्छानश्शर्मसप्रथाः । इति भूमिं सम्प्रोक्ष्य ।

पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ।
त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥
अपसर्पन्तु ये भूता ये भूता भूमिभारकाः ।
ये भूता विघ्नकर्तार स्ते नश्यन्तु शिवाज्ञया ॥
अपक्रामतु भूताद्या स्सर्वे ते भूमिभारकाः ।
सर्वेषा मविरोधेन ब्रह्मकर्म समारभे ॥

इत्यासनोपरि हस्तं निक्षिप्य लमिति पञ्चपूजां कृत्वा भूगायत्रीं पञ्चवारं जप्त्वा धनुर्धराय विद्महे सर्वसिद्धचै च धीमहि तन्नो धरा प्रचोदयात् । ततः आसनोपरि कूर्मयन्त्रं विलिख्य । आसने वामपार्ष्णिना हस्तद्वयेन घातत्रयेण तालत्रयं कुर्यात् ।

अनन्तासनाय नमः । कूर्मासनाय नमः । कमलासनाय नमः । पद्मासनाय नमः । योगासनाय नमः । वीरासनाय नमः । सुखासनाय नमः । असिताङ्ग भैरवाय नमः । संहारभैरवाय नमः । इति छोटमुद्रया ओं रं सहस्रारहुं फट् स्वाहा । रं अग्निबीजेन अग्निप्राकारत्रयं विचिन्त्य । हेतुकं पूर्वपीठेतु आग्नेये त्रिपुरान्तकम् । दक्षिणेचाग्निभेतालम् । नैरृत्यां यमजिह्विकम् । कालाख्यं वारुणीपीठे वायव्यांतु करालकम् । उत्तरे एकपादं तु ईशान्ये भीमरूपकम् । आकाशे तु निरालम्बं पाताळे बडबानलम् । यथा ग्रामे यथा क्षेत्रे रक्षता वटुकस्तथा । सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधके । शरण्ये त्र्यम्बके देवि नारायणि नमोस्तु ते ॥ इति भूशुद्धिः ॥

## — अथ भूतशुद्धिः —

अस्य श्री भूतशुद्धिमहामन्त्रस्य ब्रह्मेन्द्रेश्वरा ऋषयः अमृतविराट् छन्दः जीवात्मा देवता देहशुद्ध्यर्थे विनियोगः। हमिति मूलाधारकुण्डलिनी मुत्थाप्य हृदिस्थ जीवात्मना संयोज्य तां द्वादशान्तस्थितपरमात्मना संयोज्य भूतानि प्रविलापयेत्। पादादि जानुपर्यन्तं पृथ्वी स्थानं पृथ्वीमण्डलं पीतवर्णं वज्रलाञ्छनं लं बीजयुक्तं ब्रह्मदैवत्यं पञ्चगुणात्मनि पृथिवीं प्रविलापयामि। जान्वादि नाभिपर्यन्तं अपां स्थानं अम्मण्डलं अर्धचन्द्राकारं शुक्लवर्णं पद्मलाञ्छनं वं बीजयुक्तं विष्णुदैवत्यं चतुर्गुणात्मनि आपः प्रविलापयामि। नाभ्यादि हृदयपर्यन्तं अग्निस्थानं अग्निमण्डलं त्रिकोणाकारं रक्तवर्णं स्वस्तिकलाञ्छनम् रं बीजयुक्तं रुद्रदैवत्यं त्रिगुणात्मनि अग्निं प्रविलापयामि। हृदयादि भ्रूमध्यपर्यन्तं वायुस्थानं वायुमण्डलं षट्कोणाकारं धूम्र वर्णं षड्बिंदुलाञ्छनं यं बीजयुक्तं ईश्वरदैवत्यं द्विगुणात्मनि वायुं प्रविलापयामि। भ्रूमध्यादि ब्रह्मरन्ध्रान्तं आकाशस्थानं आकाशमण्डलं वर्तुलाकारं कृष्णवर्णं ध्वजलाञ्छनं हं बीजयुक्तं सदाशिवदैवत्यं एकगुणात्मनि आकाशं प्रविलापयामि। सोहं द्वादशान्तस्थितपरमात्मनि जीवात्मानं प्रविलापयामि। अधोकुक्षिस्थितवामभागे पापपुरुषं ध्यायेत्। वामकुक्षिस्थितं पापपुरुषं कज्जलप्रभम्। ब्रह्महत्या शिरोयुक्तं स्वर्णस्तेयभुजद्वयम्। सुरापानहृदायुक्तं गुरुतल्पकटिद्वयं। तत्संयोगपदद्वन्द्वमङ्गप्रत्यङ्गपातकम्। उपपातकरोमाणं रक्तश्मश्रु विलोचनम्। खड्गचर्मधरं कृष्णं कुक्षौ पापं विचिन्तयेत्॥

पाशांकुशमुद्राभ्यां आं क्रोमिति पापपुरुषं बहिर्निस्सार्य तस्य दहनं कुर्यात्। यमिति षोडशवारं जप्त्वा भूतानि संशोष्य, रमिति षोडशवारं जप्त्वा भस्म प्लावयित्वा, लमिति षोडशवारं जप्त्वा पिण्डीकरणं दद्यात्। हमिति मूलाधार कुण्डलिनीमुत्थाप्य हृदिस्थ जीवात्मना संयोज्य तां द्वादशान्तस्थितपरमात्मना संयोज्य आकाशाद्वायुः वायोरग्निः अग्ने रापः अद्भ्यः पृथिवी पृथिव्या ओषधयः ओषधीभ्योन्नं अन्नात्पुरुषः स वा एष पुरुषोन्नरसमयः॥ इति भूतशुद्धिः॥

— अथान्तर्मातृका —

अस्य श्री अन्तर्मातृकान्यासमहामन्त्रस्य ब्रह्मा ऋषिः गायत्री छन्दः अन्तर्मातृका सरस्वती देवता हलो बीजानि स्वराश्शक्तयः बिन्दवः कीलकं अन्तर्मातृका सरस्वतीप्रसादसिद्ध्यर्थे जपे विनियोगः ।

अं कं खं गं घं ङं आं अंगुष्ठाभ्यां नमः । इं चं छं जं झं ञं ईं तर्जनीभ्यां नमः । उं टं ठं डं ढं णं ऊं मध्यमाभ्यां नमः । एं तं थं दं धं नं ऐं अनामिकाभ्यां नमः । ओं पं फं बं भं मं औं कनिष्ठिकाभ्यां नमः । अं यं रं लं वं शं षं सं हं क्षं अः करतलकरपृष्ठाभ्यां नमः । एवं हृदयादिन्यासः । भूर्भुवस्सुवरोमिति दिग्बन्धः ॥

ध्यानम् – ओङ्कारीं तनुमात्मपञ्चमनिभां षट्चक्रसञ्चारिणीम्
ईडापिङ्गलमध्यवर्तिविलसद्ब्रह्माण्डमध्यस्थिताम् ।
इन्दुबाणधरां धनुर्वरकरां पुष्पायुधां मोहिनीम्
तारापूर्णमुखीं भजे सुखकरीमन्तर्महामातृकाम् ॥

लमिति पञ्चपूजा । विशुद्धचक्रे षोडशदळकमले अं नमः हंसः । आं नमः हंसः । इं नमः हंसः । ईं नमः हंसः । उं नमः हंसः । ऊं नमः हंसः । ऋं नमः हंसः । ॠं नमः हंसः । लृं नमः हंसः । ॡं नमः हंसः । एं नमः हंसः । ऐं नमः हंसः । ओं नमः हंसः । औं नमः हंसः । अं नमः हंसः । आं नमः हंसः । एतत् प्रकारेण षोडशस्वरान् जप्त्वा अनाहतचक्रे द्वादशदळकमले कं नमः हंसः । खं नमः हंसः । गं नमः हंसः । घं नमः हंसः । ङं नमः हंसः । चं नमः हंसः । छं नमः हसः । जं नमः हंसः । झं नमः हंसः । ञं नमः हंसः । टं नमः हंसः । ठं नमः हंसः । एवं कादि ठान्तं जप्त्वा मणिपूरचक्रे दशदळकमले डं नमः हंसः । ढं नमः हंसः । णं नमः हंसः । तं नमः हंसः । थं नमः हंसः । दं नमः हंसः । धं नमः हंसः । नं नमः हंसः । पं नमः हंसः । फं नमः हंसः । एवं डादिफान्तं जप्त्वा स्वाधिष्ठानचक्रे । षड्दळकमले बं नमः हंसः । भं नमः हंसः । मं नमः

हंसः । यं नमः हंसः । रं नमः हंसः । लं नमः हंसः । बादि लान्तं जप्त्वा मूलाधारचक्रे चतुर्दळकमले वं नमः हंसः । शं नमः हंसः । षं नमः हंसः । सं नमः हंसः । वादि सान्तं जप्त्वा आज्ञाचक्रे द्विदळकमले हं नमः हंसः । क्षं नमः हंसः । हादि क्षान्तं जप्त्वा ब्रह्मरन्ध्रसहस्रदळकमले अं नमः हंसः । आं इं ईं उं ऊं ऋं ॠं लुं लूं एं ऐं ओं औं अं अः नमः हंसः । कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं क्षं नमः हंसः । क्षं नमः हंसः । हं नमः हंसः । सं षं शं व लं रं यं मं भं बं फं पं नं धं दं थं तं णं ढं डं ठं टं ञं झं जं छं चं ङं घं गं खं कं अः अं औं ओं ऐं एं लूं लुं ॠं ऋं ऊं उं ईं इं आं अं नमः हंसः । इत्यन्तर्मातृकान्यासः ॥

## — अथ बहिर्मातृका —

अस्यश्री बहिर्मातृका सरस्वतीन्यासमहामन्त्रस्य ब्रह्मा ऋषिः गायत्री छन्दः बहिर्मातृका सरस्वती देवता हलो बीजानि स्वराश्शक्तयः बिन्दवः कीलकं बहिर्मातृका सरस्वतीप्रसादसिद्ध्यर्थे जपे विनियोगः । अं कं गं घं ङं अं अंगुष्ठाभ्यां नमः । इं चं छं जं झं ञं ईं तर्जनीभ्यां नमः । उं टं ठं डं ढं णं ऊं मध्यमाभ्यां नमः । एं तं थं दं धं नं ऐं अनामिकाभ्यां नमः । ओं पं फं बं भं मं औं कनिष्ठिकाभ्यां नमः । अं यं रं लं वं शं षं सं हं ळं क्षं अः करतल करपृष्ठाभ्यां नमः । एवं हृदयादिन्यासः । भूर्भुवस्सुवरोमिति दिग्बन्धः ।

ध्यानम् – पञ्चाशद्वर्णभेदैर्विहितवदनदोः पादयुक्कुक्षिवक्षो देशां
भास्वत्कपर्दाकलितशशिकळामिन्दुकुन्दावदाताम् ।
अक्षस्रक्कुम्भचिह्नामभयवरकरां क्लृप्तपद्मासनस्था
मिच्छाकल्पामतुच्छस्तनजघनभरां भारतीं तां नमामि ॥

लमिति पञ्चपुजा । अं नमः शिरसि । आं नमः मुखवृत्ते । इं नमः दक्षिणनेत्रे । ईं नमः वामनेत्रे । उं नमः दक्षिणकर्णे । ऊं नमः वामकर्णे । ऋं नमः दक्षिणनासापुटे । ॠं नमः वामनासापुटे । लुं नमः दक्षिणगण्डे । लूं नमः

वामगण्डे । एं नमः ऊर्ध्वोष्ठे। ऐं नमः अधरोष्ठे। ओं नमः ऊर्ध्वदन्तपङ्क्तौ। अं नमः जिह्वाग्रे । आं नमः शिरोवृत्ते । कं नमः दक्षिणबाहुमूले । खं नमः तत्कूर्परे गं नमः दक्षिणमणिबन्धे । घं नमः दक्षिणकरांगुळिमूले । ङं नमः दक्षिण-करांगुळ्यग्रे । चं नमः वामबाहुमूले । छं नमः तत्कूर्परे । जं नमः वाममणिबन्धे झं नमः वामकरांगुळिमूले । ञं नमः वामकरांगुळ्यग्रे । टं नमः दक्षिणोरुमूले । ठं नमः दक्षिणजानुनि । डं नमः दक्षिणगुल्फे । ढं नमः दक्षिणपादांगुळिमूले । णं नमः दक्षिणपादांगुळ्यग्रे । तं नमः वामोरुमूले । थं नमः वामजानुनि । दं नमः वामगुल्फे । धं नमः वामपादांगुळिमूले । नं नमः वामपादांगुळ्यग्रे । पं नमः दक्षिणपार्श्वे । फं नमः वामपार्श्वे । बं नमः पृष्ठे । भं नमः नाभौ । मं नमः जठरे । यं नमः हृदये । रं नमः दक्षिणस्कन्दे । लं नमः गळपृष्ठे । वं नमः वामस्कन्दे । शं नमः हृदयादि दक्षिणपादांगुळ्यन्तम् । षं नमः हृदयादि वाम करांगुळ्यन्तम् । सं नमः हृदयादि दक्षिणपादांगुळ्यन्तम् । हं नमः हृदयादि वामपादांगुळ्यन्तम् । ळं नमः कट्यादि पादांगुळ्यन्तम् । क्षं नमः कट्यादि ब्रह्मरन्ध्रान्तम् । हसौः अं क्षं हसौः नमः । त्रिव्यापकत्वेन सर्वाङ्गव्यापकं कुर्यात् । इति बहिर्मातृका ॥

## — अथ प्राणप्रतिष्ठाविधिः —

अस्य श्री प्राणप्रतिष्ठामहामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः ऋग्यजुस्सामाथर्वणश्छन्दांसि। सकलसृष्टिस्थिति संहारकारिणी प्राणशक्तिः परा देवता। आं बीजं ह्रीं शक्तिः क्रों कीलकं मम प्राणप्रतिष्ठासिद्ध्यर्थे जपे विनियोगः।

आं अं कं खं गं घं ङं आं पृथिव्यापस्तेजोवाय्वाकाशात्मने अंगुष्ठाभ्यां नमः। ह्रीं इं चं छं जं झं ञं ईं शब्दस्पर्शरूपरसगन्धात्मने तर्जनीभ्यां नमः। क्रों उं टं ठं डं ढं णं ऊं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने मध्यमाभ्यां नमः। आं एं तं थं दं धं नं ऐं वाक्पाणिपादपायूपस्थात्मने अनामिकाभ्यां नमः। ह्रीं ओं पं फं बं भं मं औं मनोबुद्धिचित्ताहङ्कारात्मने कनिष्ठिकाभ्यां नमः। क्रों अं यं

रं लं वं शं षं सं हं ळं क्षं अः वचनादानगमनविसर्गानन्दात्मने करतलकर-पृष्ठाभ्यां नमः । एवं हृदयादिन्यासः । भूर्भुवस्सुवरोमिति दिग्बन्धः ।

ध्यानम् – रक्तांबोधिस्थपोतोल्लसलदरुणसरोजाधिरूढा कराब्जैः
पाशं कोदण्डमिक्षूद्भवमाळगुणमप्यंकुशं पञ्चबाणान् ।
बिभ्राणासृक्कपालं त्रिणयनसहिता पीनवक्षोरुहाढ्या
देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परा नः ॥

असुनीते पुनरस्मासु चक्षुः पुनः प्राणमिहिनो धेहि भोगं ज्योक्पश्येम सूर्यमुच्चरन्तमनुमते मृडयानस्वस्ति । आवाहिता भव । एवं त्रिः ॥

॥ इति प्राणप्रतिष्ठाविधिः ॥



आचम्य – ओमित्येकाक्षरं ब्रह्म अग्निर्देवता ब्रह्म इत्यार्षं गायत्रं छन्दं परमात्मं सरूपं सायुज्यं विनियोगम् । ओं आयातु वरदा देवि अक्षरं ब्रह्म सम्मितम् । गायत्रीं छन्दसां मातेदं ब्रह्म जुषस्व मे । यदह्नात्कुरुते पापं तदह्नात्प्रतिमुच्यते । सर्ववर्णे महादेवि सन्ध्याविद्ये सरस्वति ओजोसि सहोसि बलमसि भ्राजोसि देवानां धाम नामासि विश्वमसि विश्वायुस्सर्वमसि सर्वायुरभिभूरोम् गायत्री मावाहयामि । सावित्री मावाहयामि । सरस्वती मावाहयामि । छन्दऋषी नावाहयामि । श्रिय मावाहयामि । गायत्र्या गायत्रीच्छन्दो विश्वामित्रऋषिः सविता देवता अग्निर्मुखं ब्रह्मा शिरः विष्णुर्हृदयं रुद्रश्शिखा पृथिवी योनिः प्राणापानव्यानोदानसमानसप्राणाश्वेतवर्णा सांख्यायनसगोत्रा गायत्री चतुर्विंशत्यक्षरात्रिपदाषट्कुक्षिः पञ्चशीर्षोपनयने विनियोगः । ओं भूः ओं भुवः ओग्ं सुवः ओं महः ओं जनः ओं तपः ओग्ं सत्यं ओं तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ओमापो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवस्सुवरोम् । मम उपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं सायंसन्ध्या यथाशक्ति गायत्रीमन्त्रजपं करिष्ये ।

ओं तत्सवितुः अंगुष्ठाभ्यां नमः । वरेण्यं तर्जनीभ्यां नमः । भर्गो देवस्य मध्यमाभ्यां नमः । धीमहि अनामिकाभ्यां नमः । धियो यो नः कनिष्ठिकाभ्यां नमः । प्रचोदयात् करतलकरपृष्ठाभ्यां नमः । एवं हृदयादिन्यासः । भूर्भुवस्सुवरोमिति दिग्बन्धः ।

ध्यानम् – मुक्ताविद्रुमहेमनीलधवळच्छायैर्मुखैस्त्रीक्षणै
र्युक्तामिन्दुनिबद्धरत्नमकुटां तत्वार्थवर्णात्मिकाम् ।
गायत्रीं वरदाभयांकुशकशाश्शुभ्रं कपालं गदां
शङ्खं चक्रमधारविन्दयुगळं हस्तैर्वहन्तीं भजे ॥
यो देव स्सवितास्माकं धियो धर्मादिगोचराः ।
प्रेरये त्तस्य यद्भर्गस्तद्वरेण्य मुपास्महे ॥

## — गायत्री शापविमोचनम् —

ओं नमो भगवति महादेवि परब्रह्मस्वरूपिणि गायत्री शापविमोचनं कुरु कुरु स्वाहा । यद्वेदा गायत्री ब्रह्मेत्युपासीत यद्रूपा ब्रह्मविदो विदुः तां पश्यन्ति धीरास्सुमनसा वाच मक्रतः । तेजनासोऽमृतत्वं भजन्ते । ब्रह्मशापाद्विमुक्ता भव । तत्पापानिश्शाङ्गीश्वग्निभूतां धिया मग्निसन्धायन्ति विष्णुरायुधान् ब्रह्मरूपां सावित्रीमुपासीत । तेजनासोऽमृतत्वं भजन्ते । वसिष्ठशापाद्विमुक्ता भव । गायत्रीं भजा मग्निमुखीं बिश्वामित्रार्चा यदुद्भूवा देवता चक्रिरे विश्वसृष्ठिः । तां कल्याणी मिष्टकरीं प्रपद्ये यन्मुखनिस्सृता वेदा गायत्री तां पश्यन्ति धीरा स्सुमनसा वाचमक्रतः । तेजनासोऽमृतत्वं भजन्ते । विश्वामित्रशापाद्विमुक्ता भव । अस्माक इत्यस्य मन्त्रस्य ब्रह्मा ऋषिः अनुष्टुछन्दः । सूर्यो देवता गौतम शापविमोचने विनियोगः । अस्माकमुत मंगळधिश्रवोसि देवसूर्यः परिषद्यः तां पश्यन्ति धीरा स्सुमनसा वाच मक्रतः । तेजनासोऽमृतत्वं भजन्ते । गौतमशापाद्विमुक्ता भव । ओष्ठाभिधानानकुलीदन्तैः परिवृतापविः । सर्वस्यै वाच ईशाना चारु मामिह वादयेत् । तां पश्यन्ति धीरा स्सुमनसा वाचमक्रतः ।

तेजनासोऽमृतत्वं भजन्ते। नकुलीशापाद्विमुक्ता भव। सुमुखं सम्पुटं चैव विततं विस्तृतं तथा। द्विमुखं त्रिमुख चैव चतुः पञ्चमुखोन्नतम्। षण्मुखाधोमुखी चैव व्यासकाञ्जलिकं तथा। शकटं यमपाशं च ग्रथितं सन्मुखोन्मुखम्। प्रलम्बं मुष्टिकं चैव मत्स्यः कूर्मवराहकम्। सिंहाक्रान्तं महाक्रान्तं मुद्गरं पल्लवं तथा। एते मुद्राः प्रयोक्तव्याः गायत्र्या स्सुप्रकीर्तिताः। शतकृत्वा तु गायत्री दशकृत्वा तुरीयकं अन्ते चायुतगायत्री आदौ शापविमोचनम्। जपादौ पाशबीजं च जपान्तेंकुशबीजकम्। जपमध्ये तु मायायास्त ज्जपस्सफलं भवेत्। पञ्चपूजां कृत्वा। अनन्तरं यथाशक्ति गायत्रीजपः। ओं तत्सवितुर्वरेण्यं भर्गो देवस्य-धीमहि धियो यो नः प्रचोदयात्। ओं ४ ओं भूः ओं भुवः ओगं सुवः ओं महः ओं जनः ओं तपः ओगं सत्यं श्रीं ह्रीं क्लीं ऐं सौ. ओं ह्रीं श्रीं तत्सवितुर्वरेणियं क ५ भर्गो देवस्य धीमहि ह ६ धियो यो नः प्रचोदयात्। स ४ परोरजसि सावदों हसकल हसकहल सकलह्रीं सौः ऐं क्लीं ह्रीं श्रीं ओमापोज्योतीरसोऽमृतं ब्रह्म भूर्भुवस्सुवरोम्। ऐं क्लीं सौः क्लीं ऐं ओं परो-रजसिसावदों दों वसासि जररोप ओं ओं नमो नारायणाय। अन्ते अयुत गायत्रीजपः। ओं भूर्भुव स्सुवर्महर्जनस्तपस्सत्यं तद्ब्रह्म तदाप आपो ज्योती-रसोऽमृतं ब्रह्म भूर्भुवस्सुवरोम्। सुरभिर्ज्ञानचक्रे च यानिः कूर्मोधपङ्कजं लिङ्गनिर्वाणकं चैव अष्टौ मुद्राः प्रकीर्तिताः।

## — अथ सायमुपस्थानम् —

इमं मे वरुणश्रुधीहवमद्याचमृडय त्वा मवस्युराचके तत्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः अहेडमानो वरुणेह बोध्युरुशगं समान आयः प्रमोषिः यच्छिद्धिते विशो यथा प्रदेव वरुणव्रतं मिनीमसि द्यविद्यवि। यत्किञ्चेदं वरुणदैव्ये जनेभिद्रोहं मनुष्याश्चरामसि अचित्तीयत्तवधर्मायुयोपि ममानस्तस्मादेनसो देवरीरिषः कितवासो यद्रि रिपूर्नदीवी यद्वाघा सत्यमुतयन्न विद्म। सर्वाताविष्य शिथिरेव देवाथा ते स्यामवरुण प्रियासः। ओं नमः प्रतीच्यै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नमः। प्राच्यै दिशे याश्च

देवता एतस्यां प्रतिवसन्येताभ्यश्च नमोनम। दक्षिणायै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नम। ऊर्ध्वायै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नम। धरायै दिशे याश्च देवता एतस्यां प्रतिवसन्त्यैताभ्यश्च नमो नमो। वान्तरायै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नमो। गङ्गायमुनयोर्मध्ये ये वसन्ति ते मे प्रसन्नात्मान श्चिरञ्जीवितं वर्धयन्ति। नमो गङ्गायमुनयोर्मुनिभ्यश्च नमो नमो। गङ्गायमुनयोर्मुनिभ्यश्च नमः। सन्ध्यायै नमः सावित्र्यै नमः गायत्र्यै नमः सरस्वत्यै नमः सर्वाभ्यो देवताभ्यो नमः देवेभ्यो नमः ऋषिभ्यो नमः मुनिभ्यो नमः गुरुभ्यो नमः मातृभ्यो नमः पितृभ्यो नमः कामोकारीषीन्मन्युरकर्षी न्नमो नमः। पृथिव्यासस्तेजो वायुराकाशात् ओं नमो भगवते वासुदेवाय।

यागं् सदा सर्वभूतानि चराणि स्थावराणि च।
सायंप्रातर्नमस्यन्ति सा मा सन्ध्याभिरक्षतु॥

शिवाय विष्णुरूपाय शिवरूपाय विष्णवे
शिवस्य हृदयं विष्णुर्विष्णोश्च हृदयं शिवः।
यथा शिवमयो विष्णुरेवं विष्णुमयः शिवः
यथान्तरं न पश्यामि तथा मे स्वस्तिरायुषि।

नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च।
जगद्धिताय कृष्णाय गोविन्दाय नमो नमः॥

आकाशात्पतितं तोयं यथा गच्छति सागरम्।
सर्वदेवनमस्कारः केशवं प्रति गच्छति॥

श्री केशवं प्रति गच्छत्योन्नम इति।

उत्तमे शिखरे जाते भूम्यां पर्वतमूर्धनि।
ब्राह्मणेभ्योह्यनुज्ञाता गच्छ देवि यथासुखम्॥

स्तुतो मया वरदा वेदमाता प्रचोदयन्ती पवने द्विजाता ।
आयः पृथिव्यां द्रविणं ब्रह्मवर्चसं मह्यं दत्वा प्रजातं ब्रह्मलोकम् ॥

नमोस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे ।
सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः ॥

इदं द्यावापृथिवी सत्यमस्तु पितर्मातर्यदिहोपब्रुवेवाम् ।
भूतं देवानामवमे अवोभिः ।
विद्यामेषं वृजिनं जीरदानम् ॥

सर्ववेदेषु यत्पुण्यं सर्वतीर्थेषु यत्फलम् ।
तत्फलं पुरुष आप्नोति स्तुत्वा देवं जनार्दनम् ॥

स्तुत्वा देवं जनार्दन ओं नम इति ।

वासनाद्वासुदेवस्य वासितं ते जगत्त्रयम् ।
सर्वभूतनिवासोसि वासुदेव नमोस्तु ते ॥

चतुस्सागरपर्यन्तं गोब्राह्मणेभ्य श्शुभं भवतु । अहं भो अभिवादये ।
आचम्य –

कायेन वाचा मनसेन्द्रियैर्वा बुध्यात्मना वा प्रकृतेस्स्वभावात् ।
करोमि यद्यत्सकलं परस्मै श्रीमन्नारायणायेति समर्पयामि ॥

सर्वं श्रीकृष्णार्पणमस्तु । श्रीहरि वासुदेवार्पणमस्तु ॥

अद्यानो देवसवितः प्रजावत्सावीस्सौभगं परा दुष्वप्नियगं सुव ।
विश्वानि देवसवितुर्दुरितानि परासुवयद्भद्रं तन्म आसुव ।

॥ इति सायंसन्ध्याविधिः ॥

## — तान्त्रिकसायंसन्ध्याविधिः —

विधिवदाचम्य त्रिः प्राणानायम्य ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं श्रीमहात्रिपुरसुन्दरी परदेवतामुद्दिश्य श्रीमहात्रिपुरसुन्दरी परदेवता प्रीत्यर्थं सायंसन्ध्यामुपासिष्ये । देवीमानरीत्या संकल्प्य । गुरुपादुकां कृत्वा ।

श्रीनाथादि गुरुत्रयं गणपतिं पीठत्रयं भैरवं
सिद्धौघं वटुकत्रयं पदयुगं दूतीक्रमं मण्डलम् ।
वीराद्व्यष्टचतुष्कषष्टिनवकं वीरावळीपञ्चकं
श्रीमन्मालिनि मन्त्रराजसहितं वन्दे गुरोर्मण्डलम् ।

गुरुपादुका मनुच्चार्य स्तम्भनचतुरश्रमत्स्यगोखुरयोन्याख्याभिः पञ्च मुद्राभिः श्रीगुरुं प्रणम्य मूलमन्त्रं ऋष्यादिध्यानान्तं विधाय स्वपुरतः धेनुमुद्रया जलममृतीकृत्य मूलविद्ययाष्टवार मभिमन्त्र्य अं नमः आं नमः इं नमः ईं नमः उं नमः ऊं नमः ऋं नमः ॠं नमः लृं नमः ॡं नमः एं नमः ऐं नमः ओं नमः औं नमः अं नमः आः नमः कं नमः खं नमः गं नमः घं नमः ङं नमः चं नः छं नमः जं नमः झं नमः ञं नमः टं नमः ठं नमः डं नमः ढं नमः णं नमः तं नमः थं नमः दं नमः धं नमः नं नमः पं नमः फं नमः बं नमः भं नमः मं नमः यं नमः रं नमः लं नमः वं नमः शं नमः षं नमः सं नमः हं नमः ळं नमः क्षं नमः प्रत्येकं शिरसि प्रोक्ष्य 'ओं ४ क १५ इति मूलविद्यया त्रिः प्रोक्ष्य सूर्यमण्डले देवीं यथोक्तरूपां ध्यायेत् ।

ध्यानम् – सकुंकुमविलेपनामळिकचुम्बिकस्तूरिकां
समन्दहसितेक्षणां सशरचापपाशांकुशाम् ।
अशेषजनमोहिनीमरुणमाल्यभूषाम्बरां
जपाकुसुमभासुरां जपविधौ स्मरेदम्बिकाम् ॥

चतुर्भुजे चन्द्रकळावतंसे कुचोन्नते कुंकुमरागशोणे ।
पुण्ड्रेक्षुपाशांकुशपुष्पबाणहस्ते नमस्ते जगदेकमातः ॥

दक्षिणहस्ते जलमादाय लं वं रं यं हमिति पाञ्चभौतिकमन्त्रै स्त्रिवारमभिमन्त्र्य। क १५ मूलविद्यया तज्जलबिन्दुभिः वामांगुष्ठाऽनामिकाभ्यां स्वशिरसि त्रिः प्रोक्ष्य । अवशिष्टजलं वामहस्ते निधाय। तेजोरूपं तज्जलमिडयाऽऽकृष्य स्वदेहान्तःस्थितं सकलकलुषं प्रक्षाळ्य । तज्जलं कृष्णवर्णं विभाव्य । पिङ्गळया बहिर्निर्गतं स्मृत्वा तज्जलं पुनः दक्षिणहस्ते कृत्वा स्ववामभागे जलवज्रशिलां ध्यात्वा ओं श्लीं पशुहुं फट् इति पाशुपतास्त्रमन्त्रेण तस्य शिलाया मास्फाल्य हस्तौ प्रक्षाळ्य क १५ मूलविद्यया जलमादाय प्रवहन्नाड्या सहस्रदळकमलगतपरमामृते नैकीभूतं विभाव्य राजदन्तविवरान्नेत्रमार्गेण निर्गमय्य तज्जलं वामकरे निदाय तेन जलेन अमृतमालिनी स्वाहेति मन्त्रेण स्वशिरसि त्रिः प्रोक्ष्य ओं ४ आत्मतत्वं शोधयामि स्वाहा । ओं ४ ह ६ विद्यातत्वं शोधयामि स्वाहा । ओं ४ स ४ शिवतत्वं शोधयामि स्वाहा । ओं ४ स ४ शिवतत्वं शोधयामि स्वाहा । ओं ४ ह ६ विद्यातत्वं शोधयामि स्वाहा । ओं ४ क ५ आत्मतत्वं शोधयामि स्वाहा । ओं ४ क ५ सर्वतत्वं शोधयामि स्वाहा। इति च त्रिधा एवं नवधा जलं पिबेत्। अर्घ्यमञ्जलिनादायोत्थाय । क ५ वाग्भवेश्वरी विद्महे ह ६ कामेश्वरी च धीमहि स ४ तन्नशक्तिः प्रचोदयात् । श्रीमहात्रिपुरसुन्दरी श्रीपादुकायै अर्घ्यं कल्पयामि स्वाहा । इति त्रिरर्घ्यं दत्वा ॥

ह्रां ह्रीं स श्रीं सूर्य एष तेऽर्घ्यं स्वाहा। इति सूर्याभिमुख मर्घ्याञ्जलित्रयं दत्वा । मूलविद्यया देवीं त्रिस्सन्तर्प्य । क १५ श्री महात्रिपुरसुन्दरी श्रीपादुकां तर्पयामि । (ह्रां ह्रीं स श्रीसूर्यं तर्पयामि नमः । इति त्रिस्सन्तर्प्य सायमाज्ञाचक्रे हृक्षाब्जे, चन्द्रमण्डले मूलविद्या तृतीयकूटं शुद्धस्फटिकसङ्काशं ब्रह्म-

रन्ध्रस्थपूर्णेन्दुमण्डलगतं ध्यात्वा। तत्तेजः वहन्नासापुटेनाकाशस्थ सोममण्डले समावाह्य। तदुद्भूतां देवीं वृद्धां ध्यायेत्।

शुक्लां शुक्लांबरालेपस्रग्विभूषाविभूषितां
जटाजूटत्रया नेत्रत्रयोद्भासि मुखाम्बुजाम्।
ईषस्फुटितदंष्ट्रां च भैरवीरूपमास्थितां
जरापलितसङ्कीर्णां लम्बमानपयोधराम्॥

पाशांकुशौ पुस्तुकं च स्फटिकाक्षस्रजं करैः
दधानां शक्तिबीजोत्थां पूर्णेन्दोर्मण्डले स्थिताम्।
ध्यायेदाद्यां परां शक्तिं शक्तिमद्भिर्निषेवितां
भोगमोक्षप्रदां शान्तां भवन्तां ममृतेश्वरीम्॥

मूलविद्या तृतीयकूट मुच्चार्य। तद्यथा स ४ त्रिपुरामृतेश्वरी श्रीपादुकां पूजयामि इति संपूज्य। तार्तीयीक गायत्रीमुच्चार्य तद्यथा। सौः त्रिपुरादेवी विद्महे शक्तीश्वरी च धीमहि तन्नोमृता प्रचोदयात्। त्रिपुरामृतेश्वरी अर्घ्यं कल्पयामि नम स्वाहा। इति त्रिरर्घ्यं दत्वा। स ४ त्रिपुरामृतेश्वरि श्रीपादुकां तर्पयामि नमः इति त्रिस्सन्तर्प्य। गुरुपादुका मुच्चार्य ओं ४ क १५ दिननित्यविद्याहंसः अं नमः (शिरसि) ओं ४ क १५ दिननित्यविद्याहंसः आं नमः (मुखवृते) ओं ४ क १५ दिननित्यविद्याहंसः इं नमः (दक्षिणनेत्रे) ओं ४ क १५ दिननित्यविद्याहंसः ईं नमः (वामनेत्रे) ओं ४ क १५ दिननित्यविद्याहंसः उं नमः (दक्षिणकर्णे) ओं ४ क १५ दिननित्यविद्याहंसः ऊं नमः (वामकर्णे) ओं ४ क १५ दिननित्यविद्याहंसः ऋं नमः (दक्षिणनासापुटे) ओं ४ क १५ दिननित्यविद्याहंसः ॠं नमः (वामनासापुटे) ओं ४ क १५ दिननित्यविद्याहंसः लृं नमः (दक्षिणगण्डे) ओं ४ क १५ दिननित्यविद्याहंसःॡं नमः (वामगण्डे) ओं ४ क १५ दिननित्यविद्याहंसः एं नमः (ऊर्ध्वोष्ठे) ओं ४ क १५ दिननित्यविद्याहंसः

ऐं नमः (अधरोष्ठे) ओं ४ क १५ दिननित्यविद्याहंसः ओं नमः (ऊर्ध्वं दन्तपंक्तौ) ओं ४ क १५ दिननित्यविद्याहंसः औं नमः (अधोदन्तपक्तौ) ओं ४ क १५ दिननित्यविद्याहंसः अं नमः (शिरोवृत्ते) ओं ४ क १५ दिननित्यविद्याहंसः अः नमः (जिह्वाग्रे) ओं ४ क १५ दिननित्यविद्याहंसः कं नमः (दक्षिणबाहुमूले) ओं ४ क १५ दिननित्यविद्याहंसः खं नमः (तत्कूर्परे) ओं ४ क १५ दिननित्यविद्याहंसः गं नमः (दक्षिणमणिबन्धे) ओं ४ क १५ दिननित्यविद्याहंसः घं नमः (वाममणिबन्दे) ओं ४ क १५ दिननित्यविद्याहंसः ङं नमः (दक्षिणकरांगुळचग्रे) ओं ४ क १५ दिननित्यविद्याहंसः चं नमः (वामबाहुमूले) ओं ४ क १५ दिननित्यविद्याहंसः छं नमः (तत्कूर्परे) ओं ४ क १५ दिननित्यविद्याहंसः जं नमः (वाममणिबन्दे) ओं ४ क १५ दिननित्यविद्याहंसः झं नमः (वामकरांगुळिमूले) ओं ४ क १५ दिननित्यविद्याहंसः ञं नमः (वामकरांगुळचग्रे) ओं ४ क १५ दिननित्यविद्याहंसः टं नमः (दक्षिणोरुमूले) ओं ४ क १५ दिननित्यविद्याहंसः ठं नमः (दक्षिणजानुनि) ओं ४ क १५ दिननित्यविद्याहंसः डं नमः (दक्षिणगुल्भे) ओं ४ क १५ दिननित्यविद्याहंसः ढं नमः (दक्षिणपादांगुळिमूले) ओं ४ क १५ दिननित्यविद्याहंसः णं नमः (दक्षिणपादांगुळचग्रे) ओं ४ क १५ दिननित्यविद्याहंसः तं नमः (वामोरुमूले) ओं ४ क १५ दिननित्यविद्याहंसः थं नमः (वामजानुनि) ओं ४ क १५ दिननित्यविद्याहंसः दं नमः (वामगुल्भे) ओं ४ क १५ दिननित्यविद्याहंसः धं नमः (वामपादांगुळिमूले) ओं ४ क १५ दिननित्यविद्याहंसः नं नमः (वामपादांगुळचग्रे) ओं ४ क १५ दिननित्यविद्याहंसः पं नमः (दक्षिणपार्श्वे) ओं ४ क १५ दिननित्यविद्याहंसः फं नमः (वामपार्श्वे) ओं ४ क १५ दिननित्यविद्याहंसः बं नमः (पृष्ठे) ॐ ४ क १५ दिननित्यविद्याहंसः भं नमः (नाभौ) ॐ ४ क १५ दिननित्यविद्याहंसः मं नमः (जठरे) ॐ ४ क १५ दिननित्यविद्याहंसः यं नमः (हृदये) ॐ ४ क १५ दिननित्यविद्याहंसः रं नमः (दक्षिणस्कन्धे) ॐ ४ क १५ दिननित्यविद्याहंसः लं नमः

(गळपृष्ठे) ॐ ४ क १५ दिननित्यविद्याहंसः वं नमः (वामस्कन्धे) ॐ ४ क १५ दिननित्यविद्याहंसः शं नमः (हृदयादि दक्षिणकरांगुळ्यन्तं) ॐ ४ क १५ दिननित्यविदयाहंसः षं नमः (हृदयादि वामकरांगुळ्यन्तं) ॐ ४ क १५ दिननित्यविदयाहंसः सं नमः (हृदयादि दक्षिणपादांगुळ्यन्तं) ॐ ४ क १५ दिननित्यविदयाहंसः हं नमः (हृदयादि वामपादांगुळ्यन्तं) ॐ ४ क १५ दिननित्यविद्याहंसः ळं नमः (कट्यादि पादांगुळ्यन्तं) ॐ ४ क १५ दिननित्यविद्याहंसः क्षं नमः (कट्यादिब्रह्मरन्ध्रान्तं) ॐ ४ क १५ दिननित्यविद्याहंसः क्षं हसौ नमः इति त्रिर्व्यापकत्वेन सर्वाङ्गव्यापकं कुर्यात्। तुरीयविद्यागायत्रीं जपेत्। यथा क ५ वाग्भवेश्वरी विद्महे ह ६ कामेश्वरी च धीमहि स ४ तन्नशक्तिः प्रचोदयात्। शक्तिकूटगायत्री मुच्चार्य तदयथा। सौः त्रिपुरादेवी विद्महे शक्तीश्वरी च धीमहि तन्नोमृता प्रचोदयात्। यथाशक्ति जपित्वा। सायाह्ने षोडशनित्यात्मकत्वेन मूलविदयां जपेत्। तदयथा – सायमाज्ञासरोजस्थ चन्द्रकोटि समदयुतिम्। शक्तिबीजात्मिकां चापबाणपाशांकुशान्विताम्। युगनित्याक्षरां देवीं घटिकावरणां पराम्। चिन्तयित्वा भगवतीं नित्याभिः परिवारिताम्। पुस्तकं चाक्षसूत्रं च दधानां स्मेरवक्त्रताम्। नित्या षोडश आज्ञायां सायङ्काले तु संस्मरेत्।

॥ इति देवीं ध्यात्वा तिथिनित्या जपेत् ॥

ॐ ४ क १५ दिननित्यविदयाहंसः ३ अं ऐं सकलह्रीं नित्यक्लिन्ने मदद्रवे सौ अं कामेश्वरी नित्याश्री। ॐ ४ क १५ दिननित्यविदयाहंसः ३ अं ऐं भगभुगे भगिनि भगिनि भगोदरि भगमाले भगावहे भगगुह्ये भगयोनि भगनिपातिनि सर्वभगवशंकरि भगरूपे नित्यक्लिन्ने भगस्वरूपे सर्वाणि भगानि मेह्यानय वरदे सुरेते भगक्लिन्ने क्लिन्नद्रवे क्लेदय द्रावय अमोघे भगविच्चेक्षुभक्षोभय सर्वसत्वान्भगेश्वरी ऐं ब्लूं जें ब्लूं भें ब्लूं मों ब्लूं हें ब्लूं हें क्लिन्ने सर्वाणि भगानि मे वशमानय स्त्रीं ह्लां ब्लें ह्रीं अं भगमूलनी नित्या श्री पाननमः।

ॐ ४ क १५ दिननित्यविद्याहंसः ३ इं ॐ ह्रीं नित्यक्लिन्ने मदद्रवे स्वाहा इं नित्यक्लिन्ना नित्या श्री। ॐ ४ क १५ दिननित्यविद्याहंसः ३ ईं ॐ क्रों भ्रों क्रों झ्रौं छ्रौं ज्रैं स्वाहा ईं भेरुण्डा नित्या श्री। ॐ ४ क १५ दिननित्यविद्याहंसः ३ उं ह्रीं वह्निवासिन्यै नमः उं वह्निवासिनी नित्या श्री। ॐ ४ क १५ दिननित्यविद्याहंसः ३ ऊं ह्रीं क्लिन्ने ऐं क्रों नित्यमदद्रवे ह्रीं ह्रं ऊं महावज्रेश्वरि नित्याश्री। ॐ ४ क १५ दिननित्यविद्याहंसः ३ ऋं ह्रीं शिवदूत्यै नमः ऋं शिवदूती नित्याश्री। ॐ ४ क१५ दिननित्य-विद्याहंसः ३ ॠं ॐ ह्रीं हुं खेचछेक्षः स्त्रीं हुं क्षें ह्रीं फट् ॠं त्वरिता नित्याश्री। ॐ ४ क १५ दिननित्यविद्याहंसः ३ लुं ऐं क्लीं सौः लुं कुळसुन्दरी नित्याश्री। ॐ ४ क १५ दिननित्यविद्याहंसः ३ लूं हसकलरडैं हसकलरडीं हसकलरडौः लूं नित्या नित्या श्री। ॐ ४ क १५ दिननित्यविद्याहंसः ३ एं ह्रीं फ्रें स्रूं क्रों आं क्लीं ऐं ब्लूं नित्यमदद्रवे हुं फ्रें ह्रीं एं नीलपताका नित्या श्री। ॐ ४ क १५ दिननित्यविद्याहंसः ३ ऐं भमरयां ऐं विजया नित्या श्री। ॐ ४ क १५ दिननित्यविद्यासंसः ३ ओं सौः सर्वमङ्गळा नित्या श्री। ॐ ४ क १५ दिननित्यविद्याहंसः ३ औं ॐ नमो भगवति ज्वालामालिनि देवदेवि सर्वभूतसंहारकारिके जातवेदसि ज्वलन्ति ज्वल २ प्रज्वल २ ह्रां ह्रीं ह्रूं रररररर हुं फट् स्वाहा औं ज्वालामालिनी नित्या श्री। ॐ ४ क १५ दिननित्यविद्याहंसः ३ अं च्कौं चित्रा नित्या श्री। ॐ ४ क १५ दिननित्य-विद्याहंसः ३ अः क १५ महानित्या श्री। शुक्लपक्षे एवं जपेत्। कृष्णपक्षे तु विलोमतया जपेत्। क १५ यथाशक्ति जपित्वा। भ्रूमध्यादि ब्रह्मरन्ध्रान्तं तृतीयकूटं शरच्चन्द्रकोटिनिभं ध्यायन्। स ४ तृतीयकूटं जपेत्। जपं देव्यै समर्प्य।

## — उपस्थानम् —

वरुणमग्निमन्वारभामहे आदित्या न्विष्णुगं सूर्यं ब्रह्माणं च बृहस्पतिं देवस्य त्वा सवितुः प्रसवेश्वनोर्बाहुभ्यां पुष्णो हस्ताभ्यागं सरस्वत्यै वाचो यन्तु-

र्यन्त्रेणाग्ने स्त्वा साम्राज्ये नाभिषिञ्चामीन्द्रस्य बृहस्पतेस्त्वासाम्राज्येनाभिषिञ्चामि इति मन्त्रमुच्चार्य ।

नमस्ते मङ्गळावासे सर्वज्ञे करुणानिध ।
ब्रह्मपत्नि नमस्तेस्तु मम पाशं च नाशय ॥

नमः प्राच्यै दिशे देवि प्रागधिष्ठानदेवते ।
वागीश्वरी नमस्तेस्तु धियो यो नः प्रचोदयात् ॥

दक्षिणायैदिशे देवि ब्रह्मविद्ये सरस्वति ।
विष्णुपत्नि नमस्तेस्तु मम पाशं च नाशय ॥

दक्षिणादिगधिष्ठात्रि धियो यो नः प्रचोदयात् ॥

पश्चिमायै दिशे देवि ब्रह्मविदचे सरस्वति ।
अन्नपूर्णे नमस्तेस्तु मम पाशं च नाशय ॥

रुद्रपत्नि नमस्तेस्तु धियो यो नः प्रचोदयात् ॥

महातुरीये सर्वज्ञे सर्वलोकदयापरे ।
उदीच्यै च दिशे देवि शिवपत्नि नमोस्तु ते ॥

उदग्दिशासमारूढे मम पाशं च नाशय ।
प्रसीद वरदे देवि धियो यो नः प्रचोदयात् ॥

व्योमदेशादधिष्ठाने गगनान्तरचारिणि ।
प्रसीद वरदे देवि मम पाशं च नाशय ।
त्रिपुरेशि नमस्तेस्तु धियो यो नः प्रचोदयात् ॥

अध दिशिस्थे वरदे पाताळान्तरचारिणि ।
पृथ्वि त्वां च नमस्तेस्तु मम पाशं च नाशय ।
भूम्यधिष्ठानदेवेशि धियो यो नः प्रचोदयात् ॥

आवान्तरदिशे तस्यै चान्तरिक्षाधिदेवते ।
त्रिपुरेशि नमस्तेस्तु मम पाशं च नाशय ।
प्रसन्नवरदे देवि धियो यो वः प्रचोदयात् ।।

इति कालत्रयेप्येक मुपस्थानं तु सर्वदा ।
त्रिपुरा सर्वरूपाणि चराणि स्थावराणि च ।
सायंप्रातस्तु मध्याह्ने सर्वदा नापरा स्थिता ।
उत्तमे शिखरे जाते भूम्यां पर्वतमूर्धनि ।
ब्राह्मणेभ्योभ्यनुज्ञाता गच्छ देवि यथासुखम् ।।

गुं गुरुभ्यो नमः । दुं दुर्गायै नमः । गं गणपतिये नमः । क्षं क्षेत्रपालकाय नमः । क्षं सरस्वत्यै नमः । पं परमात्मने नमः ।

श्रीशिवाचार्यवर्यादयां शङ्कराचार्यमध्यमां ।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम् ।।

दिव्यश्रीपादुकां ध्यात्वा परितुष्याम्यहं सदा ।
गुरुं परमं वन्दे पश्चात्तं परमं गुरुम् ।
परमेष्ठिगुरुं वन्दे परापरगुरुं भजे ।
आनन्दाख्यगुरुं वन्दे तच्छिष्यस्तत्कृपावशः ।
श्रीनाथादींश्च सम्पूज्य सम्प्रदायक्रमादहम् ।

श्रीगुरुपादुकामुच्चार्य आनन्दस्वच्छन्दचिद्रूपानन्द स्वगोत्र स्वनाम शर्मा-वर्माहंभोऽभिवादये । देवीं प्रणाम्य । सूर्यमण्डलाच्चन्द्रमण्डलाच्च देवी ममृतेश्वरीं च विसृजेत् ।

।। इति तान्त्रिकसायंसन्ध्याविधिः ।।

## — अथ तुरीयसन्ध्याविधिः —

विधिवदाचम्य – मूलविद्यया शिखां बध्वा। मूलेन त्रिः प्राणानायम्य। मम उपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं श्रीमहात्रिपुरसुन्दरी परदेवता मुद्दिश्य श्रीमहात्रिपुरसुन्दरी परदेवताप्रीत्यर्थं तुरीयसन्ध्यामुपासिष्ये। देवी मानेन सङ्कल्प्य गुरुपादुकां कृत्वा मूलविद्यया ऋष्यादि ध्यानान्तं विधाय स्वपुरतः धेनुमुद्रया जलममृतीकृत्य मूलविद्ययाष्टवारमभिमन्त्र्य तेन जलेन मार्जनं कुर्यात्। अं नमः आं नमः इं नमः ईं नमः उं नमः ऊं नमः ऋं नमः ॠं नमः लृं नमः ॡं नमः एं नमः ऐं नमः ओं नमः औं नमः अं नमः आः नमः कं नमः खं नमः गं नमः घं नमः ङं नमः चं नः छं नमः जं नमः झं नमः ञं नमः ट नमः ठं नमः डं नमः ढं नमः णं नमः तं नमः थं नमः दं नमः धं नमः नं नमः पं नमः फं नमः बं नमः भं नमः मं नमः यं नमः रं नमः लं नमः वं नमः शं नमः षं नमः सं नमः हं नमः ळं नमः क्षं नमः प्रत्येकं शिरसि प्रोक्ष्य। क १५ मूलविद्यया त्रिः प्रोक्ष्य दक्षिणहस्तेन जलमादाय। लं वं रं यं हं इति पाञ्चभौतिकमन्त्रै स्त्रि रभिमन्त्र्य क १५ मूलविद्यया त्रि रभिमन्त्र्य तज्जलबिन्दुभिः वामांगुष्ठानामिकाभ्यां मूलविद्यया स्वशिरसि त्रिः प्रोक्ष्य अव-शिष्टजलं वामहस्ते निधाय तेजोरूपं तज्ज लमिडयाऽऽकृष्य स्वदेहान्तस्थित सकल-कलुषं प्रक्षाळ्य तज्जलं कृष्णवर्णं विभाव्य पिङ्गळया बहिर्निर्गतं स्मृत्वा तज्जलं पुनः दक्षिणहस्ते कृत्वा स्ववामभागे ज्वलद्वज्रशिलां ध्यात्वा ॐ क्लीं पशुहुंफट् इति पाशुपतास्त्रमन्त्रेण तस्यां शिलया मास्फाल्य हस्तौ प्रक्षाळ्य क १५ मूल-विद्यया जलमादाय प्रवहन्नाड्या सहस्रदळकमलगते परमामृते नैकीभूतं भाव-यित्वा राजदन्तविबरान्नेत्रमार्गेण निर्गम्य तज्जलं वामकरे निधाय तेन जलेन अमृतमालिनी स्वाहेति मन्त्रेण करैः स्वशिरसि त्रिः प्रोक्ष्य। ॐ ४ क ५ आत्मतत्वं शोधयामि स्वाहा। ॐ ४ ह ६ विद्यातत्वं शोधयामि स्वाहा। ॐ ४ स ४ शिवतत्वं शोधयामि स्वाहा। ॐ ४ स ४ शिवतत्वं शोधयामि स्वाहा। ॐ ४ ह ६ विद्यातत्वं शोधयामि स्वाहा। ॐ ४ क ५आत्मतत्वं

शोधयामि स्वाहा । क १५ सर्वतत्वं शोधयामि स्वाहा इति त्रिधा । एवं नवधा जलं पिबेत् ।

सहस्रारकमले मूलविद्यया तुरीयकूटं त्रयोदशाक्षररूपं पद्मरागसमप्रभम् ध्यात्वा वहन्नासापुटेन तारकमण्डलाद्बहिः परमाकाशे समावाह्य तदुद्भूतां तेजोरूपां कूटमुच्चार्य हसकल हसकहल सहलह्रीं श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः इति त्रिस्संपूज्य पुनस्तार्तीयीककूटगायत्रीमुच्चार्य क ५ वाग्भ-वेश्वरी विद्महे ह ६ कामेश्वरी च धीमहि स ४ तन्न श्शक्तिः प्रचोदयात् । श्रीमहात्रिपुरसुन्दरी श्रीपादुकायै अर्घ्यं कल्पयामि स्वाहा इति त्रिरर्घ्यं दत्वा पुनस्तुरीयकूटमुच्चार्य तद्यथा - हसकल हसकहल सहलह्रीं श्रीमहात्रिपुरसुन्दरी श्रीपादुकां तर्पयामीति त्रि स्सन्तर्प्य गुरुपादुकामुच्चार्य तुरीयगायत्रीं जप्त्वा तद्यथा क ५ वाग्भवेश्वरी विद्महे ह ६ कामेश्वरी च धीमहि स ४ तन्नश्शक्तिः प्रचोदयात् इति यथाशक्ति जपः । क १५ यथाशक्तिजपः । हसकल हसकहल सकलह्रीं प्राणायामपूर्वकं जपं देव्यै निवेद्य स्तुत्वा

उपस्थानम् - त्रिपुरा सर्वरूपाणि चराणि स्थावराणि च ।
सायंप्रातस्तु मध्याह्ने सर्वदा सा परा स्थिता ॥
उत्तमे शिखरे जाते भूम्यां पर्वतमूर्धनि ।
ब्राह्मणेभ्यो ह्यनुज्ञाता गच्छ देवि यथासुखम् ॥

आनन्दस्वच्छन्दचिद्रूपानन्दगोत्रः स्वनामशर्माहं भो अभिवादये ।

॥ इति तुरीयसन्ध्याविधिः ॥

## — अथ औपासनविधिः —

आचम्य – दैवी गायत्री छन्दः प्राणायामे विनियोगः । ॐ भूः ॐ भुवः ओगं सुवः ॐ महः ॐ जनः ॐ तपः ओगं सत्यं ॐ तत्सवितुर्वरेण्यं भर्गो

देवस्य धीमहि धियो यो नः प्रचोदयात् ओमापो ज्योतीरसोऽमृतं ब्रह्म भूर्भुव स्सुवरोम् । मम उपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं शुभतिथौ शोभने मुहूर्ते अद्यब्रह्मणः द्वितीयपरार्धे श्वेतवराहकल्पे वैवस्वतमन्वन्तरे कलियुगे प्रथमपादे जम्बूद्वीपे भरतवर्षे भरतखण्डे अस्मिन् वर्तमाने व्यावहारिकचान्द्र-मानेन .... संवत्सरे .... अयने .... ऋतौ .... मासे .... पक्षे.... तिथौ वासरा-न्वितायां शुभनक्षत्र शुभयोग शुभकरण एवंगुणविशेषणविशिष्टायां शुभतिथौ प्रातः .... सायं .... औपासनं तण्डुलैर्होष्ये । इति संकल्प्य ।

भूर्भुवस्सुवरोमिति अग्निं प्रतिष्ठाप्य - उपावरोह जातवेदः पुनस्त्वं देवेभ्यो हव्यं वह नः प्रजानन् आयुः प्रजागं रयिमस्मासु देह्यजस्रोदीदिहिनो दुरोणे । अग्निमिध्वा । चत्वारि शृंगास्त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य त्रिधा बद्धो वृषभोरोरवीति महोदेवो मर्त्यागं आविवेश । यज्ञेश्वरं ध्यायामि । सप्तहस्तश्चतुश्शृंगस्सप्तजिह्वो द्विशीर्षकः त्रिपात्प्रसन्नवदनस्सुखासीन श्शुचिस्मतः । स्वाहां तु दक्षिणे पार्श्वे देवीं वामे स्वधां तथा । बिभ्रद्दक्षिणहस्तै स्तु शक्तिमन्नं स्रुच स्रुवम् । तोमर व्यजनं वामै र्घृतपात्रं तु धारयन् । मेषारूढं जटाबद्धं गौरवर्णं महौजसं धूमध्वजं लोहिताक्षं सप्तार्चिस्सर्वकामदम् । आत्माभिमुखमासीनमेवं ध्यायेद्धुताशनम् । एष हि देवः प्रदिशोनु सर्वाः पूर्वो हि जात स्स उ गर्भे अन्तः स विजायमान स्सजनिष्यमाण. प्रत्यङ्मुखास्तिष्ठति विश्वतोमुखः । हे अग्ने प्राङ्मुखो देव मम अभिमुखो भव । सुप्रसन्नो भव । वरदो भव । अग्निं प्रागादि परिसमूह्य ॐ भूर्भुवस्सुवः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् । अग्निमलंकृत्य - अग्नये नमः । हुत वहाय नमः । हुताशने नमः । कृष्णवर्मने नमः । देवमुखाय नमः । सप्तजिह्वाय नमः । वैश्वानराय नमः । जातवेदसे नमः । अदितेन मन्यस्व । अनुमतेनु मन्यस्व । सरस्वतेनुमन्यस्व । देवसवितः प्रसुव होष्यामि । जुहुधि । ॐ सुर्याय स्वाहा । सूर्या-येद अग्नयेस्विष्टकृते स्वाहा । अग्नये स्विष्टकृत इदं न ममेति प्रातः । अग्नये स्वाहा । अग्न य इदं अग्नये स्विष्टकृते स्वाहा अग्नये स्विष्टकृत इदं न ममेति

सायम् । अदितेन्वमग्ग्स्थाः अनुमतेन्वमग्ग्स्थाः सरस्वतेन्वमग्ग्स्थाः देव सवितः प्रासावीः अग्ने त्वं नो अन्तम उतत्राता शिवो भव वरूथ्यः तं त्वा शोचिष्ठदीदिवस्सुम्नाय नूनमीमहे सखिभ्यः वसुरग्निर्वसुश्रवा अच्छानक्षिद्यु-नुत्तमोरयिदाः सनोबोधी शृधीहवमु ऋष्याणो अघायत स्समस्मात् । स्वस्ति श्रद्धां मेधां यशः प्रज्ञां विद्यां बुद्धिं श्रियं बलं आयुष्यं तेज आरोग्यं देहि मे हव्य-वाहन श्रियं देहि मे हव्यवाहन ओं नम इति चतुस्सागरपर्यन्तं अहं भो अभिवादये ।

ओं ओं ओं पूर्वोक्त एवंगुणविशेषणविशिष्टायां शुभतिथौ प्रातः सायं औपासनहोमसाद्गुणार्थं अनाज्ञातत्रयमन्त्रजपं करिष्ये । ओं अनाज्ञातं यदा-ज्ञातं यज्ञास्य क्रियतेमिधु । अग्ने तदस्य कल्पयत्वगं हिवेत्थ यथातथं पुरु संमितो यज्ञो यज्ञः पुरुषसंमितः अग्ने तदस्य कलपयत्वगं हिवेत्थ यथातथं यत्वा कत्रा मनसा दीनदक्षा न यज्ञस्य मन्वते मतान् सः अग्निष्टद्धोताक्रतु विद्विजानन् यजिष्ठो देवागं ऋतुशो यजाति इदं विष्णु विचक्रमे त्रेधा निदधे पदं समूढमस्य पागं सुरे होमाते यज्ञेश्वरं ध्यायामि । आवाहनादि षोडशोपचारपूजां कुर्यात् । यस्य स्मृत्या च नामोक्त्या तपो होमक्रियादिषु । न्यूनं संपूर्णतां याति सद्यो वन्दे तमच्युतम् । मन्त्रहीनं क्रियाहीनं भक्तिहीनं हुताशन । यद्धुतन्तु मया देव परिपूर्णं तदस्तु ते । अनेन प्रातः सायः औपासनहोमेन भगवान्सर्व-देवात्मक. स्वाहादेवीसमेत श्रीयज्ञेश्वरस्सुप्रीतस्सुप्रसन्नो वरदो भवतु । न्यूनाति-रिक्तं सर्वं सगुणमस्तु ।

अग्नेन येत्युपचारः – अग्नेन यसुपधारा ये अस्मान्विश्वानि देववयुनानि विद्वान् युयोध्यस्मज्जुहु राणमेनो भूयिष्ठां ते नम उक्तिं विधेम प्रवश्शुक्राय भानवे भरद्वगं हव्यं मतिं चाग्नये सुपूतं यो दैव्यानि मानुषाजिनूगुष्यं तविश्वानि विद्मना जिगाति अच्छागिरो मतयो देवयंतीरग्निं यंतिद्रविणं भिक्षमाणाः सुसं-द्रृशगं सुप्रतीकग्ग् स्वंचगं हव्यवाहमरतिं मानुषाणां अग्ने त्वमस्मद्युयोध्यमीवा अनग्नित्रा अभ्यमंतकृष्टीः पुनरस्मभ्यगं सुविताय देवाक्षां विश्वेभिरजरेभि-र्यंजत्र अग्ने त्वं पारया नव्यो आस्मां त्स्वस्तिभीरतिदुर्गाणि विश्वा पूश्चपृथ्वी

बहुलान उर्वी भवातोकायतनयायशंयोः प्रकारवोमननावच्यमाना देवद्रीवीं न यद्यदेवयंतः दक्षिणावाड्वाजिनी प्राच्येति हविर्भरन्त्यग्नये घृताची । नमस्ते गार्हपत्याय नमस्ते दक्षिणाग्नये नम आहवनीयाय महावेद्यै नमो नमः। काण्डद्वयोपपाद्याय कर्म ब्रह्मस्वरूपिणे स्वगान् पवगन् रूपाय यज्ञेशाय नमो नमः। यज्ञेशाच्युतगोविन्दमाधवानन्तकेशव कृष्णविष्णो हृषीकेश वासुदेव नमोस्तु ते। अहं परन्ता दहमवस्तादहं ज्योतिषा वितमोववार। यदन्तरिक्षं तदुमे पिता भूदहगं सूर्यमुभयतो ददर्शाहं भूया समुत्तमस्मानानां अनृणा आस्मिन्ननृणाः परस्मिग्ग्स्तृतीये लोके अनृणास्स्याम। ये देवयाना उत पितृयाना स्सर्वान्पथो अनृणा आक्षियेनु प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरे यदि। स्मरणादेव तद्विष्णोस्संपूर्णं स्यादिति स्मृतिः ।। प्रायश्चित्तान्यशेषाणि तपः कर्मात्मकानि वै। यानि तेषामशेषाणां कृष्णानुस्मरणं परम्। विष्णुर्विष्णुर्विष्णुर्विष्णुः रक्षाधारणं बृहत्सानुक्षत्रभृद्वृद्धवृष्णियंत्रिष्टुभौज श्शुभितमुग्रवीरं इन्द्रस्तोमेन पञ्चदशेन मध्यमिदं वातेन सगरेन रक्षा। आत्मन्यग्निं समारोपयेत् याते अग्ने यज्ञियातनूस्त एह्यारोहात्मात्मानमच्चावसूनि कृण्वन्नस्मैनर्यापुरूणि यज्ञो भूत्वा यज्ञमासीदस्वां योनिं जातवेदो भुव आजायमानस्सक्षय एहि।

।। इत्यौपासनविधिः ।।

— अथ ब्रह्मयज्ञः —

आचम्य – प्राणानायम्य – दैवीगायत्रीच्छन्दः प्राणायामे विनियोगः। ओं भूः एवंगुणविशेषणविशिष्टायां शुभतिथौ देवऋषिपितॄनुद्दिश्य देवऋषि पितृप्रीत्यर्थं ब्रह्मयज्ञेन यक्ष्ये।

विदद्युदसि विद्यमे पाप्मान मृतात्सत्यमुपैमि। हस्तानवनिज्य त्रिराचमेत्। द्विः परिमृज्य सकृदुपस्पृश्य शिरः चक्षुषी नासिके श्रोत्रे हृदयमालभ्यमयत्सव्यं पाणीपादौ प्रोक्षति दक्षिणोत्तरौ पाणीपादौ कृत्वा सपवित्रावोमिती प्रतिपद्यत एतद्वै यजुस्त्रयीं विद्यां प्रत्येषा वागे तत्परमसक्षरं तदेतदृचाभ्युक्तं

ऋचो अक्षरे परमे व्योमनस्मिन्देवा अधिविश्वे निषदुर्यस्तन्नवेद कि मृचा-करिष्यति य इत्तद्विदुस्त इमे समासते । एवं त्रिः । ओं भूः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ओगं् सुवः धियो यो नः प्रचोदयात् । ओं भूः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ओं भुवः धियो यो नः प्रचोदयात् ओगं् सुवः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् परोरजसि सावदोम् ।

॥ श्रीगुरुभ्यो नमः हरिः ओम् ॥

इषेत्वोर्जेत्वा वायवस्थोपायवस्थ देवोव स्सविता प्रार्पयतु श्रेष्ठतमायकर्मण आप्यायध्वमघ्निया देवभागमूर्जस्वतीः पयस्वतीः प्रजावतीरनमीवा अयक्ष्मा-मावस्तेन ईशत माघशगं् सो रुद्रस्य हेतिः परिवो वृणक्तु ध्रुवा अस्मिन्गोपतौ स्यातबह्वीर्यजमानस्य पशून्पाहि हरिः ओम् ।

हरिः ओं अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजं होतारं रत्नधातमं हरिः ओं हरिः ओं अग्न आयाहि वीतये गृणानो हव्यदातये । निहोतासत्सिबर्हिषि । हरिः ओं हरिः ओं शन्नो देवीरभिष्ठय आपो भवन्तु पीतये शंयोरभिस्रवन्तु नः हरिः ओं हरिः ओं ब्रह्मसंधत्तं तन्मे जिन्वतं क्षत्रगं् संधत्तं तन्मे जिन्वतं इषगं् संधत्तं ताम्मे जिन्वतम् । ऊर्जगं् संधत्तं ताम्मेजिन्वतम् । रयिगं् संधत्तं ताम्मे-जिन्वतम् । पुष्टिगं् संधत्तं ताम्मेजिन्वतम् । प्रजागं् संधत्तं ताम्मे जिन्वतम् । पशून्संधत्तं ताम्मे जिन्वतम् । स्तुतोसि जनधा देवाऽस्त्वा शुक्रपाः प्रणयंतु सुवीराः प्रजाः प्रजनयन्परीहि हरिः ओम् ।

हरिः ओं भद्रं कर्णेभि श्शृणुयाम देवाः भद्रं पश्येमाक्षभिर्यजत्राः स्थिरै-रङ्गैस्तुष्ठुवागं् सस्तनूभिः । व्यशेम देवहितं यदायुः स्वस्तिन इन्द्रो वृद्धश्रवाः स्वस्तिनः पूषा विश्ववेदाः स्वस्तिनस्तार्क्ष्यो अरिष्टनेमिः स्वस्तिनो बृहस्पति-र्दधातु आपमापामपस्सर्वाः अस्मादस्मादितोमुतः अग्निर्वायुश्च सूर्यश्च सहसञ्च स्करर्धिया भद्रं दधातु हरिः ओं हरिः ओं अथातोदर्शपूर्णमासौ व्याख्यास्यामः । प्रातरग्निहोत्रगं् हुत्वा अन्यमाहवनियं प्रणीय अग्नीनन्वादधाति । वृद्धिरादैच्

अदेंगुणः इकोगुणवृद्धी। गौः ग्मा क्ष्मा ज्मा म य र स त ज भ न ल ग सम्मितं पञ्चसंवत्सरमयं समाम्नाय स्समाम्नातः अथ शीक्षां प्रवक्ष्यामि अथातो धर्मजिज्ञासा अथातो ब्रह्मजिज्ञासा अथातस्सामयाचारिकान् धर्मान्व्याख्यास्यामः। ओं नमो ब्रह्मणे धारणम्मे अस्त्वनिराकरणं धारयिता भूयासं कर्णयोः श्रुतं माचोढ्वं ममामुष्य ओं। ऋतं तपस्सत्यं तपश्श्रुतं तपश्शान्तं तपो दमस्तपश्शमस्तपो दानं तपो यज्ञस्तपो भूर्भुवस्सुवर्ब्रह्मै तदुपास्यै तत्तपः। यथा वृक्षस्य संपुष्पितस्य दूराद्गन्धोवात्येवं पुण्यस्य कर्मणो दूराद्गंधो वाति यथा सिधारां कर्तेव हितामवक्रामे यद्युवेयुवेहवाविह्वयिष्यामि गर्तं पतिष्यामीत्येव ममृताद तस्मानं जुगुप्सेत्। सहनाववतु। सहनौ भुनक्तु। सहवीर्यं करवावहै। तेजस्विनावधीतमस्तु माविद्विषावहै। ओं शान्तिश्शान्तिश्शान्तिः। अह वृक्षस्यरेरिव कीर्तिः पृष्ठं गिरेरिव ऊर्ध्वं पवित्रो वाजिनीव स्वमृतमस्मि द्रविणं सवर्चसं सुमेधा अमृतोक्षितः इति त्रिशंकोर्वेदानुवचनम्। ओं नमो ब्रह्मणे ओं अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि। त्रिः। ओं शान्तिश्शान्तिश्शान्तिः। भूर्भुवस्सुवस्सत्यं तपश्श्रद्धायां जुहोमि। वृष्टिरसि वृश्च मे पाप्मानमृतात्सत्यमुपागाम्।

## — देवर्षिपितृतर्पणम् —

ओं ओं ओं पूर्वोक्त एवं गुणविशेषण विशिष्टायां शुभतिथौ ब्रह्मयज्ञांगदेव ऋषिपितृतर्पणानि करिष्ये। ब्रह्मादयो ये देवाः तान् देवाग्स्तर्पयामि।

सर्वान् देवाग्स्तर्पयामि। सर्वान् देवगणाग्स्तर्पयामि। सर्वदेवपत्नीस्तर्पयामि। सर्वान् देवपुत्राग्स्तर्पयामि। सर्वान् देवपौत्राग्स्तर्पयामि। भूर्देवाग्स्तर्पयामि। भुवर्देवाग्स्तर्पयामि। सुवर्देवाग्स्तर्पयामि। भूर्भुवस्सुवर्देवाग्स्तर्पयामि। निवीती भूत्वा। कृष्णद्वैपायनादयो ये ऋषयः तान् ऋषीग्स्तर्पयामि। सर्वानृषीग्स्तर्पयामि। सर्वान् ऋषिगणाग्स्तर्पयामि। सर्वा ऋषिपत्नीस्तर्पयामि। सर्वान् ऋषिपुत्राग्स्तर्पयामि। सर्वान् ऋषिपौत्राग्-

स्तर्पयामि । भूऋषीग्स्तर्पयामि । भुवऋषीग्स्तर्पयामि । सुवऋषीग्स्तर्पयामि । भूर्भुवस्सुवऋषीग्स्तर्पयामि । प्रजापतिं काण्डऋषिं तर्पयामि । सोमंकाण्डऋषिं तर्पयामि। अग्निं काण्डऋषिं तर्पयामि । विश्वान् देवान् काण्ड ऋषीग्स्तर्पयामि । साग्ं हितीर्देवता उपनिषदस्तर्पयामि । याज्ञिकीर्देवता उपनिषदस्तर्पयामि । वारुणीर्देवता उपनिषदस्तर्पयामि । ब्रह्माणग् स्वयंभुवं तर्पयामि। सदसस्पतिं तर्पयामि। सोमः पितृमान्यमोंगिरस्वानग्निष्वात्ता अग्नि-कव्यवाहनादयो ये पितरः । तान् पितॄग्स्तर्पयामि। सर्वान् पितॄग्स्तर्पयामि । सर्वान् पितृगणाग्स्तर्पयामि । सर्वाः पितृपत्नीस्तर्पयामि । सर्वान् पितृपुत्राग्-स्तर्पयामि। सर्वान् पितृपौत्राग् स्तर्पयामि । भूः पितॄग्स्तर्पयामि। भुवः पितॄग्-स्तर्पयामि । सुवःपितॄग्स्तर्पयामि । भूर्भुवस्सुवः पितॄग्स्तर्पयामि ।

एतावदेव जीवत्पितॄणां । मृतपितॄणां तु ब्रह्मयज्ञाङ्गस्वपितृतर्पणं कर्तव्यम् ।

ब्रह्मयज्ञस्संपूर्णः



श्रीरस्तु

# अथ पुरश्चरखण्डप्रारम्भः

## षडाम्नायान् क्रमशो वक्ष्यते

### — आदौ पूर्वाम्नायः —

श्रीनाथादिगुरुत्रयं गणपतिं पीठत्रयं भैरवं
सिद्धौघं बटुकत्रयं पदयुगं दूतीक्रमं मण्डलम् ।
वीरान्द्व्यष्टचतुष्कषष्टिनवकं वीरावळीपञ्चकं
श्रीमन्मालिनि-मन्त्रराजसहितं वन्दे गुरोर्मण्डलम् ॥

वन्दे गुरुपदद्वन्द्वमवाङ्मानसगोचरम् ।
रक्तशुक्लप्रभामिश्रमतर्क्यं त्रैपुरं महः ॥

स्तम्भनं चतुरश्रं च मत्स्यगोखुरमेव च ।
योनिमुद्रेति विख्याताः पञ्चमुद्राः प्रकीर्तिताः ॥

गुरुपादुकामनुमुच्चारयेत् ॥

शुद्धविद्या – ओं ४ ऐं ईं औः शुद्धविद्याम्बा श्रीपादुकां पूजयामि नमः स्तर्पयामि नमः । बाला ऐं क्लीं सौः सौः क्लीं ऐं बाला त्रिपुरसुन्दर्यम्बा श्री । द्वादशार्धा हसकलरडैं हसकलरडीं हसकलरडौः द्वादशार्धाम्बा श्री ।

मतङ्गिनीमन्त्राः – ओं ह्रीं । हसन्ति हसितालापे मातङ्गी परिचारिके । मम भयविघ्नापदान्नाशं कुरुकुरु ठठ हु फट् स्वाहा । हसन्ती श्यामलाम्बा श्री । ऐं ह्रीं श्रीं ऐं क्लीं सौः ओं नमो भगवति राजमातङ्गेश्वरि सर्वजनमनोहारिणि सर्वमुखरञ्जनि क्लीं ह्रीं श्रीं सर्वश्रीजवशङ्करि सर्वस्त्रीपुरुषवशङ्करि सर्वदुष्ट-मृगवशङ्करि सर्वसत्ववशङ्करि सर्वलोकवशङ्करि सर्वजनं मे वशमानय स्वाहा ।

सौः क्लीं ऐं श्रीं ह्रीं ऐं ओं श्रीराजश्यामलाम्बा श्री ॥ ओं नमो भगवते महाशुकाय त्रिभुवनालङ्काराय राजमदमर्दनाय शीघ्रं राजानं मे वश मानय स्वाहा श्रीशुकश्यामलाम्बा श्री ॥ ओं ऐं ओं नमो भगवति शांशारिके सकलकला-कोविदे विद्यां बोधय बोधय स्वाहा । श्रीशारिका श्यामलाम्बा श्री ॥ ओं नमो भगवत्यै विं वीणायै मम सङ्गीतविद्यां प्रयच्छ स्वाहा । श्रीवीणा श्यामलाम्बा श्री ॥ ओं नमो भगवते व्यं वेणवे मम साहित्यविद्यां प्रयच्छ स्वाहा । श्रीवेणु-श्यामलाम्बा श्री ॥ ऐं नमः उच्छिष्टचाण्डालि मातङ्गि सर्वजनवशंकरि स्वाहा । श्री लघुश्यामलाम्बा श्री ॥

गायत्रीमन्त्रः – ओं भूर्भुवस्सुवः .... प्रचोदयात् गायत्र्यम्बा श्री ॥

गणपतिमन्त्राः–अस्य श्री महागणपतिमहामन्त्रस्य गणकऋषिः गायत्रीछन्दः महागणपतिर्देवता गं बीजं स्वाहा शक्तिः, ग्लौं कीलकं महागणपतिप्रसादसिध्यर्थे जपे विनियोगः। ग्लां अंगुष्ठाभ्यां नम.। ग्लीं तर्जनीभ्यां नमः । ग्लूं मध्यमाभ्यां नमः । ग्लैं अनामिकाभ्यां नमः । ग्लौं कनिष्ठिकाभ्यां नमः । ग्लः करतल-करपृष्टाभ्यां नमः। एवं हृदयादिन्यासः । लोकत्रयेन दिग्बन्धः ।

ध्यानम् – बीजापूरगदेक्षु कार्मुकलसच्चक्राब्ज-
पाशोत्पलव्रीह्यग्र स्वविषाण रत्नकलशप्रोद्यत्करांभोरुह ।
ध्येयो वल्लभयासपद्मकरयाश्लिष्टो ज्वलद्भूषया
विश्वोत्पत्तिविपत्तिसंस्थितिकरो विघ्नो विशिष्टार्थदः ॥

पञ्चपूजा -

अथ मनुः – ओं श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वरवरद सर्वजनं मे वश मानय स्वाहा। पूर्ववद्धृदयादिन्यासध्यान पञ्चपूजाः कुर्यात् । महागणपति श्री।। ओं श्रीं ह्रीं ग्लौं गणपतये सर्वकार्यसिद्धिं कुरु कुरु स्वाहा। क्षिप्रगणपति श्री ॥ ओं श्रीं ह्रीं सर्वकार्य सर्वविघ्नप्रशमनाय सर्वराजवश्यकराय सर्व

स्त्रीपुरुषाकर्षणाय सर्वलोकवशीकरणाय आं ह्रीं क्रों हुं फट् स्वाहा सिद्धगणपति श्री।। ओं ग्लौं नवनीतगणपतये सर्वजनान्मे वशमानाय स्वाहा। नवनीतगणपति श्री ।। ओं श्रीं ह्रीं क्लीं ग्लौ ऐं वद वद वाग्वादिनि सिद्धगणपतये गीं भगवति स्वाहा। शक्तिगणपति श्री ।। ओं हस्तिमुखाय लम्बोदराय उच्छिष्टाय महात्मने।

आं क्रों ह्रीं क्लीं ग्लौं गं घे घे उच्छिष्ठाय स्वाहा। उच्छिष्टगणपति श्री ।। ओं गं ओं एकाक्षरी गणपतिश्री ।।

कार्तिकेयमन्त्राः – ओं ऐं क्षं क्षं कुमाराय नमः। कुमार श्री ।। ओं ह्रीं श्रीं सं सुब्रह्मण्याय वैरिधैर्यं चलय चलय स्वाहा। सुब्रह्मण्य श्री ।। ओं ह्रीं श्रीं क्लीं सौः स्कन्दाय नमः। स्कन्द श्री ।।

मृत्युञ्जय मनुः – ओं ह्रौं जूं सः मृत्युञ्जय श्री ।।

## — पूर्वाम्नायमन्त्राः —

नीलकण्ठमनुः – ओं फ्रों व्रीं ठः। नीलकण्ठ श्री ।।

त्र्यम्बकमनुः– त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्।
उर्वारुकमिव बन्धवान्मृत्योर्मुक्षीयमाऽमृतात्। त्र्यम्बक श्री ।।

जातवेदोमनुः – ओं वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय साधय स्वाहा। जातवेद श्री ।।

## — प्रत्यङ्गिरा मनुः —

ओं आं ह्रीं क्रों ओं नमः कृष्णवदने सिंहवदने महाभैरवि ज्वलज्वाला जिह्वे कराळवदने प्रत्यङ्गिरे क्ष्म्रों ओं नमो नारायणाय घृणिस्सूर्य आदित्यों सहस्रारहुं फट् अव ब्रह्म द्विषो जहि ब्राह्मी प्रत्यङ्गिरा श्री ।।

ओं ह्रीं खें फें भक्ष ज्वालाजिह्वे कराळवदने काळरात्रि प्रत्यङ्गिरे क्षों क्ष्रौं ह्रीं नमस्तुभ्यं हन हन मां रक्ष रक्ष मम शत्रून् भक्षय भक्षय हुं फट् स्वाहा नारायणी प्रत्यङ्गिराश्री ॥

ह्रीं ओं नमः कृष्णवदने सहस्रसिंहिनी सहस्रवदने काळरात्रि प्रत्यङ्गिरे परसैन्य परकर्म विध्वंसिनि परमन्त्रोत्सादिनि सर्वभूतदमनि सर्वदेहान्बन्ध बन्ध सर्वविद्यां छिन्दि छिन्दि क्षोभय क्षोभय परतन्त्राणि स्फोटय स्फोटय सर्वशृङ्खलान् त्रोटय त्रोटय ज्वलज्ज्वालाजिह्वे कराळवदने प्रत्यङ्गिरे ह्रीं नमः। रौद्री-प्रत्यङ्गिरा श्री ॥

यां कल्पयन्ति नोरयः क्रूरां कृत्यां वधूमिव तां ब्रह्मणापन्निर्णुद्मः। प्रत्य-क्कर्तारमृच्छतु उग्रकृत्या प्रत्यङ्गिरा श्री ॥ ज्वलज्वालाजिह्वे कराळदंष्ट्रे प्रत्यङ्गिरेक्षीं ह्रीं हुं फट् अथर्वण भद्रकाळी प्रत्यङ्गिरा श्री ॥

ऐं ह्रीं श्रीं ऐं क्लीं सौः ह्स्रैं ह्क्ल्स्रीं ह्स्रौः पूर्वाम्नाय समय विद्ये-श्वरी श्री ॥ ओं लं सद्योजातं प्रपद्यामि सद्यो जाताय वै नमः भवे भवे नाति भवे भवस्व मां भवोद्भवाय नमः। अकाररूपाय सृष्टिकर्त्रे ब्रह्मणे नमः। ३ ऐं क्लीं सौः अं आं सौः कामगिरिपीठ ब्रह्मात्मकशक्त्यै नमः। कामगिरिपीठ ब्रह्मात्मकशक्ति श्री ॥

ऐं ह्रीं श्रीं ऐं क्लीं सौः पूर्णगिरिपीठशक्ति नारायणी देवता श्री ॥

ऐं क्लीं सौः श्रीं ह्रीं ऐं जालन्दरपीठशक्ति गौर्यै नमः। जालन्दरपीठ-शक्तिगौरी श्री ॥

गुरुत्रय गणपति पीठत्रयसहिताय चतुर्विंशत्सहस्रदेवतापरिवाराय काम-गिरिपीठाय स्वाहा। कामगिरिपीठ श्री ॥

॥ इति पूर्वाम्नायः ॥

— अथ दक्षिणाम्नायः —

भैरवमन्त्राः

ओं ऐं ह्रीं श्रीं फ्रें फट् फां फीं ह्रीं श्रीं महामन्थान भैरव श्री पा ॥ ४ ७ खचक्रभैरव श्री ॥ ४ ७ फट्कारभैरव श्री । पादुकां पूज त नमः ॥ ४ ७ एकात्मानन्द भैरव श्री ॥ ४ ७ रविभक्षण भैरव श्री ॥ ४ ७ नभो निर्मल भैरव श्री ॥ ४ ७ डमरभास्कर भैरव श्री ॥ ह्रीं श्रीं सौः आं महादुर्मनाम्बा सिद्ध श्री ॥ ४ सुन्दर्यम्बा सिद्ध श्री ॥ ४ विश्वदळवाम्बा सिद्ध श्री ॥ ४ कपालिकाम्बा सिद्ध श्री ॥ ४ बडबाम्बा सिद्ध श्री ॥ ४ भीमाम्बा सिद्ध श्री ॥ ४ कराळ्यम्बा सिद्ध श्री ॥ ४ खराननाम्बा सिद्ध श्री ॥ ४ शालिनाम्बा सिद्ध श्री ॥ ओं ह्रीं श्रीं हुं फट् स्कन्दवटुक श्री ॥ ६ चित्रवटुक श्री ॥ ६ विरिञ्चवटुक श्री ॥ हसकलह्रीं हसकहलह्रीं सकलह्रीं प्रकाशपादुका श्री ॥ हसकलहसकहल सकलह्रीं विमर्शपादुका श्री ॥

सौभाग्यविद्यामनुः – ऐं क ५ क्लीं ह ६ सौः स ४ सौभाग्य विद्याम्बा श्री ॥

बगळामनुः – अस्य श्री बगळामुखी महामन्त्रस्य नारदभगवान् ऋषिः बृहती छन्दः । श्री बगळामुखी देवता । ह्लीं बीजं । स्वाहा शक्तिः । ओं कीलकं । मम बगळामुखीप्रसादसिध्यर्थे जपे विनियोगः– ओं ह्लीं बगळामुखी अंगुष्ठाभ्यां नमः । सर्वदुष्टानां तर्जनीभ्यां नमः । वाचं मुखं पदं स्तंभय मध्यमाभ्यां नमः । जिह्वां कीलय अनामिकाभ्यां नमः । बुद्धिं विनाशय कनिष्ठिकाभ्यां नमः । ह्लीं ओं स्वाहा करतलकरपृष्ठाभ्यां नमः । एवं हृदयादिन्यासः । लोकत्रयेण दिग्बन्धः ।

ध्यानम् – चतुर्भुजां त्रिनयनां कमलासनसंस्थितां
त्रिशूलं पानपात्रं च गदां जिह्वां च बिभ्रती ।

बिम्बोष्ठीं कंबुकण्ठीं च समपीनपयोधरां
पीतांबरां मदा घूर्णां ध्यायेद् ब्रह्मास्त्रदेवताम् ॥

लमिति पञ्चपूजामनुः – ओं ह्लीं बगळामुखी सर्वदुष्टानां वाचं मुखं पदं स्तंभय जिह्वां कीलय बुद्धिं विनाशय ह्लीं ओं स्वाहा पूर्ववन्न्यास ध्यान पञ्चपूजाः कुर्यात् । बगळामुखि श्री ॥

वाराहिमनुः – ओं ऐं ग्लौं ऐं ओं नमो भगवति वार्तालि २ वाराहि २ वराहमुखि २ ऐं ग्लौं ऐं अन्धे अन्धिनी नमः । रुन्धे रुन्धिनी नमः । जम्भे जम्भिनी नमः । मोहे मोहिनी नमः । स्तम्भे स्तम्भिनी नमः । ऐं ग्लौं ऐं सर्वदुष्टप्रदुष्टानां सर्वेषां वाक्चित्तचक्षुर्मुखगतिजिह्वास्तम्भं कुरु कुरु । शीघ्रं वश्यं कुरु कुरु । ऐं ग्लौं ऐं ठठठठ हुं फट् स्वाहा श्री । वाराह्यम्बा श्री ॥

वटुकमनुः – ओं ह्रीं वटुकाय आपदुद्धरणाय कुरु कुरु वटुकाय ह्रीं ओं स्वाहा । आपदुद्धारण वटुक श्री ॥

तिरस्करिणी मनुः – ऐं ह्रीं श्रीं ऐं क्लीं सौः ओं नमो भगवति तिरस्करिणी महामाये महानिद्रे सकलपशुजनमनश्चक्षुश्श्रोत्रतिरस्करणं कुरु कुरु स्वाहा । सौः क्लीं ऐं श्रीं ह्रीं ऐं श्री तिरस्करिण्यम्बा श्री ॥

अघोरमनुः – ४ ह्रां ह्रीं ह्रूं अघोरेभ्योऽथघोरेभ्यो घोरघोरतरेभ्यः । सर्वेभ्यस्सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः । ह्रैं ह्रौं ह्रः अघोराय स्वाहा अघोरेभ्यो रूपेभ्य स्स्वाहा कं कं हं क्षं पं हं ग्रीं ग्रीं प्रत्यक्ष २ ह्रूं ह्रीं ह्रां सं हुं फट् स्वाहा अघोरश्री ॥

शरभमनुः – ॐ नमो भगवते प्रळयकालाग्निरुद्राय दक्षाध्वरध्वंसाय महाशरभाय मम शत्रुच्छेदनं कुरु कुरु स्वाहा श्री । शरभेश्वर श्री ॥ खें खां खिं फट् प्राणग्रहसि प्राणग्रहसि हुं फट् सर्वशत्रुसंहारकाय शरभसाळ्वाय पक्षिराजाय हुं फट् स्वाहा । शरभेश्वरी श्री ॥

भेताळमनुः – छ्रां छ्रीं छ्रूं छ्रें छ्रौं छ्रः ऐं ह्रीं क्लीं झ्रां परेतभूतादिपतये महापिशाचकापालय झ्रां झ्रों टिंगदमनाय अधिपाय भो भो भेताळाय तुभ्यं नमस्स्वाहा । भेताळ श्री ॥

खड्गरावणमनुः – ॐ ह्रीं क्लीं भूतेश ह्रीं ह्रां खड्गरावणाय नमः । खड्गरावणश्री ॥

वीरभद्रमनुः– ॐ क्लीं ग्रीं वीरभद्र जयजय नमस्स्वाहा । वीरभद्र श्री ॥

शास्तृमनुः – ह्रीं हरिहरपुत्राय पुत्रलाभाय महाशत्रुनाशनाय महाशास्ते प्रत्यक्षवेलायुधाय वर वरद सर्वजनम्मे वशमानय स्वाहा । श्री शास्तृ श्री ॥

पाशुपतमनुः – ॐ श्लीं पशु हुं फट् पाशुपतास्त्रश्री ॥

ब्रह्मास्त्रमनुः – ॐ आं ह्लीं क्रों ग्लौं हुं ऐं क्लीं ह्रीं श्रीं बगळामुखि आवेशय २ आं ह्लीं क्रों मम हृदये आवह २ सन्निधिं कुरु २ आं ह्लीं क्रों मम हृदये सुखं चिरं तिष्ठ तिष्ठ आं ह्लीं क्रों हुं फट् स्वाहा ब्रह्मास्त्रश्री ॥

वायव्यास्त्रमनुः – आवायव्यया वामव्या व्याय वाया व्यय वा आ औवायि व्यया वायव्या । व्यायवायाव्ययर्वाऔ ॐ हन हन हुं फट् स्वाहा । वायव्यास्त्र श्री ॥

## — भैरवमन्त्राः —

ॐ नमो भगवते उग्रभैरवाय सर्वविघ्नान्नाशय २ हुं फट् स्वाहा उग्रभैरवश्री ॥ ॐ ह्रीं आं अङ्गभैरवदेवदत्त कोपशमनं कुरु कुरु स्वाहा । अङ्गभैरवश्री ॥ ह्रूं ह्रीं क्लीं अघोरभैरवाय देवदत्तं मोहय स्वाहा अघोरभैरवश्री ॥ ॐ नमो भगवते महाभीमभैरवाय लोकभयङ्कराय सर्वशत्रुसंहारकाय हुं देवदत्तं ध्वंसय ध्वंसय स्वाहा । भीमभैरवश्री ॥ ४ वं रं ह्रूं ॐ नमो भगवते विजयभैरवाय सर्वशत्रुविनाशाय विभुधवाहनाय नररुधिरमांसभक्षणाय देवदत्तमुच्चाटयोच्चाटय । हुं ताडय ताडय भस्मीकुरु भस्मीकुरु स्वाहा । विजयभैरवश्री ॥

ॐ ह्रीं स्प्रं रक्तभैरवाय शवकपालमालालङ्कृताय नवाम्बुदश्यामाय एह्येहि शीघ्रं एहि मां पाहि एं ऐं आगामिकार्यं वद वद अखिलोपाधि हरहर सौभाग्यं देहि मे स्वाहा । रक्तभैरवश्री ॥

४ ॐ श्रीं ह्रीं क्लीं ॐ नमो भगवते स्वर्णाकर्षणभैरवाय प्रणताभीष्ट-परिपूरणाय एह्येहि करुणानिधे मह्यं हिरण्यं दापय २ शीघ्रं दापय २ श्रीं ह्रीं क्लीं स्वाहा स्वर्णाकर्षणभैरवश्री ॥

## — दक्षिणामूर्तिमन्त्राः —

४ ॐ नमो भगवते दक्षिणमूर्तये मह्यं मेधां प्रज्ञां प्रयच्छ स्वाहा । मेधादक्षिणमूर्तिश्री ॥

४ ॐ नमो भगवते दक्षिणामूर्तये मह्यं श्रियं प्रज्ञां प्रयच्छ स्वाहा । लक्ष्मीदक्षिणामूर्तिश्री ॥

४ ॐ अः नमः शिवाय आः ॐ कीर्तिदक्षिणामूर्तिश्री ॥

४ ॐ ज्ञं नमश्चिन्मयमूर्तये ज्ञानं देहि स्वाहा । ज्ञानदक्षिणामूर्तिश्री ॥

४ ॐ सौः श्रीसाम्बशिवाय तुभ्यं स्वाहा । साम्बदक्षिणामूर्तिश्री ॥

४ ॐ ह्रीं ॐ दक्षिणामूर्तये सर्वसाध्यमेधां समुत्कर्षय स्वाहा । श्रीवीर-दक्षिणामूर्तिश्री ॥

४ ॐकारसंहारमूर्तये नमः । संहारदक्षिणामूर्तिश्री ॥

ॐ नमो भगवते दक्षिणामूर्तये त्रिणेत्राय त्रिकालज्ञानाय सर्वशत्रुघ्नाय सर्वापस्मारविदारणाय दारय दारय मारय भस्मीकुरु २ एह्येहि हुं फट् अपस्मारनिवर्तकदक्षिणामूर्तिश्री ॥

४ आं ह्रीं ऐं क्लिन्ने क्लिन्नमदद्रवेकुलेह्सौः दक्षिणाम्नाय समयविद्ये-श्वरीश्री ॥

ॐ वं वामदेवाय नमो ज्येष्ठाय नमश्श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलाय नमो बलविकरणाय नमस्सर्वभूतदमनाय नमो मनोन्मनाय नमः ॥ उकाररूपाय स्थितिकर्त्रे विष्णवे नमः ॥ ॐ भैरवादिसिद्धौघबटुकत्रयपदयुगसहिताय पूर्णगिरिपीठाय स्वाहा । पूर्णगिरिपीठश्री ॥

॥ इति दक्षिणाम्नायः ॥

## — अथ पश्चिमाम्नायः —

### — दूतीमन्त्राः —

४ अं आं सौः ह्रीं श्रीं सौः योन्यम्बादूतीश्री ॥ योनिसिद्धनाथाम्बादूतीश्री ॥ महायोन्यम्बादूतीश्री ॥ दिव्ययोन्यम्बादूतीश्री ॥ दिव्ययोनिसिद्धनाथाम्बादूतीश्री ॥ शङ्खयोन्यम्बादूतीश्री ॥ शङ्खयोनिसिद्धनाथाम्बादूतीश्री ॥ पद्मयोन्यम्बादूतीश्री ॥ पद्मयोनिसिद्धनाथाम्बादूतीश्री ॥ ह्रीं श्रीं ऐं ह्रीं श्रीं क्लीं ह्रीं श्रीं सौः वह्निमण्डलश्री सूर्यमण्डलश्री सोममण्डलश्री ॥

### — वीराद्यष्टकमन्त्राः —

ह्रीं श्रीं फट् फां फें सृष्टिवीरभैरवश्री । स्थितिवीरभैरवश्री । सम्हारवीरभैरवश्री । रक्तवीरभैरवश्री । यमवीरभैरवश्री । मृत्युवीरभैरवश्री । भद्रवीरभैरवश्री । परमार्कवीरभैरवश्री । मार्ताण्डवीरभैरवश्री । कालाग्निरुद्रभैरवश्री ।

### — चतुष्षष्टिसिद्धमन्त्राः —

ऐं श्रीं ह्रीं क्लीं श्रीं ह्रीं सौः श्रीं ह्रीं मङ्गलानाथश्री ।

चौण्डिकानाथश्री
चम्पकानाथश्री
ज्येष्ठानाथश्री
कैवर्तानाथश्री
कन्तुकीनाथश्री
मातङ्गगमनानाथश्री

पटहानाथश्री
कूर्मनाथश्री
धनदानाथश्री
गन्धानाथश्री
मातङ्गानाथश्री
धूम्राक्षनाथश्री
ज्वालानाथश्री
गान्धारानाथश्री
गगनेश्वरानाथश्री
मायानाथश्री
महामायानाथश्री
नित्यानाथश्री
शान्तानाथश्री
विश्वानाथश्री
कामानाथश्री
उमानाथश्री
प्रियानाथश्री
विद्यानाथश्री
महाविद्यानाथश्री
अमृतानाथश्री
चन्द्रानाथश्री
अन्तरिक्षानाथश्री
सिद्धानाथश्री
श्रद्धानाथश्री

सूर्यभक्षानाथश्री
वसूभक्षानाथश्री
स्रौतिकानाथश्री
रूपिकानाथश्री
दन्ष्ट्रानाथश्री
सीक्षरानाथश्री
मलिनानाथश्री
प्रचण्डानाथश्री
अनङ्गानाथश्री
त्रिविधानाथश्री
अनभिहितानाथश्री
नन्दिनाथश्री
महामालानाथश्री
सुन्दरानाथश्री
विश्वेश्वरानाथश्री
कालानाथश्री
महाकालानाथश्री
अभयानाथश्री
विकारानाथश्री
महाविकारानाथश्री
सर्वगानाथश्री
सृगालानाथश्री
पूतनानाथश्री
शर्वरीनाथश्री

आनन्दानाथश्री
शबराबाथश्री
उल्कानाथश्री
त्रैलोक्यानाथश्री
भीमानाथश्री
व्योमानाथश्री
कमलानाथश्री
परामृतानाथश्री
पूर्णानाथश्री
चतुष्षष्टिनाथानां श्री

— लोपामुद्रामनुः —

हसकलह्रीं हसकहलह्रीं सकलह्रीं लोपामुद्राम्बाश्री ॥

भुवनेश्वरीमनुः – ॐ श्रीं ह्रीं श्रीं भुवनेश्वर्यम्बाश्री ॥

अन्नपूर्णामनुः – ह्रीं श्रीं क्लीं ॐ नमो भगवत्यन्नपूर्णेशि ममाभिलषितमन्नं देहि स्वाहा । अन्नपूर्णाम्बाश्री ॥

कामकळामनुः – अं आं ळं क्षं ईं कामकलाम्बाश्री ॥

सुदर्शनमनुः – ४ ॐ सहस्रारहुं फट् । सुदर्शनश्री ॥

४ श्रीं ह्रीं ॐ सुदर्शनचक्राय रिपुचित्तं भ्रामय २ स्वाहा । सुदर्शनश्री ॥

वैनतेयमनुः – अस्यश्री महागरुडपञ्चाक्षरी महामन्त्रस्य गौतमऋषिः अनुष्टुप्छन्दः श्रीमहागरुडो देवता ऐं बीजं ह्रीं शक्तिः श्रीं कीलकं श्रीमहागरुडप्रसादसिद्ध्यर्थे जपे विनियोगः । ऐं अङ्गुष्ठाभ्यां नमः । ह्रीं तर्जनीभ्यां नमः । श्रीं मध्यमाभ्यां नमः । ऐं अनामिकाभ्यां नमः । ह्रीं कनिष्ठिकाभ्यां नमः । श्रीं करतलकरपृष्ठाभ्यां नमः । एवं हृदयादिन्यासः । लोकत्रयेण दिग्बन्धः ।

ध्यानं – कुङ्कुमाङ्कितवर्णाभकुन्देन्दुधवळानन ।
विष्णुवाह नमस्तुभ्यं पक्षिराजाय ते नमः ॥

लमित्यादि पञ्चपूजामनुः – ॐ क्षि क्षिप स्वाहा । महागरुडश्री पूर्ववन्न्यासध्यानपञ्चपूजाः कुर्यात् ॥ ॐ नमो भगवते श्रीमन्महागरुडाय अमृत-

कोशोद्भवाय वज्रनखवज्रतुण्डपक्षालङ्कृतशरीराय श्रीमन्महागरुड विषं हुं फट् स्वाहा । गरुड श्री । ॐ क्षिप स्वाहा गरुड श्री । ॐ पक्षि स्वाहा गरुड श्री ॥

कार्तवीर्यमनुः – ॐ फ्रें छ्रीं क्लीं भ्रूं आं ह्रीं क्रों फट् कार्तवीर्यार्जुनाय नमः । कार्तवीर्यार्जुनश्री ॥

नृसिंहमनुः – ॐ ईं हं उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखं । नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहं ॥ हं ईं ॐ मन्त्रराजनृसिंहश्री ॥

नामत्रयमनुः – अच्युताय नमः । अनन्ताय नमः । गोविंदाय नमः । नामत्रयश्री पा ॥

— रामषडक्षरीमन्त्रः —

अस्य श्रीरामषडक्षरी महामन्त्रस्य सदाशिव ऋषिः अनुष्टुप्छन्दः श्रीरामचन्द्रो देवता रां बीजं रीं शक्तिः रूं कीलकं मम रामचन्द्रप्रसादसिद्ध्यर्थे जपे विनियोगः । रां अंगुष्ठाभ्यां नमः । रीं तर्जनीभ्यां नमः । रूं मध्यमाभ्यां नमः । रैं अनामिकाभ्यां नमः । रौं कनिष्ठिकाभ्यां नमः । रं करतलकरपृष्ठाभ्यां नमः । एवं हृदयादिन्यासः । लोकत्रयेण दिग्बन्धः ॥

ध्यानं – कालाम्भोधरकान्तिकान्तमनिशं वीरासनाध्यासितं
मुद्रां ज्ञानमयीं दधानमपरं हस्ताम्बुजं जानुनी ।
सीतां पार्श्वगतां सरोरुहकरां विद्युन्निभां राघवं
पश्यन्तं मकुटाङ्गदादि विविधाकल्पोज्वलांगं भजे ॥

लमित्यादिपञ्चपूजामनुः – ॐ श्रीं ह्रीं क्लीं नित्यशुद्धबुद्धाय रामाय परब्रह्मणे नमः । ॐ श्रीं रामाय नमः । श्रीराम श्री ॥ इति यथाशक्तिजपः । पूर्ववन्न्यासध्यानपञ्चपूजाः कुर्यात् ॥

सीताषडक्षरीमनुः – अस्यश्री सीताषडक्षरीमहामन्त्रस्य जनकऋषिः

गायत्रीछन्दः । श्रीसीता देवता श्रीं बीजं स्वाहा शक्तिः सीतायै कीलकं श्रीसीताप्रसादसिध्यर्थे जपे विनियोगः ।। सां अङ्गुष्ठाभ्यां नमः । सीं तर्जनीभ्यां नमः । सूं मध्यमाभ्यां नमः । सैं अनामिकाभ्यां नमः । सौं कनिष्ठकाभ्यां नमः । सः करतलकरपृष्ठाभ्यां नमः । एवं हृदयादिन्यासः । लोकत्रयेण दिग्बन्धः ।।

ध्यानं – हेमाभामंबुजकरां रामालोकनतत्परां ।
ध्यायेत्प्रसन्नवदनां सीतां रामाङ्कसंस्थिताम् ।।

लमितिपञ्चपूजामनुः – ॐ श्रीं सीतायै स्वाहा । इति यथाशक्तिजपः । न्यासध्यानं पूर्ववत् । श्रीसीतादेवी श्री ।।

— गोपालमन्त्राः —

४ क्लीं कृष्णाय गोविन्दाय गोपीजनवल्लभाय स्वाहा । राजगोपालश्री ।।

४ अन्नरूपरसरूप नमो नमः । अन्नाधिपतये ममान्नं प्रयच्छ स्वाहा । गोपाल श्री ।।

४ ॐ क्लीं कृष्णकृष्णहरेकृष्ण सर्वज्ञत्वं प्रसीद मे । रमारमणविश्वेश विद्यामाशु प्रयच्छ मे । क्लीं ॐ गोपाल श्री ।।

४ क्षीं देवकीसुत गोविन्द वासुदेव जगत्पते । तनयं देहि मे कृष्ण शरणागतवत्सल ।। सन्तानगोपाल श्री ।।

४ क्लीं कृष्ण क्लीं गोपाल श्री ।।

सौरमनुः – ४ ॐ श्रीं ह्रीं सौः घृणिस्सूर्यआदित्यों ह्रीं श्रीं ॐ सूर्य श्री ।।

धन्वन्तरिमनुः – ४ ॐ नमो धन्वन्तरये अमृतकलशहस्ताय सर्वामय विनाशकाय त्रिलोकनाथाय विष्णवे स्वाहा । धन्वन्तरि श्री ।।

इन्द्रजालिमनुः – ४ ॐ ह्रीं ईं ॐ नमो भगवति माहामाये मनोमये जगत्क्षोभिणि वरवरदे सर्वजनं मोहय २ ईं ह्रीं स्वाहा । इन्द्रजालिमाया महादेवी श्री ॥

४ वं सं झ्रूं झं जुं रं ह्लीं श्रीं मों भगवति चित्रविद्यमहामाये अमृतेश्वरि एह्येहि प्रसन्नवदने अमृतं प्लावय अनलं शीतलं कुरु । सर्वविषं नाशय । ज्वरं हन हन । पैत्योन्मादं मोचय २ आज्योष्णं शमय २ सर्वजनं मोहय २ मां पालय मों श्रीं ह्लीं रं जुं झ्रूं झ्रूं सं वं स्वाहा । इन्द्रजालिश्री ॥

## — इन्द्रादि सुरमन्त्राः —

ॐ लं यत इन्द्रभयामहे ततो नो अभयं कृथि । मघवन् छग्दि तव तन्न ऊतये । विद्विषो विमृधो जहि ॥

लं ॐ इन्द्राय नमः इन्द्रश्री । ॐ रं इद्दादुलूक आपप्ततु । हिरण्याक्षो अयोमुखः । रक्षसां दूत आगतः तमितो नाशयाग्ने । रं ॐ अग्नये नमः । अग्निश्री ॥

४ ओं क्रों ह्लीं आं वैवस्वताय धर्मराजाय भक्तानुग्रहकृते नमः । यमश्री॥

४ ओं नमो विचित्राय धर्मलेखकाय यमबाहिकाधारिणे यमलवरयूं जन्मसम्पत्प्रळयं कथय स्वाहा । चित्रगुप्तश्री ॥

४ षं निऋतये नमः । निऋतिश्री ॥

४ वं वरुणाय नमः । वरुणश्री ॥

४ यं वायवे नमः । वायुश्री ॥

४ ओं क्रीं यक्षाय कुबेराय वैश्रवणाय धनधान्याधिपतये धनधान्यसमृद्धिं मे देहि दापय स्वाहा । कुबेरश्री ॥

४ ओं श्रीं ओं ह्लीं श्रीं ह्लीं क्लीं वित्तेश्वराय नमः । कुबेरश्री ॥

ओं हं ओं नमो भगवते रुद्राय । हं ओं रुद्रश्री ॥

इन्द्राक्षिमनु: – अस्यश्री इन्द्राक्षी महामन्त्रस्य अथर्वणऋषि: जगतीछंद: इन्द्राक्षी परमेश्वरी देवता ओं बीजं ह्रीं शक्ति: ईं कीलकं मम इन्द्राक्षी प्रसाद-सिध्यर्थे जपे विनियोग: ।। ओं ऐं घ्रीं ह्रीं हुं दुं लं श्रीं ईं अङ्गुष्ठाभ्यां नम: । इन्द्राक्षि रक्षरक्ष तर्जनीभ्यां नम: । मम शत्रून् दु:खग्रंथि स्फोटय स्फोटय मध्यमाभ्यां नम: । मम अरीन् भंजय भंजय अनामिकाभ्यां नम: । मनोग्रंथि प्राण-ग्रंथि शरीरग्रंथि घातय घातय कनिष्ठकाभ्यां नम: ।। हुं फट् स्वाहा । करतल करपृष्ठाभ्यां नम: । एवं हृदयादिन्यास: । लोकत्रयेण दिग्बन्ध: ।।

ध्यानं – नेत्राणां दशभिश्शतै: परिवृतामत्युग्रचर्माम्बरां
हेमाभां वहतीं विलंबितशिखामामुक्तकेशान्वितां ।
घंटामण्डितपादपद्मयुगळां नागेन्द्रकुम्भस्तनी
मिन्द्राक्षीं परिचिन्तयामि मनसा कल्पोक्तसिद्धिप्रदाम् ।।

लमितिपञ्चपूजामनु: – ओं ऐं घ्रीं ह्रीं हुं दुं लं श्रीं ईं इन्द्राक्षि रक्ष रक्ष मम शत्रून् दु:खग्रंथि स्फोटय स्फोटय मम अरीन् भंजय भंजय । मम मनोग्रंथि शरीरग्रंथि घातय २ हुं फट् स्वाहा । सुरनायिका इन्द्राक्षीश्री ।। पूर्ववन्न्यास ध्यानादि पञ्चपूजा: कुर्यात् ।।

४ ओं श्रीं छ्रां ऐं क्लीं सौ: ओं नमो भगवति इन्द्राक्षि भूतभविष्यद्वर्त-मानकालवादिनि प्रपञ्चकारिणि अमुकं मे कार्यं कथय । सौ: क्लीं ऐं श्रीं छ्रां ओं स्वाहा । सर्ववादिनी इन्द्राक्षिश्री ।।

## — दत्तात्रेयमन्त्रा: —

४ ओं ह्रीं क्रों ऐं क्लीं सौ: श्रीं ग्लौं द्रां दत्तात्रेयश्री ।।

४ ओं ह्रीं दत्तात्रेयाय नम: । द्रां ह्रीं ओं दत्तात्रेयश्री ।।

४ ओं ह्रीं दत्तात्रेय हरे कृष्ण उन्मत्तानन्ददायक दिगम्बरमुने बाल-पिशाशज्ञावसागर ।। द्रां ह्रीं ओं दत्तात्रेयश्री ।।

द्वादशाक्षरीमनुः – ओं नमो भगवते वासुदेवाय । वासुदेवश्री ॥

अष्टाक्षरीमनुः – ओं नमो नारायणाय । नारायणश्री ॥

ओं रं अघोरेभ्यो रूपेभ्यः मकाररूपाय संहारकर्त्रे रुद्राय नमः ॥ ह्स्त्रैं ह्स्रीं ह्स्रौं ह्ख्स्फें भगवत्यम्बे हसक्षमलवरयूं ह्ख्स्फ्रें अघोरमुखि छ्रां छ्रीं किणि किणि विच्चेहसौः ह्ख्स्फ्रें ह्स्रौं पश्चिमाम्नाय समयविद्येश्वर्यम्बाश्री ॥ दूतीमण्डल वीरदशक चतुष्षष्टिसहिताय त्रिसहस्रदेवतापरिवाराय जालंधरपीठाय स्वाहा । जालंधरपीठश्री ॥

॥ इति पश्चिमाम्नायः ॥

— अथ उत्तराम्नाय —

नवमुद्राः – द्रां सर्वसंक्षोभिणी मुद्राश्री ॥ द्रीं सर्वविद्राविणी मुद्राश्री ॥ क्लीं सर्वाकर्षणीमुद्राश्री । ब्लूं सर्ववशङ्करीमुद्राश्री ॥ सः सर्वोन्मादिनीमुद्राश्री ॥ क्रों सर्वमहाङ्कुशामुद्राश्री ॥ ह्ख्स्फ्रें सर्वखेचरीमुद्राश्री ॥ ह्सौः सर्वबीजमुद्राश्री ॥ ऐं सर्वयोनिमुद्राश्री ॥

वीरावळीपञ्चकमनुः – ऐं ह्लीं श्रीं ऐं क्लीं सौः लं ब्रह्मवीरावलीश्री ॥ ६ वं विष्णुवीरावळीश्री ॥ ६ रं रुद्रवीरावलीश्री ॥ ६ यं ईश्वरवीरावलीश्री ॥ ६ हं सदाशिववीरावलीश्री ॥

तुरीयमनुः – हसकल हसकहल सकलह्रीं तुरीयाम्बाश्री ॥

महार्घा – ऐं ह्रीं सौः क ५ ह ६ स ४ संसृष्टिनित्ये स्वाहा । हं स्थितिपूर्णे नमः । ईं महासंहारिणि कृशे चण्डकाळिफट् । रं ह्ख्स्फ्रें महानखे अनन्तभास्करि चण्डकाळिफट ॥ ईं महासंहारिणिकृशे चण्डकाळिफट् ॥ हं । स्थितिपूर्णे नमः । संसृष्टिनित्ये स्वहा । महार्घाम्बाश्री ॥

अश्वारूढामनुः – आं ह्रीं क्रों एह्येहि परमेश्वरि स्वाहा । अश्वारूढाम्बाश्री ॥

मिश्राम्बामनुः – ऐं मिश्राम्बाश्री ॥

वाग्वादिनीमनुः – ४ वद वद वाग्वादिनि स्वाहा । वाग्वादिन्यम्बाश्री ॥

दुर्गामनुः – ॐ श्रीं ह्रीं क्लीं दुं उत्तिष्ठ पुरुषे किं स्वपिषि भयं मे समुपस्थितं । यदि शक्यमशक्यं वा तन्मे भगवति शमय २ स्वाहा । वनदुर्गाम्बाश्री ॥

४ ॐ श्रीं ह्रीं क्लीं क्ष्म्र्यां दुं ज्वल ज्वल शूलिनि दुष्टग्रह हुं फट् स्वाहा । शूलिनी दुर्गाम्बाश्री ॥

४ ॐ ह्रीं दुं जातवेदसे सुनवामसोम मरातीयतो विदहाति वेदः । सनः पर्षदतिदुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः द्रुं ह्रीं ओं जातवेदो दुर्गाम्बाश्री ॥

४ ओं ह्रीं दुं दुर्गां देवीग्म् शरणमहं प्रपद्ये । दुं ह्रीं ओं शान्ति दुर्गाम्बाश्री ॥

४ ओं ह्रां ह्रीं सौः ऐं श्रीं क्षं दुं शबरि दुर्गायै क्रां अमलवरयूं आदिशक्तिस्वरूपिणि अक्षरमये रक्षः कुलनाशनि । मां रक्ष रक्ष मम शत्रून् विदारय विदारय । रोगान् भस्मीकुरु भस्मीकुरु । कृत्रिमान् दह २ । प्राणान् वह २ । अभिचारिकान् नाशय २ । सर्वं मां रक्ष शबरि दुर्गायै हुं फट् स्वाहा । शबरि दुर्गाम्बाश्री ॥

४ ह्रां ह्रीं सौः ग्लौं ऐं श्रीं ज्वलदुर्गे एह्येहि स्फुर प्रस्फुर आदिविष्णुसोदरि अस्त्रजलदुर्गे आवेशयावेशय । जलदुर्गाय विद्महे जाज्वल्यमानाय धीमहि । तन्नो बडबानलः प्रचोदयात ॥ वमलवरयूं ज्वलदुर्गास्त्रे हुं फट् स्वाहा । ज्वल दुर्गाम्बाश्री ॥

४ खं चिटि चिटि चाण्डालि महाचाण्डालि अमुकं मे वशमानय स्वाहा । लवणदुर्गाम्बाश्री ॥

४ ओं क्रों ह्रीं अं दुर्गे ह्रीं एह्येहि आवेशयावेशय ह्रीं दुं दुर्गे आं ह्रीं क्रों ओं हुं फट् स्वाहा । दीप दुर्गाम्बाश्री ॥

४ ॐ श्रीं ह्रीं कटुके कटुकपत्र असुभगे आसुरिरक्तवासने अथर्वणदुहित: अघोर अघोरकर्मकारके अमुकस्य प्रस्थितस्य साध्यस्य गतिं दह दह। उपविष्ठस्य गुदं दह दह। प्रसुप्तस्य मनो दह दह। प्रबुद्धस्य हृदयं दह दह। हन हन पच पच नामरूपं दह दह तावद्दह तावत्पच यावन्मे वशमागच्छति तावन्मे वशमानय स्वाहा। असुरदुर्गाम्बा श्री॥

काळीमनु: – ४ क्रें क्रीं ह्रों हूं ह्रीं ह्रीं ह्रीं दक्षिणकाळिके क्रीं क्रीं क्रीं हूं हूं हूं ह्रीं ह्रीं ह्रीं स्वाहा। दक्षिणकाळिकाम्बा श्री॥

चण्डीमनु: – अस्यश्री चण्डिका परमेश्वरी महामन्त्रस्य दक्षिणामूर्ति ऋषि: अनुष्टुप्छन्द: श्रीचण्डिका परमेश्वरी देवता ऐं बीजं ह्रीं शक्ति: क्लीं कीलकं मम श्री चण्डिका परमेश्वरी प्रसादसिद्ध्यर्थे नवाक्षरमहामन्त्रजपे विनियोग:। ऐं ह्रीं क्लीं अङ्गुष्ठाभ्यां नम:। चामुण्डायै तर्जनीभ्यां नम:। विच्चे मध्यमाभ्यां नम:। ऐं ह्रीं क्लीं अनामिकाभ्यां नम:। चामुण्डायै कनिष्ठकाभ्यां नम:। विच्चे करतलकरपृष्ठाभ्यां नम:। एवं हृदयादिन्यास:। भूर्भुवस्सुवरोमिति दिग्बन्ध:॥

ध्यानम्– या देवी मधुकैटभप्रशमनी या माहिषोन्मूलिनी
या धूम्रेक्षणचण्डमुण्डदमनी या रक्तबीजाशनी।
या शुंभादि निशुम्भदैत्यदमनी या सिद्धलक्ष्मी: परा
सा चण्डी नवकोटिशक्तिसहिता मां पातु विश्वेश्वरी॥

मातर्मे मधुकैटभघ्निमहिषप्राणापहारोद्यमे
हेलानिर्मितधूम्रलोचनवधे हे चण्डमुण्डार्दिनि।
निश्शेषीकृतरक्तबीजदनुजे नित्ये निशुंभापहे
शुम्भध्वंसिनि संहराशु दुरितं दुर्गे नमस्तेम्बिके॥

एवं ध्यात्वा लमितिपञ्चापूजां कुर्यात् । मनु: – ॐ ऐं ह्रीं क्लीं चामुण्डायै विच्चे । चण्डिका श्री । न्यासध्याने पूर्ववत् ।

नकुलीमनु: – ४ ऐं क्लीं सौः ओष्ठापिधानानकुलीदन्तैः परिवृतापविः । सर्वस्यै वाच ईशाना चारुमामिह वादयेत् । सौः क्लीं ऐं नकुलीवाग्देवताश्री ॥

पुळिन्दिनीमनु: – ४ ॐ ईं नमो भगवति शारदादेव्यत्यन्तामलभोज्यं देहि देहि आगच्छ २ आगन्तुकं हृदि संस्थं कार्यं सत्यं ब्रूहि २ पुळिन्दिनी ईं स्वाहा । पुळिन्दिन्यम्बा श्री ॥

रेणुकामनु: – ४ क्लीं नमो भगवति रक्तपञ्चमी रेणुकादेवि हन हन पच पच अखिलजगन्मे वशं कुरु कुरु स्वाहा । क्लीं रेणुकाम्बा श्री ॥

लक्ष्मीमनु: – ४ ॐ श्रीं ह्रीं क्लीं महालक्ष्मि एह्येहि सर्वसौभाग्यं देहि मे स्वाहा । महालक्ष्म्यम्बा श्री ॥

मातृकामनु: – ॐ श्रीं ह्रीं क्लीं अं आं खं क्षं क्लीं ह्रीं श्रीं मातृकाम्बा श्री ।

स्वयंवरामनु: – ४ ॐ ह्रीं योगिनि योगिनि योगेश्वरि योगाभयङ्करि सकलस्थावरजङ्गममुखं हृदयं मम वश माकर्षयाकर्षय स्वाहा । स्वयंवराम्बाश्री ।

ॐ यं तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात् । अर्धमात्राकाराय तिरोधानकर्त्रे ईश्वराय नमः ॥

ओड्याणेशीमनु: – ४ ह्ख्स्फ्रें महाचण्डयोगीश्वरि काळिके फट् । उत्तराम्नाय समयविद्येश्वरी ओड्याणेश्यम्बा श्री ॥

ओड्याणपीठमनु: – नवमुद्रा वीरावळीयुक्ताय त्रिसहस्रदेवतापरिवाराय ओड्याणपीठाय स्वाहा । ओड्याणपीठश्री ॥

॥ इत्युत्तराम्नायः ॥

— अथोर्ध्वाम्नायः —

मालिनीमनुः – अं आं ळं क्षं ऐं श्रीं । मालिन्यम्बा श्री ॥

पराषोडशीमनुः – श्रीं सौः क्लीं ऐं ह्रीं श्रीं सकलह्रीं हसकहलह्रीं क ए ई ल ह्रीं ह्रीं ऐं क्लीं सौः श्रीं पराषोडशाक्षरी श्री ॥

पराभट्टारिकामनुः – सौः पराभट्टारिकाम्बा श्री ।

पराशाम्भवीमनुः – ३ ह्ख्स्फ्रें ह्सौं अहं ह्सौं ह्ख्स्फ्रें श्रीं ह्रीं ऐं पराशाम्भवी श्री ॥

४ ह्ख्स्फ्रें ह्रीं सौः श्रीं हुं पराशाम्भव्यम्बा श्री ॥

प्रासादमनुः – ह्सौः प्रासादपराम्बा श्री ॥ स्हौःम् पराप्रासादाम्बा श्री ।

हंसमनुः – हं सः हंसश्री ॥

महावाक्यमनुः – प्रज्ञानं ब्रह्म । अहं ब्रह्मास्मि । तत्त्वमसि । अयमात्मा ब्रह्म । महावाक्याम्बा श्री ॥

पञ्चाक्षरीमनुः – अस्य श्री प्रणवपञ्चाक्षरी महामन्त्रस्य वामदेवऋषिः अनुष्टुप्छन्दः श्रीसाम्बसदाशिवो देवता ॐ बीजं नमश्शक्तिः शिवायेति कीलकं मम समस्तपापक्षयार्थं श्रीसाम्बसदाशिवप्रीत्यर्थे जपे विनियोगः । ॐ सदाशिवाय अङ्गुष्ठाभ्यां नमः । नं गंगाधराय तर्जनीभ्यां नमः । मं मृत्युंजयाय मध्यमाभ्यां नमः । शिं शूलपाणये अनामिकाभ्यां नमः । वां पिनाकपाणये कनिष्ठिकाभ्यां नमः । यं उमापतये करतलकरपृष्ठाभ्यां नमः । एवं हृदयादिन्यासः । भूर्भुवस्सुवरोमिति दिग्बन्धः ॥

ध्यानम्– शान्तं पद्मासनस्थं शशिधरमकुटं पञ्चवक्त्रं त्रिणेत्रं
शूलं वज्रं च खड्गं परशुमभयदं दक्षभागे वहन्तम् ।
नागं पाशं च घण्टां प्रळयहुतवहं साङ्कुशं वामभागे
नानालङ्कारयुक्तं स्फटिकमणिनिभं पार्वतीशं नमामि ॥

लमितिपञ्चपूजा । अथ मनु: – ॐ नमश्शिवाय । इ थाशक्तिजप: पूर्ववन्न्यासध्यानदिपूजान्तं कुर्यात् । शिवपञ्चाक्षर्यम्बा श्री ।।

शक्तिपञ्चाक्षरीमनु: – अस्यश्री शक्तिपञ्चाक्षरी महामन्त्रस्य वामदेवऋषि: पङ्क्तिश्छन्द: उमामहेश्वरो देवता ॐ बीजं नं शक्ति: मं कीलकं मम उमामहेश्वरप्रसादसिध्यर्थे जपे विनियोग: । ॐ सं सर्वज्ञ शक्तिधाम्ने अङ्गुष्ठाभ्यां नम: । ॐ नं नित्यतृप्तिशक्तिधाम्ने तर्जनीभ्यां नम: । ॐ मं स्वतंत्रशक्तिधाम्ने मध्यमाभ्यां नम: । ॐ शिं अनादिशक्तिधाम्ने अनामिकाभ्यां नम: । ॐ वां नित्यमलुप्तशक्तिधाम्ने कनिष्ठिकाभ्यां नम: । ॐ यं अनादिशक्तिधाम्ने करतलकरपृष्ठाभ्यां नम: । एवं हृदयादिन्यास: । भूर्भुवस्सुवरोमिति दिग्बन्ध: ।।

ध्यानम् – मूले कल्पद्रुमस्य द्रुतकनकनिभं चारुपद्मासनस्थं
वामाङ्कारूढ गौरीनिबिडकुचभराभोगगाढोपगूढम् ।
नानालकारकान्तं वरपरशुमृगाभीतिहस्तं त्रिणेत्रं
वन्दे बालेन्दुमौळिं गजवदनगुहाश्लिष्टपार्श्वं महेशम् ।।

लमितिपञ्चपूजां कृत्वा । मनु – ॐ श्रीं ह्रीं नमश्शिवाय । पूर्ववन्न्यासध्यानादि पूजान्तं कुर्यात् । शक्तिपञ्चाक्षर्यम्बा श्री ।।

ॐ हं ईशानस्सर्वविद्याना मीश्वरस्सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवों ।। मन्त्रातीतस्वरूपायानुग्रहकर्ते सदाशिवाय नम: ।। मखपरयघच् महिचनडयज् गं शफट् श्री ऊर्ध्वाम्नाय समय विद्येश्वर्यम्बा श्री ।।

मालिनीमन्त्रराजगुरुमण्डलसर्वाम्नाय देवता अशीतिसहस्रदेवतापरिवाराय शाम्भवीपीठाय स्वाहा ।।

।। इत्यूर्ध्वाम्नाय: ।।

## — अथानुत्तराम्नायः —

### पादुका

श्रीं ह्रीं क्लीं अमृतवर्षिणी पादुका परमेश्वरीवौषट् ।।

सम्प्रदायपादुकाश्रीं चरणं मनुः
परप्रकाशानन्दनाथश्री
परशिवानन्दनाथश्री
पराशक्तिदेव्यम्बाश्री
कौळेश्वरानन्दनाथश्री
शुक्लदेव्यम्बाश्री
कुळेश्वरानन्दनाथश्री
कामेश्वरीदेव्यम्बाश्री । इति दिव्यौघः
भोगानन्दनाथश्री
क्लिन्नानन्दनाथश्री
समयानन्दनाथश्री
सहजानन्दनाथश्री । इति सिद्धौघः ।।
गगनानन्दनाथश्री
विश्वानन्दनाथश्री
विमलानन्दनाथश्री
मदनानन्दनाथश्री
भुवनानन्दनाथश्री
लीलानन्दनाथश्री
स्वात्मानन्दनाथश्री
प्रियानन्दनाथश्री ।। इति मानवौघः

इति कामराजदिव्यौघसिद्धौघमानवौघपरंपरा ।।

योहमस्मि ब्रह्महमस्मि अहमस्मि ब्रह्माहमस्मि सोहं । स्वच्छप्रकाशपरिपूर्ण परापरमहाप्रकाशपरिपूर्णानन्दनाथश्री ।।

ऐं क ५ हंसः । रक्तचरणश्री ।।

क्लीं ह ६ सोहं । शुक्लचरणश्री ।।

सौः स ४ हंसस्सोहं । मिश्रचरणश्री ।।

ऐं क ५ क्लीं ह ६ सौः स ४ हंस शिवस्सोहं । निर्वाणचरणश्री ।।

इति कामराजचरणवासना । ऐं क ४ हंसः । रक्तचरणाम्बाश्री ।।

क्लीं ह ६ सोहं शुक्लचरणाम्बाश्री ।।

सौः स ४ हंसस्सोहं । मिश्रचरणाम्बाश्री ।।

ऐं क ५ क्लीं ह ६ सौः स ४ हंस शिवस्सोहं निर्वाणचरणाम्बाश्री ।।

।। इति कामराजविद्याचरणाः ।।

पञ्चाम्बामनुः – ३ आदिनाथव्योमातीताम्बाश्री ।। ३ आदिनाथव्योमेश्वर्यम्बाश्री ।। ३ अनामयानन्दनाथव्योमगाम्बाश्री ।। ३ अनन्तानन्दनाथव्योमचारिण्यम्बाश्री ।। ३ चिदाभासव्योमस्थाम्बाश्री ।। इति पञ्चाम्बाविद्या ।।

नवनाथाः– ३ हं उन्मन्याकाशानन्दनाथश्री ।। ३ सं समाकाशानन्दनाथश्री ।। ३ क्षं व्यापकाकाशानन्दनाथश्री ।। ३ मं शक्त्याकाशानन्दनाथश्री ।। ३ लं ध्वन्याकाशानन्दनाथश्री ।। ३ वं ध्वनिमात्राकाशानन्दनाथश्री ।। ३ रं इन्द्राकाशानन्दनाथश्री ।। ३ यं चिदाकाशानन्दनाथश्री ।। ३ ॐ व्यस्ताकाशानन्दनाथश्री ।। ३ हसक्षमलवरय ॐ समस्ताकाशानन्दनाथश्री ।। इति नवनाथविद्या ।।

मूलविद्या – ऐं ह्रीं श्रीं स्वच्छप्रकाशपरिपूर्णपरापरमहासिद्धविद्याकुळयोगिनी ह्रीं । मूलविद्याम्बाश्री ।।

३ स्वात्मानं बोधय स्हौः म् । प्रासादपरामूलविद्याम्बाश्री ।।

३ ऐं क्लीं क्लिन्ने क्लेदिनि महामदद्रवे क्लीं क्लेदय क्लां क्लीं मोहय २ क्लि नमस्स्वाहा ।। अतिरहस्ययोगिनी मूलविद्याम्बाश्री ।।

३ हंसः स्वच्छप्रकाशपरिपूर्णानन्दपरमहंसपरमात्मने स्वाहा । ह्सौः ह्स्क्ष्म्र्यीं शाम्भवी मूलविद्याम्बाश्री ।।

३ नित्यस्फुरणचैतन्यानन्दमयीमहाबिन्दुव्यापकमातृस्वरूपिणि ऐं ह्रीं श्रीं ईं हृल्लेखा मूलविद्याम्बाश्री ।।

३ स्वच्छप्रकाशात्मिके ह्रीं कुलमहामलिनि ऐं कुलमहामातृके ह्रीं ऐं समयविमले श्रीं समयविमलामूलविद्याम्बाश्री ।।

३ हसः स्वच्छप्रकाशपरिपूर्णपरापरमहाप्रकाशात्मिके कुलकुण्डलिनी आज्ञासिद्धिमहाभैरवि आत्मानं बोधय २ । अम्बे भगवति ह्रीं ह्रूं परबोधिनी । मूलविद्याम्बाश्री ।।

३ ॐ मोक्षं कुरु कुरु कुळपञ्चाक्षरी मूलविद्याम्बाश्री ॥

३ हसकलह्रीं हसकहलह्रीं सकलह्रीं चैतन्यमूलविद्या त्रिपुराश्री ॥

३ शुद्धसूक्ष्मनिराकारनिर्विकल्पपरब्रह्मस्वरूपिणि क्लीं परमानन्दशक्ति सौः शाम्भवानन्दनाथ अनुत्तरकौळिनी मूलविद्याम्बाश्री ॥

३ हंसस्सोहं स्वच्छानन्दपरमहंसपरमात्मने स्वाहा । गुरूत्तमविमर्शिनी मूलविद्याम्बाश्री ॥

३ अनामाख्यव्योमातीतानन्दनाथपरापरव्योमातीतव्योमेश्वर्यम्बाश्री । अनामाख्य मूलविद्याम्बाश्री ॥

३ ऐं ईं ऊं सङ्केतसारमूलविद्याम्बाश्री ॥

३ भगवति विच्चे महामाये मातङ्गिनि ब्लूं अनुत्तरवाग्वादिनी श्री ॥

३ ह्खस्फ्रें ह्खस्फ्रें ह्सौः अनुत्तरशाङ्करीश्री ॥

पञ्चदशीमनुः – अस्यश्री परापञ्चदशाक्षरी ब्रह्मविद्यामहात्रिपुरसुन्दरी महामन्त्रस्य आनन्दभैरवऋषिः दैवी गायत्री छन्दः परापञ्चदशाक्षरी ब्रह्मविद्यामहात्रिपुरसुन्दरीदेवताप्रसादसिध्यर्थे जपे विनियोगः । क ५ अङ्गुष्ठाभ्यां नमः । ह ६ तर्जनीभ्यां नमः । स ४ मध्यमाभ्यां नमः । क ५ अनामिकाभ्यां नमः । ह ६ कनिष्ठिकाभ्यां नमः । स ४ करतलकरपृष्ठाभ्यां नमः । एवं हृदयादिन्यासः । भूर्भुवस्सुवरोमिति दिग्बन्धः ॥

ध्यानम् – चतुर्भुजे चन्द्रकळावतंसे कुचोन्नते कुङ्कुमरागशोणे ।
पुण्ड्रेक्षुपाशाङ्कुशपुष्पबाणहस्ते नमस्ते जगदेकमातः ॥

सकुङ्कुमविलेपनामळिकचुम्बिकस्तूरिकां
समन्दहसितेक्षणां सशरचापपाशाङ्कुशां ।
अशेषजनमोहिनी मरुणमाल्यभूषाम्बरां
जपाकुसुमभासुरां जपविधौ स्मरेदम्बिकाम् ॥

लमितिपञ्चपूजामनुः – क ५ ह ६ स ४ श्रीं इति जपः । पूर्ववत् न्यास ध्यानादिकं कुर्यात् ॥

षोडशीमनुः – श्रीं ह्रीं क्लीं ऐं सौः ॐ ह्रीं श्रीं क ५ ह ६ स ४ सौः ऐं क्लीं ह्रीं श्रीं षोडश्यम्बाश्री ॥

पूर्तिविद्यामनुः – ३ हसकल हसकहल सकलह्रीं सर्वानन्दमयबैन्दवचक्रे परब्रह्मस्वरूपिणि परामृतशक्तिसर्वमन्त्रेश्वरि सर्वयन्त्रेश्वरि सर्वतंत्रेश्वरि सर्ववीरेश्वरि सर्वयोगीश्वरि सकलजगदधिष्ठानदेवता श्रीमहापूर्तिविद्यायै नमः । महापूर्तिविद्याम्बाश्री ॥

षडाधारविद्यामनुः – ३ सां हंसः मूलधाराधिष्ठानदेवतायै शाकिनी सहितब्रह्मस्वरूपिण्यम्बाश्री ॥

३ कां सोहं स्वाधिष्ठानाधिष्ठानादेवतायै काकिनीसहित ब्रह्मस्वरूपिण्यम्बाश्री ॥

३ वां हंसस्सोहं मणिपूरकाधिष्ठानदेवतायै वाकिनीसहित वैष्णवस्वरूपिण्यम्बाश्री ॥

३ रां हंस शिवस्सोहं अनाहताधिष्ठानदेवतायै राकिनीसहितसदाशिवस्वरूपिण्यम्बाश्री ॥

३ डां सोहं हंसशिवः विशुध्यधिष्ठानदेवतायै डाकिनीसहितजीवेश्वरस्वरूपिण्यम्बाश्री ॥

३ हां हंसशिवस्सोहं सोहं हंसशिवः आज्ञाचक्राधिष्ठानदेवतायै हाकिनीसहित परमात्मस्वरूपिण्यम्बाश्री ॥

— चरणयुगम् —

३ ऐं क्लीं सौः श्रीं ह्रीं क्लीं क ५ ह ६ स ४ हसकलह्रीं हसकहलह्रीं सकलह्रीं हसकल हसकहलह्रीं सकलह्रीं क्लीं ह्रीं श्रीं श्रीं सौः क्लीं श्रीं ह्रीं ऐं प्रकाशचरणाभ्यां नमश्श्री ॥

पुनः सर्वबीजमुच्चार्य विमर्शचरणाभ्यां नमश्श्री ॥

॥ इत्यनुत्तराम्नायः ॥

पुरश्चरणखण्डं सम्पूर्णम्

## — अथ पूजाखण्डः प्रारम्भः —

## — आदौ पञ्चामृताभिषेकमन्त्राः —

आप्यायस्व समेतु ते विश्वतस्सोमवृष्णियं । भवावाजस्य संगथे । श्रीमहात्रिपुरसुन्दर्यै नमः । क्षीरेण स्नपयामि । दधिक्रावुण्गो अकारिषं । जिष्णोरश्वस्य वाजिनः । सुरभिनो मुखाकरत् श्री ।। सुन्दर्यै नमः । दध्ना स्नपयामि ।। शुक्रमसि ज्योतिरसि तेजोसि देवोवस्सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोस्सूर्यस्य रश्मिभिः । आज्येन स्नपयामि ।। मधुवाता ऋतायते मधुक्षरंति सिंधवः । माध्वीर्नस्संत्वोषधीः । मधुनक्तमुतोषसि मधुमत्पार्थिवगम् रजः । मधु द्यौरस्तु नः पिता । मधुमान्नो वनस्पतिर्मधुमागम् अस्तु सूर्यः । माध्वीर्गावो भवन्तु नः ।। श्रीसुन्दर्यै नमः । मधुना स्नपयामि ।। स्वादुः पवस्वदिव्याय जन्मने स्वादुरिन्द्रायसुहवेतुनाम्ने । स्वादुर्मित्राय वरुणाय वायवे । बृहस्पतये मधुमागम् अदाभ्यः ।। श्री सुन्दर्यै नमः । शर्करया स्नपयामि ।। याः फलिनीर्या अफला अपुष्पायाश्च पुष्पिणीः । बृहस्पति प्रसूतास्तानोमुंचन्त्वगम् हसः ।। श्री सुन्दर्यै नमः । फलोदकेन स्नपयामि ।। आपोहिष्ठामयो भुवः । तान ऊर्जे दधातन । महेरणाय चक्षसे । योवश्शिवतमो रसः । तस्य भाजयते हनः । उशतीरिव मातरः । तस्मा अरङ्गमामवः । यस्य क्षयाय जिन्वथ । आपोजनयथाचनः ।। श्रीसुन्दर्यै नमः । शुद्धोदकस्नानं समर्पयामि ।।

ततः पुरुषसूक्तादिभिरभिषेचनं कुर्यात् ।

## — पुरुषसूक्तप्रारम्भः —

ॐ सहस्रशीर्षा पुरुषः । सहस्राक्षस्सहस्रपात् । स भूमिं विश्वतो वृत्वा । अत्यतिष्ठद्दशाङ्गुलं ।। पुरुष एवेदगम् सर्वं । यद्भूतं यच्च भव्यं । उतामृतत्वस्येशानः । यदन्नेनातिरोहति । एतावानस्य महिमा । अतो ज्यायागुश्च पूरुषः ।। १

पादोस्य विश्वाभूतानि । त्रिपादस्यामृतं दिवि । त्रिपादूर्ध्व उदैत्पुरुषः । पादोस्येहा भवात्पुनः । ततो विष्वङ्व्यक्रामत् साशनानशने अभि । तस्माद्विराडजायत । विराजो अधिपुरुषः । सजातोत्यरिच्यत । पश्चाद्भूमि मथोपुरः ॥ २ ॥ यत्पुरुषेण हविषा । देवायज्ञमतन्वत । वसंतोस्यासीदाज्यं । ग्रीष्म इध्मश्शरद्धविः ॥ सप्तान्यासन् परिधयः । त्रिस्सप्तसमिधः कृताः । देवा यद्यज्ञं तन्वानाः । अबध्नन् पुरुषं पशुं ॥ तं यज्ञं बर्हिषि प्रोक्षन् पुरुषं जातमग्रतः ॥ ३ ॥ तेन देवा अयजन्त । साध्या ऋषयश्च ये ॥ तस्माद्यज्ञात्सर्वहुतः संभृतं पृषदाज्यं । पशूग्स्ताग्श्चक्रे वायव्यान् आरण्यान् ग्राम्याश्च ये ॥ तस्माद्यज्ञात्सर्वहुतः । ऋचस्सामानि जज्ञिरे । छंदाग्‌म्सि जज्ञिरे तस्मात् । यजुस्तस्मादजायत ॥ ४ ॥ तस्मादश्वा अजायन्त । एके चोभयादतः । गावोह जज्ञिरे तस्मात् । तस्माज्जाता अजावयः ॥ यत्पुरुषं व्यदधुः । कतिधा व्यकल्पयन् । मुखं किमस्य कौ बाहू । का वूरू पादावुच्येते । ब्राह्मणोस्य मुखमासीत् । बाहू राजन्यः कृतः ॥ ५ ॥ ऊरू तदस्य यद्वैश्यः । पद्भ्याग् शूद्रो अजायत ॥ चन्द्रमा मनसो जातः । चक्षोस्सूर्यो अजायत । मुखादिन्द्रश्चाग्निश्च । प्राणाद्वायुरजायत ॥ नाभ्या आसीदन्तरिक्षं । शीर्ष्णो द्यौस्समवर्तत । पद्भ्यां भूमिर्दिशश्श्रोत्रात् । तथा लोकाग् अकल्पयन् ॥ ६ ॥ वेदाहमेतं पुरुषं महान्तं । आदित्यवर्णं तमसस्तु पारे । सर्वाणि रूपाणि विचित्य धीरः । नामानि कृत्वाऽभिवदन् यदास्ते ॥ धातापुरस्ताद्यमुदाजहार । शक्रः प्रविद्वान् प्रदिशश्चतस्रः । तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते ॥ यज्ञेन यज्ञ मयजन्त देवाः । तानि धर्माणि प्रथमान्यसन् । तेहनाकं महिमानस्सचन्ते । यत्र पूर्वे साध्यास्सन्ति देवाः ॥ ७ ॥ १ ॥ अद्भ्यस्सम्भूतः पृथिव्यै रसाच्च । विश्वकर्मणस्समवर्तताधि । तस्य त्वष्टाविदधद्रूपमेति । तत्पुरुषस्य विश्वमाजानमग्रे । वेदाहमेतं पुरुषं महान्तं । आदित्यवर्णं तमसः परस्तात् । तमेवं विद्वानमृत इह भवति नान्यः पन्था विद्यतेऽयनाय । प्रजापतिश्चरति गर्भे अन्तः । अजायमानो बहुधा विजायते । तस्य धीराः परिजानन्ति योनिं । मरीचिनां पदमिच्छन्ति वेधसः । यो देवेभ्य आतपति । यो देवानां पुरोहितः । पूर्वो यो देवेभ्यो जातः । नमो रुचाय ब्राह्मये । रुचं ब्राह्मं जनयन्तः । देवा

अग्रे तदब्रुवन्। यस्त्वैवं ब्राह्मणो विद्यात् तस्य देवा असन् वशे। ह्रीश्च ते लक्ष्मीश्च पत्न्यौ। अहोरात्रे पार्श्वे। नक्षत्राणि रूपं। अश्विनौ व्यात्तं इष्टं मनिषाण। अमुं मनिषाण। सर्वं मनिषाण ॥ २ ॥ तच्छयोरावृणिमहे। गातुं यज्ञाया गातुं यज्ञपतये। दैवी स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्यः। ऊर्ध्वं जगातु भेषजं। शनो अस्तु द्विपदे ॥ शं चतुष्पदे ॥ ॐ शांतिश्शांतिश्शान्तिः ॥

॥ पुरुषसूक्त सम्पूर्णम् ॥

## — श्रीसूक्तप्रारम्भः —

हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजां। चन्द्राग् हिरण्मयीं लक्ष्मीं जातवेदो ममावह ॥ १ ॥ तां म आवह जातवेदो लक्ष्मीमनपगामिनीं ॥ यस्यां हिरण्यं विन्देयङ्गामश्व पुरुषानहम् ॥ २ ॥ अश्वपूर्वां रथमध्यां हस्तिनाधप्रबोधिनीं। श्रियं देवी मुपह्वये श्रीर्मादेवीजुषताम्। कांसोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीं पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम् ॥ ४ ॥ चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदारां। तां पद्मिनेमीग् शरण महं प्रपद्येऽलक्ष्मीर्मेनश्यतां त्वां वृणे ॥ ५ ॥ आदित्यवर्णे तपसोधिजातो वनस्पतिस्तव वृक्षोथबिल्वः। तस्य फलानि तपसा नुदन्तु। मायांतरायाश्च बाह्याऽलक्ष्मीः ॥ ६ ॥ उपैतु मां देवसखः कीर्तिश्च मणिना सह। प्रादुर्भूतोस्मि राष्ट्रेऽस्मिन् कीर्तिमृद्धिं ददातु मे ॥ ७ ॥ क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशया म्यहं। अभूतिमसमृद्धिं च सर्वान्निर्णुध मे गृहात् ॥ ८ ॥ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीं। ईश्वरीगुम् सर्वभूतानां त्वामिहोपह्वये श्रियम् ॥ ९ ॥ मनसः काममाकूतिं वाचस्सत्यमशीमहि। पशनाग् रूपमन्नस्य मयि श्री श्श्रयतां यशः ॥१०॥ कर्दमेन प्रजाभूता मयि संभवकर्दम। श्रियं वासय मे कुले मातरं पद्म-मालिनीम् ॥११॥आपस्स्रुजन्तु स्निग्धानि चिक्लीत वस मे गृहे। निचदेवीं मातरगुम् श्रियं वासय मे कुले ॥ आर्द्रां पुष्करिणीं पुष्टिं सुवर्णां हेममालिनीं। सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो ममावह ॥ १३ ॥ आर्द्रां पुष्करिणीं यष्टिं पिंगळां

पद्ममालिनीम् । चन्द्राम् हिरण्मयीं लक्ष्मीं जातवेदो ममावह ॥१४॥ तां म आवह जातवेदो लक्ष्मी मनपगामिनीं । यस्यां हिरण्यं प्रभूतं गावोदाश्वोश्वान्विदेयं पुरुषानहं ॥ यश्शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहं । श्रियः पञ्चदशर्चं च श्रीकामस्सततं जपेत् ॥ १६ ॥ आनन्दः कर्दमश्चैव चिक्लीत इति विश्रुताः ॥ ऋषयस्ते त्रयः प्रोक्तास्स्वयं श्रीदेवदेवता ॥ पद्मासने पद्म ऊरु पद्माक्षी पद्मसंभवे । त्वं मां भजस्व पद्माक्षि येन सौख्यं लभाम्यहम् ॥ अश्वदायि गोदायि धनदायि महाधने । धनं मे जुषतां देवि सर्वकामार्थसिद्धये ॥ पुत्र पौत्र धनं धान्यं हस्त्यश्वाजाविगोरथं । प्रजानां भवसि मात आयुष्मन्तं करोतु मां ॥ चन्द्राभां लक्ष्मीमीशानां सूर्याभां श्रियमीश्वरीं । चन्द्रसूर्याग्निवर्णाभां श्रीमहालक्ष्मी मुपास्महे ॥ धनमग्निर्धनं वायुर्धनं सूर्यो धनं वसुः । धनमिन्द्रो बृहस्पतिर्वरुणां धनमश्नुते ॥ वैनतेय सोमं पिब सोमं पिबतु वृत्रहा । सोमं धनस्य सोमिनो मह्यं ददातु सोमिनि ॥ न क्रोधो न च मात्सर्यं न लोभो नाऽशुभामतिः । भवन्ति कृतपुण्यानां भक्तानां श्रीसूक्तजपात्सदा ॥ वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः ॥ रोहन्तु सर्वबीजान्यव ब्रह्मद्विषो जहि ॥ पद्मप्रिये पद्मिनि पद्महस्ते पद्मालये पद्मदळायताक्षि । विश्वप्रिये विष्णुमनोनुकूले त्वत्पादपद्मं मयि सन्निधत्स्व ॥ या सा पद्मासनस्था विपुलकटितटीपद्मपत्रायताक्षि गम्भीरावर्तनाभि स्तनभरनमिता शुभ्रवस्त्रोत्तरीया । लक्ष्मीर्दिव्यैर्गजेन्द्रैर्मणिगणखचितै स्स्नापिता हेमकुम्भैर्नित्यं सा पद्महस्ता मम वसतु गृहे सर्वमाङ्गल्ययुक्ता ॥ लक्ष्मीं क्षीरसमुद्रराजतनयां श्रीरङ्गधामेश्वरीं दासीभूतसमस्तदेववनितां लोकैकदीपाङ्कुरां । श्रीमन्मन्दकटाक्षलब्धविभवब्रह्मेन्द्रगङ्गाधरां । त्वां त्रैलोक्यकुटुम्बिनीं सरसिजां वन्दे मुकुन्दप्रियाम् ॥ सिद्धलक्ष्मीर्मोक्षलक्ष्मीर्जयलक्ष्मीस्सरस्वती । श्रीलक्ष्मीर्वरलक्ष्मीश्च प्रसन्ना मम सर्वदा ॥ वरांकुशौ पाश मभीतिमुद्रां करैर्वहन्तीं कमलासनस्थां । बालार्ककोटिप्रतिभां त्रिणेत्रां भजेह माद्यां जगदीश्वरीं ताम् । सर्वमङ्गळमाङ्गल्ये शिवे सर्वार्थसाधिके । शरण्ये त्र्यम्बके देवि नारायणि नमोस्तु ते ॥

महालक्ष्म्यै च विद्महे विष्णुपत्न्यै च धीमहि तन्नो लक्ष्मीः प्रचोदयात् ।

॥ श्रीसूक्तं सम्पूर्णम् ॥

## — भूसूक्तप्रारम्भः —

ॐ मेदिनीदेवी वसुन्धरास्याद्वसुधादेवी वासवी । ब्रह्मवर्चसः पितृणां श्रोत्रं चक्षुर्मनः । देवी हिरण्यगर्भिणी देवी प्रसोदरी । सदने सत्यायने सीद ।। समुद्रवती सावित्री ह्नो देवी मह्यङ्गी महीधरिणी महोव्यधिष्ठा । श्श्रृङ्गे श्रृङ्गे यज्ञे यज्ञे विभीषणी । इन्द्रपत्नी व्यापिनी । सुरसरिदिह वायुमती जलशयनी श्रियं धारा जासत्यंधो परिमेदिनी । सोपरिधत्तं परिणाय । विष्णुपत्नीं महीं देवीं माधवीं माधवप्रियां । लक्ष्मीप्रियसखीं देवीं नमाम्यच्युतवल्लभां ।। धनुर्धराय विद्महे सर्वसिद्ध्यै च धीमहि तन्नो धरा प्रचोदयात् ।। इक्षुशालियवसस्यफलाढ्ये पारिजाततरुशोभितमूले । स्वर्णरत्नमणिमण्टपमध्ये चिन्तयेत्सकललोकधरित्रीम् ।। श्यामां विचित्रां नवरत्नभूषितां चतुर्भुजां तुङ्गपयोधरान्वितां । इन्दीवराक्षीं नवशालिमञ्जरीं शुकन्दधानां वसुधां भजामहे ।। ऋक् । सक्तुमिवर्तितउना पुनंतो यत्र धीरा मनसा वाचमक्रत । अत्रासखायस्सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधिवाचि ।। ॐ शांतिश्शांतिश्शांतिः ।।

।। भूसूक्तं सम्पूर्णम् ।।

---

## — त्रिपुरोपनिषत्प्रारम्भः —



ॐ सहनाववतु सहनौ भुनक्तु सहवीर्यं करवावहै तेजस्विनावधीतमस्तु मा विद्विषावहै ॐ शान्तिश्शान्तिश्शान्तिः । पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते । हरिः ॐ त्रिसःपुरस्त्रिरथाविश्वचर्षणिः यत्राकधा अक्षरा सन्निविष्टाः । अधिष्ठायीनामजरापुराणि महत्तरा महिमा देवतानां । नवयोनिर्नवचक्राणि दीधिरे । न वै वयो गानवयोगिनीश्च नवानां चक्रेधिनाथास्योना । नवमुद्रा नवभद्रा महीनां । एकासासीत्प्रथमासावव आसीदासूनर्विशदासूनर्त्रिशत् । चत्वारिंशदधितिस्त्रस्समिद्धा उशतीरिव मातरा-

षाविशन्तु । ऊर्ध्वज्वलज्ज्वलनं ज्योतिरिन्दोरेता उर्वमण्डलामण्डयन्ति तिस्रश्च-रेखास्सदनानि भूमे स्त्रिविष्टपास्त्रिगुणास्त्रिप्रकाशाः । एतत्पुरं पूरकं पूरकाणां अत्र प्रथेते मदनो मदन्या मदन्तिका मानिनी मङ्गळा च सुभगा च सा सुन्दरी शुद्धिमत्ता लज्जामतिस्तुष्टिरिष्टा च पुष्टा लक्ष्मीरुमाललितालालपन्ती । इमां विज्ञाय सुधयामदन्ती परिसृता तर्पयत्वस्य पीठं । नाकस्य पृष्ठे महतो वसन्ति परन्धामत्रैपुरं चाविशन्ति । कामो योनिः कमला वज्रपाणिर्गुहा हसामातरिश्वाभ्रमिन्द्रः । पुनर्गुहासकला मायया च । पुरूच्येषा विश्वमातादि विद्या ।। षष्ठं सप्तममथवह्निसारथिं चास्यामूलं त्रिगमावेशयन्तः । कथ्यं कविं कल्पकं काममीशं तुष्टु वां सोमृतत्वं भजन्ते । त्रिविष्टपं त्रिगुणं विश्वमातुर्नवरेखास्वरमध्यन्तमीडे बृहत्यधिर्दश पञ्चाधिनित्या सा षोडशीपुरमध्यं बिभर्ति । द्वामण्डलाद्वास्तना बिम्बमेकं मुखं चाथ त्रीणि गुहास्सदनानि कामीं कलां काम्यरूपां विदित्वा । नरो जायते कामरूपस्य काम्यः परिसृतं झषमाद्यं पलञ्च भक्तानि योनिस्सुपरिष्कृतानि निवेदयन् देवतायै महत्यै । स्वात्मीकृत्य सुकृती सिद्धिमेति । सृण्येवसितथा विश्वचर्षणिः । पाशेन प्रतिबध्नात्यभीकान् । इषुभिः पञ्चभिर्धनुषा च विच्छत्या च शक्तिररुणा च विश्वजन्या । भगश्शक्तिर्भगवान् काममीश उभादातारविहसौभगानां समप्रधानौ समसत्वौ समेतयोः । समशक्ति रजराविश्वयोनिः । परिसृता हविषा पावितेव प्रसंकोचे गळिते वै मनस्कः । सर्वस्सर्वस्वजगतो विधातौ भर्ता हर्ता विश्वरूपत्वमेति । य इमं महोपनिषदं त्रिपुरा या आक्षरे परमे गीर्भिरीणे । एष ऋग्यजुः परमेतच्च सामेवाय मथर्वेयं मन्या च विद्यों । य एवं वेदेत्युपनिषत् । पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ।। हरिः ॐ ।। सहनाववतु । सहनौ भुनक्तु । सहवीर्यं करवावहै । तेजस्विनावधीतमस्तु मा विद्विषावहै । ॐ शान्तिश्शान्तिश्शान्तिः ।।

।। त्रिपुरोपनिषत्सम्पूर्णा ।।

।। श्रीपरदेवतार्पणमस्तु ।।



श्रीमहात्रिपुरसुन्दर्यै नमः

## — श्रीदेवीपूजाविधिप्रारम्भः —

श्लो॥ आब्रह्मलोकादाशेषादालोकालोकपर्वताः ।
ये वसन्ति द्विजा देवास्तेभ्यो नित्यं नमाम्यहम् ॥

अपसर्पन्तु ये भूता ये भूता भूमिसंस्थिताः ।
ये भूताविघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥

इति वामपार्ष्णिभूतलाघातत्रयकरास्फोटत्रयक्रूरदृष्ट्यवलोकनपूर्वकं ताळत्रयेण भूम्यन्तरिक्षगान् दिव्यान्विघ्नानुत्सार्य । ॐ नमो ब्रह्मादिभ्यो ब्रह्मविद्यासम्प्रदायकर्तृभ्यो वंशऋषिभ्यो नमो गुरुभ्यः । सर्वोपप्लवरहितप्रज्ञानघनप्रत्यगर्थो ब्रह्महमस्मि । सोहमस्मि । ब्रह्माहमस्मि । स्तम्भनचतुरश्रमत्स्यगोखुरयोन्याख्याभिः पञ्चमुद्राभिश्श्रीगुरुं प्रणम्य । गुरुपादुका मनुमुच्चार्य । आगमार्थन्तु देवानां गमनार्थं च रक्षसां । कुर्याद् घण्टारवं तत्र देवताह्वानलाञ्छनम् । हे घण्टे सुस्वरे पीठे घण्टाध्वनिविभूषिते । वादयन्ति परानन्दे घण्टावेवं प्रपूजयेत् ॥ घण्टामेतेन मन्त्रेण सम्पूज्य परिवादयेत् ॥

इति घण्टानादं कृत्वा –

श्लो ॥ ॐ शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजं ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥

इति गणेशं नत्वा । ३ ॐ नमो भगवति तिरस्करिणि महामाये महानिद्रे सकलजनमोहिनि पशुजनश्चक्षुस्तिरस्करणं कुरु कुरु स्वाहा ॥ ॐ हसन्ति हसितालापे मातङ्गी परिचारिके । मम भयविघ्नापदान्नाशं कुरु कुरु । हुं फट् स्वाहा इति विघ्नानुत्सार्य मण्डपस्य पश्चिमद्वारे तिष्ठन् । द्वारदक्षिणे भं भद्रकाळ्यै नमः ॥ वामे भं भैरवाय नमः ॥ ऊर्ध्वे लं लम्बोदराय नमः ॥ इति क्रमेण सम्पूज्य ॥ आचम्य । देशकालौ सङ्कीर्त्य मम श्रीललितामहात्रिपुर-

सुन्दरी परदेवता प्रीत्यर्थं यथाशक्ति सपर्यां निर्वर्तयिष्ये ।। इति सङ्कल्प्य । सुरभिळवदनः । समास्तीर्णासनः । सौः इति द्वादशवार मभिमन्त्र्य ।। पृथिव्याः मेरुपृष्ठऋषिः । कूर्मो देवता । सुतल छन्दः । आसने विनियोगः ।। पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता । त्वं च धारय मां देवि पवित्रं कुरु चासनम् ।। ॐ स्योना पृथिवीभवानृक्षरानिवेशिनी । यच्छानश्शर्म सप्रथाः । योगसनाय नमः । वीरासनाय नमः । शरासनाय नमः । ह्रीं आधारशक्तिकमलासनाय नमः ।। इत्युपविश्य ।। ॐ ३ श्रीमहात्रिपुरसुन्दरि आत्मानं रक्ष रक्ष ।। इति देहे त्रिर्व्यापकं कृत्वा ।। गुं गुरुभ्यो नमः । दक्षिणबाहौ गं गणपतये नमः । वामबाहौ दुं दुर्गायै नमः । दक्षिणोरू वं वटुकाय नमः । वामोरू यां योगिन्यै नमः । पादयोः क्षां क्षेत्रपालकाय नमः । नाभौ पं परमात्मने नमः । हृदये ओन्नमो-भगवती ज्वालाभालिनी स्वाहेति परितो वह्निप्राकारं विभाव्य । भूर्भुवस्सुवरो-मिति दिग्बन्धः ।। ३ ऐं ह्रः अस्त्राय फडित्यस्त्रमन्त्रेण मुहुरावृत्तेनाङ्गुष्ठादि कनिष्ठान्तं करतलयोः कूर्परयोः देहे च व्यापकं कुर्यात् ।।

श्रीगुरो दक्षिणामूर्ते भक्तानुग्रहकारक । अनुज्ञां देहि भगवन् श्रीचक्रयजनाय मे ।। अतिक्रूरमहाकायकल्पान्तदहनोपम । भैरवाय नमस्तुभ्य मनुज्ञां दातुमर्हसि ।।

इत्याज्ञां लब्ध्वा ४ रक्तद्वादश शक्तियुक्ताय दीपनाथाय नमः । इति दीपे पुष्पाञ्जलिं दत्वा । ४ समस्तप्रकटसिद्धयोगिनीचक्र श्री पादुकाभ्यो नमः । इत्यभ्यर्च्य ।। अथ पुरतः श्रीचक्रं प्रतिष्ठाप्य । मन्दिरपूजां कुर्यात् । यथा ।। ४ अमृताम्बो निधये नमः । ४ रत्नद्वीपाय नमः । ४ नानावृक्षमहोद्यानाय नमः । ४ कल्पवाटिकायै नमः । ४ सन्तानवाटिकायै नमः । ४ हरिचन्दनवाटिकायै नमः । ४ मन्दारवाटिकायै नमः । ४ पारिजातवाटिकायै नमः । ४ कदम्बवाटि-कायै नमः । ४ पुष्यरागरत्नप्राकाराय नमः । ४ पद्मरागरत्नप्राकाराय नमः । ४ गोमेधिकरत्नप्राकाराय नमः । ४ वज्ररत्नप्राकाराय नमः । ४ वैडूर्यरत्न-प्राकाराय नमः । ४ इन्द्रनीलरत्नप्राकाराय नमः । ४ मुक्तारत्नप्राकाराय नमः ।

४ मरकतरत्नप्राकाराय नमः । ४ विद्रुमरत्नप्राकाराय नमः । ४ माणिक्यमण्टपाय नमः । ४ सहस्रस्तम्भमण्टपाय नमः । ४ अमृतवापिकायै नमः । ४ आनन्दवापिकायै नमः । ४ विमर्शवापिकायै नमः । ४ बालातपोद्गारकक्ष्यायै नमः । ४ चन्द्रिकातपोद्गारकक्ष्यायै नमः । ४ महाश्रृङ्गारपरिघायै नमः । ४ महापद्माटव्यै नमः । ४ चिन्तामणिगृहराजाय नमः । ४ पूर्वाम्नायमय पूर्वद्वाराय नमः । ४ दक्षिणाम्नायमय दक्षिणद्वाराय नमः । ४ पश्चिमाम्नायमय पश्चिमद्वाराय नमः । ४ उत्तराम्नायमय उत्तरद्वाराय नमः । ४ रत्नप्रदीपवलयाय नमः । ४मणिमयसिंहासनाय नमः । ४ ब्रह्ममयैकमञ्चपादाय नमः । ४ विष्णुमयैकमञ्चपादाय नमः । ४ रुद्रमयैकमञ्चपादाय नमः । ४ ईश्वरमयैकमञ्चपादाय नमः । ४ सदाशिवमयैकमञ्चफलकाय नमः । ४ हंसतूलिकातल्पाय नमः । ४ हंसतूलिकातल्पमहोपधानाय नमः । ४ कौसुम्भास्तरणाय नमः । ४ महावितानकाय नमः । ४ महामाया यवनिकायै नमः । इति चतुश्चत्वारिंशन्मन्दिरमन्त्रैस्तत्तदखिलं भावयित्वा गन्धपुष्पाक्षतादीन् स्वदक्षिणभागे निधाय दीपानभितः प्रज्वाल्य मूलेन श्रीचक्रे पुष्पाञ्जलिं दत्वा ४ क ५ नमः त्रिकोणस्य स्वाग्रकोणं ३ ह ६ नमः इतीशानकोणं ३ स ४ नमः इत्याग्नेयकोणं अभ्यर्च्य भूतशुद्धिं विदध्यात् ॥

भूतशुद्धिः। श्वाससमीरं पिङ्गळयाऽन्तराकृष्य मूलश्रृङ्गाटात् सुषुम्नापथेन जीवशिवं परशिवपदे योजयामि स्वाहा इति मूलाधारस्थित जीवात्मानं सुषुम्नावर्त्मना ब्रह्मरन्ध्रं नीत्वा परमशिवे नैकीभूतं भावयित्वा इडया वायुं रेचयेत् ३ यं १६ सङ्कोचशरीरं शोषय शोषय स्वाहा। इति निजशरीरं शोषितं ३ रं १६ सङ्कोचशरीरं दह २ पच २ स्वाहा। इति प्लुष्टं भस्मितं च ३ वं १६ परमशिवामृतं वर्षय २ स्वाहा। इति तद्भस्म सहस्रारेन्दु मण्डल विगळदमृतरसात्सिक्तं च विभाव्य ३ लं शाम्भवशरीरमुत्पादयोत्पादय स्वाहा। इति तद्भस्मनः दिव्यं शरीरमुत्पन्नं च विभाव्य ३ हंसस्सोहं अवतर २ शिव पदाज्जीवसुषुम्नापथेन प्रविश मूलश्रृङ्गाटमुल्लसोल्लस ज्वल २ प्रज्वल २ हंस-

स्सोहं स्वाहेति परमशिवे ऐकीकृतं जीवं पुनस्सुषुम्नावर्त्मना मूलाधारे स्थापितं विचिन्तयेत्। संकोचशरीरं नाम पाञ्चभौतिकं परिच्छिन्नमिदमेवाङ्गं इति भूतशुद्धिं विधाय ॥ आत्मप्राणप्रतिष्ठां कुर्यात् ज्ञावार्णवोक्तैव ग्राह्या ॥ हृदि-दक्षिण करतलं निधाय ओं सोहमिति त्रिः पठेत्। ततः ततः १६ ७ त्रिधावा प्राणानायम्य। अपसर्पन्तु ये भूता ये भूता भूमिभारकाः। ये भूता विघ्नकर्तार-स्ते नश्यन्तु शिवाज्ञया। इति विघ्नानुत्सार्य नम इत्यंगुष्ठ मन्त्रमुच्चार्य कुशेन शिखां बध्वा। स्वदेहे न्यासजालात्मकं वज्रकवचं विदधीत ॥

## — अथान्तश्चक्रन्यासः —

अथ सहस्रारे अं आं सौः चतुरश्र त्रयात्मक त्रैलोक्य मोहनचक्राधिष्ठात्र्यै अणिमाद्यष्टाविंशति शक्तिसहित प्रकटयोगिनीरूपायै त्रिपुरादेव्यै नमः। तदुपरि विषुसंज्ञे षड्दळे ऐं क्लीं सौः षोडशदळपद्मात्मक सर्वाशापरिपूरक चक्राधिष्ठात्र्यै कामाकर्षिण्यादि षोडशशक्तिसहित गुप्तयोगिनीरूपायै त्रिपुरेश्वरीदेव्यै नमः। आधारे ह्रीं क्लीं सौः अष्टदळपद्मात्मक सर्वसंक्षोभण चक्राधिष्ठात्र्यै अनङ्ग कुसुमाद्यष्ट शक्तिसहित गुप्ततरयोगिनीरूपायै त्रिपुरसुन्दरी देव्यै नमः। स्वाधिष्ठाने हैं ह्क्लीं ह्सौः चतुर्दशारात्मक सर्वसौभाग्यदायक चक्राधिष्ठात्र्यै सर्वसंक्षोभिण्यादि चतुर्दशशक्तिसहित सम्प्रदाययोगिनीरूपायै त्रिपुरवासिनी देव्यै नमः। मणिपूरे ह्सैं ह्क्लीं ह्सौः दशारात्मक सर्वार्थसाधक चक्रा-धिष्ठात्र्यै सर्वसिद्धिप्रदादि दशशक्तिसहित कुळोत्तीर्णयोगिनीरूपायै त्रिपुरा श्रीदेव्यै नमः। अनाहते ह्रीं क्लीं ब्लें दशारात्मक सर्वरक्षाकर चक्राधिष्ठात्र्यै सर्वज्ञादि दशशक्तिसहित निगर्भयोगिनीरूपायै त्रिपुरमालिनीदेव्यै नमः। विशुद्धौ ह्रीं श्रीं सौः अष्टारात्मक सर्वरोगहर चक्राधिष्ठात्र्यै वशिन्याद्यष्टशक्तिसहित रहस्ययोगिनीरूपायै त्रिपुरासिद्धादेव्यै नमः। लम्बिकाग्रे ह्स्रैं ह्स्क्लीं ह्स्रौः त्रिकोणात्मक सर्वसिद्धिप्रद चक्राधिष्ठात्र्यै कामेश्वरादि त्रिशक्तिसहितातिरहस्य योगिनीरूपायै त्रिपुराम्बादेव्यै नमः। आज्ञायां क १५ बिन्द्वात्मक सर्वानन्द-मय चक्राधिष्ठात्र्यै षडङ्गायुध दशशक्तिसहित परापररहस्ययोगिनीरूपायै

महात्रिपुरसुन्दरीदेव्यै नमः। पुनः आज्ञाचक्रोपरि एकैकांगुळदेशे बिन्दौ अं आं सौः नमः अर्धचन्द्रे। ऐं क्लीं सौः नमः रोधिन्याम्। ह्रीं क्लीं सौः नमः नादे। हैं ह्क्लीं ह्सौः नमः नादान्ते। ह्सैं ह्क्लीं ह्सौः नमः शक्तौ। ह्रीं क्लीं ब्लें नमः व्यापिकायाम्। ह्रीं श्रीं सौः नमः समनायाम्। ह्स्रैं ह्स्क्लीं ह्स्रौः नमः उन्मनायाम्। क १५ नमः ब्रह्मरन्ध्रे महाबिन्दौ क १५ श्रीं नमः इत्यादि चक्रेश्वरीमन्त्रान्न्यसेत्॥

॥ इत्यन्तश्चक्रन्यासः॥

## — अथ बहिश्चक्रन्यासः —

पादयोः अं आं सौः चतुरश्रत्रयात्मकत्रैलोक्य मोहनचक्राधिष्ठात्र्यै अणिमाद्यष्टाविंशति शक्तिसहित प्रकटयोगिनीरूपायै त्रिपुरादेव्यै नमः। जान्वोः ऐं क्लीं सौः षोडशदळपद्मात्मक सर्वाशापरिपूरक चक्राधिष्ठात्र्यै कामाकर्षिण्यादि षोडशशक्तिसहित गुप्तयोगिनीरूपायै त्रिपुरेश्वरीदेव्यै नमः। ऊरुमूलयोः ह्रीं क्लीं सौः अष्टदळपद्मात्मक सर्वसंक्षोभण चक्राधिष्ठात्र्यै अनङ्गकुसुमाद्यष्ट शक्तिसहित गुप्ततरयोगिनीरूपायै त्रिपुरसुन्दरी देव्यै नमः। नाभौ हैं ह्क्लीं ह्सौः चतुर्दशारात्मक सर्वसौभाग्यदायक चक्राधिष्ठात्र्यै सर्वसंक्षोभिण्यादि चतुर्दश शक्तिसहित सम्प्रदाययोगिनीरूपायै त्रिपुरवासिनी देव्यै नमः। हृदये ह्सैं ह्क्लीं ह्सौः बहिर्दशारात्मक सर्वार्थसाधक चक्राधिष्ठात्र्यै सर्वसिद्धिप्रदादि दशशक्तिसहित कुळोत्तीर्णयोगिनीरूपायै त्रिपुरा श्रीदेव्यै नमः। कण्ठे ह्रीं क्लीं ब्लें अन्तर्दशारात्मक सर्वरक्षाकर चक्राधिष्ठात्र्यै सर्वज्ञादिदशशक्तिसहित निगर्भयोगिनीरूपायै त्रिपुरमालिनी देव्यै नमः। मुखे ह्रीं श्रीं सौः अष्टदळपद्मात्मक सर्वरोगहर चक्राधिष्टात्र्यै वशिन्याद्यष्टशक्तिसहित रहस्ययोगिनीरूपायै त्रिपुरा सिद्धादेव्यै नमः। नेत्रयोः ह्सैं ह्स्क्लीं ह्सौः त्रिकोणात्मक सर्वसिद्धिप्रद चक्राधिष्ठात्र्यै कामेश्वर्यादि त्रिशक्तिसहितातिरहस्ययोगिनीरूपायै त्रिपुराम्बा

देव्यै नमः । मूर्ध्नि कल ५ बिन्द्वात्मक सर्वानन्दमय चक्राधिष्ठात्र्यै षडङ्गायुध दशशक्तिसहित परापर रहस्ययोगिनीरूपायै महात्रिपुरसुन्दरीदेव्यै नमः ॥

॥ इति बहिश्चक्रन्यासः ॥

## — वाग्देवतान्यासः —

अं १६ ब्लूं वशिनी वाग्देवतायै नमः (शिरसि) । कं ५ क्ह्लीं कामेश्वरी वाग्देवतायै नमः (ललाटे) । चं ५ न्ल्वीं मोदिनी वाग्देवतायै नमः (भ्रूमध्ये) टं ५ य्लूं विमलावाग्देवतायै नमः (कण्ठे) । तं ५ ज्म्रीं अरुणा वाग्देवतायै नमः (हृदये) । पं ५ ह्स्ल्व्र्यूं जयिनी वाग्देवतायै नमः (नाभौ) । यं ४ झ्म्रिं सर्वेश्वरी वाग्देवतायै नमः (गुह्ये) । शं ६ क्ष्म्रीं काळिनी वाग्देवतायै नमः (मूलाधारे) ॥

॥ इति वाग्देवतान्यासः ॥

## — मूलविद्यान्यासः —

मूर्ध्नि कं । मूले एं । हृदये ईं। दक्षिणनेत्रे लं । वामनेत्रे ह्रीं । भ्रूमध्ये हं । दक्षिणश्रोत्रे सं । वामश्रोत्रे कं । मुखे हं । दक्षिणभुजे लं । वामभुजे ह्रीं । पृष्ठे सं । दक्षजानुनि कं । वामजानुनि लं । नाभौ ह्रीं ।

॥ इति मूलविद्यान्यासः ॥

## — तत्वन्यासः —

दक्षपादे आत्मतत्वाय नमः । वामे क्रियाशक्त्यै नमः । दक्षपार्श्वे विद्यातत्वाय नमः । वामे ज्ञानशक्त्यै नमः । दक्षकपोले शिवतत्वाय नमः । वामे इच्छाशक्त्यै नमः । मूर्ध्नि सर्वतत्वाय नमः । तत्रैव तुर्यशक्त्यै नमः ।

॥ इति तत्वन्यासः ॥

## — कामेश्वर्यादिन्यासः —

मूलाधारे - ऐं क ५ अग्निचक्रे कामगिरिपीठे मित्रेशनाथात्मिके जाग्रद्दशाधिष्ठायिके। इच्छाशक्त्यात्मक रुद्रात्मशक्ति श्रीमहाकामेश्वर्यै नमः। अनाहते क्लीं ह ६ सूर्यचक्रे जालन्धरं पीठे षष्ठीशनाथात्मिके स्वप्नदशाधिष्ठायिके ज्ञानशक्त्यात्मकविष्णवात्मशक्ति श्रीमहावज्रेश्वर्यै नमः। आज्ञायां सौः स ४ सोमचक्रे पूर्णगिरिपीठे ओड्डीशनाथात्मके सुषुप्तिदशाधिष्ठायिके क्रियाशक्त्यात्मक ब्रह्मात्मशक्ति श्रीमहाभगमालिन्यै नमः। ब्रह्मरन्ध्रे ऐं क्लीं सौः क १५ परब्रह्म चक्रे महोड्याणपीठे चर्यानन्दनाथात्मिके तुरीयदशाधिष्ठायिके शान्तिशक्त्यात्मक परब्रह्मशक्ति श्रीमहात्रिपुरसुन्दर्यै नमः। इति कामेश्वर्यादिन्यासः॥

## — करशुद्धिन्यासः —

दक्षकरतले अं नमः। तत्पृष्ठे आं नमः। तत्पार्श्वे सौः नमः। वामकरतले अं नमः। तत्पृष्ठे आं नमः। तत्पार्श्वे सौः नमः। मध्यमयोः अं नमः। अनामिकयोः आं नमः। कनिष्ठिकयोः सौः नमः। अंगुष्ठयोः अं नमः। तर्जन्यो आं नमः। करतलकरपृष्ठयोः सौः नमः। इति करशुद्धिन्यासः॥

## — चतुरासनन्यासः —

ह्रीं क्लीं सौः श्रीदेव्यात्मासनाय नमः। पादयोः ४ हैं ह्क्लीं ह्सौः श्रीचक्रासनाय नमः। जान्वोः ह्स्रैं ह्स्क्लीं ह्स्रौः सर्वमन्त्रासनाय नमः। ह्रीं क्लीं ब्लें साध्यसिद्धासनाय नमः। मूलाधारे। इति चतुरासनन्यासः। ततः मूलेन षडङ्गन्यासः। इति दशधान्यासः॥

## — वर्धनीकलशस्थापनविधिः —

स्वदक्षिणतः वर्धनीकुम्भं संस्थाप्य ऐं क १५ अं अग्निमण्डलाय धर्मप्रददशकलात्मने वर्धनीकलशाधाराय नमः। क्लीं ह ६ उं सूर्यमण्डलायार्थप्रद-

द्वादशकळात्मने वर्धनीकलशाय नमः। सौ. स ४ मं सोममण्डलाय कामप्रद-षोडशकळात्मने वर्धनीकलशामृताय नमः। इति सम्पूज्य गन्धपुष्पाक्षतैरलंकृत्य

कलशस्य मुखे शम्भुः कण्ठे विष्णु स्समाश्रितः
मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणा स्स्मृताः
कुक्षौ तु सागरा स्सर्वे सप्तद्वीपा वसुन्धरा
ऋग्वेदोऽथ यजुर्वेद स्सामवेदो ह्यथर्वणः
अङ्गैस्तु सहिता स्सर्वे कलशाम्बु समाश्रिताः
आयान्तु देवीपूजार्थं दुरितक्षयकारकाः
गङ्गे च यमुने चैव गोदावरि सरस्वति
नर्मदे सिन्धुकावेरि जलेऽस्मिन् सन्निधिं कुरु ॥

आपो वा इदगं सर्वं विश्वाभूतान्यापः प्राणा वा आपः पशव आपोऽन्नमापोऽमृतमापस्सम्राडापोविराडापस्स्वराडापच्छन्दागंस्यापो ज्योतीगंष्यापोयजूगंष्यापो सत्यमापस्सर्वा देवता आपो भूर्भुवस्सुवराप ॐ। इत्यभिमन्त्र्य ॥

## — शुद्धिसंस्कारः —

तद्बिन्दुभिस्तद्दक्षिणतः बिन्दुत्रिकोणवृत्तचतुरश्रमण्डलं मत्स्यमुद्रया विलिख्य मूलेन बिन्दुमभ्यर्च्य क ५ ह ६ स ४ त्रिकोणमभ्यर्च्य क ५ हृदयदेव्यै ह ६ शिरोदेव्यै स ४ शिखादेव्यै क ५ कवचदेव्यै ह ६ नेत्रदेव्यै स ४ अस्त्रदेव्यै नम इति वृत्तमभ्यर्च्य। चतुरश्रे पीठचतुष्टयमभ्यर्च्य तस्मिन् मण्डले शुद्धि-पात्रं संस्थाप्य ह्लः अस्त्राय फडिति शुद्धोदकेन प्रोक्ष्य। वाक्त आप्यायतां प्राणस्त आप्यायतां चक्षु स्त आप्यायतां श्रोत्रं त आप्यायतां याते प्राणाञ्छुग्जगाम या चक्षु र्या श्रोत्रं यत्ते क्रूरं यदा स्थितं तत्त आप्यायतां तत्त एतेन शुन्धतां नाभि स्त आप्यायतां पायुस्त आप्यायतागं शुद्धाश्चरिताश्शमह्न्युचः। ॐ श्लीं पशुहुं फट्।

सद्यो जातं प्रपद्यामि सद्यो जाताय वं नमो नमः
भवे भवे नातिभवे भवस्व मां भवोद्भवाय नमः
वामदेवाय नमो ज्येष्ठाय नम श्श्रेष्ठाय नमो रुद्राय
नमः कालाय नमः कलविकरणाय नमो बलविकरणाय
नमो बलाय नमो बलप्रमथनाय नमस्सर्वभूतदमनाय
नमो मनोन्मनाय नमः ॥

अघोरेभ्योथ घोरेभ्यो घोरघोरतरेभ्यः ।
सर्वेभ्य श्शर्वसर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥
तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात् ॥

ईशानस्सर्वविद्यानामीश्वरस्सर्वभूतानां ब्रह्माधिपति र्ब्रह्मणोधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवों ॥

उद्बुध्य स्वपशो त्वं हि नाशिवस्त्वं शिवोह्यसि ।
शिवात्कृतमिदं पिण्डमतस्त्वं शिवतां व्रज ॥
पशुपाशाय विद्महे शिरच्छेदाय धीमहि तन्नश्छागः प्रचोदयात् ।

ॐ ऐं ह्रीं क्लीं व्योमेश्वरीदेवि सर्वजगत्प्रिये सर्वव्यञ्जनानां स्वादु दायिके व्योमेश्वरीदेवी हुं फट् स्वाहा। ॐ ३ खेचरेश्वरीदेवि सर्वजगत्प्रिये सर्वव्यञ्जनानां स्वादुदायिके रामठेश्वरीदेवि हुं फट् स्वाहा । ॐ ३ लं भूचरेश्वरी देवि अरुचिपरिहारिणि मरीचान्तर्वर्तिनि क्रूरशस्त्रदंष्ट्राबाहुके लं भूचरेश्वरीदेवि हुं फट् स्वाहा । ॐ ३ दिक्चरेश्वरीदेवि नारीणां शोभावहे दुर्गन्धापहारिणि सुगन्धप्रतिबोधिनि दिक्चरेश्वरीदेवि हुं फट् स्वाहा । ॐ ३ सोमेश्वरीदेवि सर्वजगत्प्रिये सर्वरसानां स्वादुदायिके सोमेश्वरीदेवि हुं फट् स्वाहा। इति शस्त्रभावनया अक्षतान्निक्षिपेत् । धेनुयोनिमुद्रे प्रदर्श्य ॥

## — अथ सामान्यार्घ्यविधिः —

तद्वामतः बिन्दुत्रिकोणषट्कोणवृत्तचतुरश्रमण्डलं मत्समुद्रया विलिख्य। मूलेन बिन्दुमभ्यर्च्य त्रिखण्डैः त्रिकोणमभ्यर्च्य मूलद्विरावृत्या षडङ्गैः षट्कोणमभ्यर्च्य अग्नीशासुर वायुकोणेषु मध्ये विदिक्षु च षडङ्गैः स्सम्पूज्य अं अग्निमण्डलाय धर्मप्रद दशकलात्मने सामान्यार्घ्य शङ्खपात्राधाराय नमः इत्यस्त्रक्षाळितमाधारं संस्थाप्य ॥ अग्निं दूतं वृणीमहे होतारं विश्ववेधसं अस्य यज्ञस्य सुक्रतुम् । रां रीं रूं रैं रौं रः रमल वरयूं अग्निमण्डलाय नमः । अग्निमण्डलं विभाव्य। ३ यं धूम्रार्चिकळायै नमः । ३ रं ऊष्माकळयै नमः । ३ लं ज्वलिनीकळायै नमः । ३ वं ज्वालिनीकळायै नमः । ३ शं विस्फुलिङ्गिनी कळायै नमः । ३ सं सुश्रीकळायै नमः । ३ सं सुरूपाकळायै नमः । ३ ह कपिला कळायै नमः । ३ ळं हव्यवाहिनीकळायै नमः । ३ क्षं कव्यवाहिनीकळाय नमः । इति सम्पूज्य ॥ उं सूर्यमण्डलाय अर्थप्रदद्वादशकलात्मने सामन्यार्घ्य शङ्खपात्राय नमः । इत्यस्त्रक्षाळित शङ्खं निधाय आसत्येन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च हिरण्मयेन सवितारथेन देवो याति भुवनाविवश्यन् ॥ हां हीं हूं हैं हौं हः हमलवरयूं सूर्यमण्डलाय नमः । सूर्यमण्डलं विभाव्य तस्य पश्चिमादि प्रादक्षिण्येन कं भं तपिनीकळा खं बं तापिनीकळा गं पं धूम्राकळा घं पं मरीचिकळा ङं नं ज्वालिनीकळा चं धं रुचिकळा छ दं सुषुम्नाकळा जं थं भोगदाकळा झ तं विश्वाकळा ञं णं बोधिनीकळा टं ढं धारिणीकळा ठं डं क्षमाकळायै नमः इति सम्पूज्य । मं सोममण्डलाय कामप्रदषोडशकलात्मने सामान्यार्घ्यशङ्खपात्रामृताय नमः इति वर्धनीसलिलमापूर्य बिन्दुं दत्वा ॥ आप्यायस्य समेतु ते विश्वतस्सोमवृष्णियं भवा वाजस्य सङ्गथे । सां सीं सूं सैं सौं सः समलवरयूं सोममण्डलाय नमः । सोममण्डलं विभाव्य। तत्र पश्चिमादिप्रादिक्षिण्येन अं अमृताकळायै नमः । आं मानदा इं पूषा ईं तुष्टिकळा उं पुष्टिकळा ऊं रतिकळा ऋं धृतिकळा ॠं शशिनीकळा लुं चन्द्रिकाकळा लूं कान्तिकळा एं ज्योत्स्नाकळा ऐं श्रीकळा ओं प्रीतिकळा औं अङ्गदाकळा अं पूर्णाकळा अः पूर्णामृतकळायै नमः ॥ इति सम्पूज्य पूर्ववद्विधिक्षु मध्येदिक्षु

च ३ क ५ हृदयाय नमः हृदयशक्तिश्री । इत्यादिरीत्या कूटत्रयद्विरावृत्या पुष्पैः षडङ्गानि समर्चयेत् ॥

अस्त्राय फडिति संरक्ष्य कवचाय हुमित्यवकुण्ठ्य धेनुयोनिमुद्रे प्रदर्श्य मूलेन सप्तवारमभिमन्त्र्य तत्सलिलपृषतैः आत्मानं पूजोपकरणानि चावोक्ष्य शङ्खगत जलात् किञ्चिद्वर्धिन्यां क्षिपेत् ॥

॥ इति सामान्यार्घ्यविधिः ॥

## — अथ विशेषार्घ्यविधिः —

अथ सामान्यार्घ्योदकेन तद्दक्षिणतः बिन्दुत्रिकोणवृत्तचतुरश्रात्मकमण्डलं कृत्वा बिन्दौ सानुस्वारं तुरीयमालिख्य चतुरश्रे प्राग्वत् षडङ्गं विन्यस्य कूटत्रयेण त्रिकोणमभ्यर्च्य पुरोभागादिप्रादक्षिण्येन कूटत्रयद्विरावृत्या षट्कोणस्य कोणांश्चक्रमेण कुसुमादिभि रभ्यर्चयेत् । अथ तत्र मण्डले ३ ऐं क ५ आं वह्नि-मण्डलाय विशेषार्घ्यपात्राधाराय नमः । अग्निमण्डलं विभाव्य । अग्नि दूतं वृणीमहे होतारं विश्ववेधसं अस्य यज्ञस्य सुक्रतुं यं धूम्रार्चिकळायै रं ऊष्मा-कळायै लं ज्वलिनीकळायै वं ज्वालिनीकळायै शं विस्फुलिङ्गिनीकळायै षं सुश्री-कळायै सं सुरूपाकळायै हं कपिलाकळायै ळं हव्यवाहिनीकळायै क्षं कव्यवाहिनी कळायै नमः । इति दशवह्निकलास्सम्पूज्य । ३ क्लीं ह ६ उं सूर्यमण्डलाय विशेषार्घ्यपात्राय नमः इत्यस्त्रक्षाळितपात्रं निधाय तत्र ३ ह्लीं ऐं महालक्ष्मीश्वरी परमस्वामिनि ऊर्ध्वशून्यप्रवाहिनि सोमसूर्याग्निभक्षिणि परमाकाशभासुरे आगच्छगच्छ विश विश पात्रं प्रतिगृह्ण २ हुं फट् स्वाहा इति पुष्पाञ्जलिं विकीर्य । आसत्येन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च हिरण्मयेन सविता रथेनादेवो याति भुवना विपश्यन् ॥

कं भं तपिनीकळायै नमः । खं बं तापिनीकळा गं फं धूम्राकळा घं पं मरीचिकळा ङं नं ज्वालिनीकळा चं धं रुचिकळा छं दं सुषुम्नाकळा जं थं भोगदाकळा झं तं विश्वाकळा ञं णं बोधिनीकळा टं ढं धारिणीकळा ठं डं क्षमाकळायै नमः ।।

इति द्वादशदिनेशकलास्सम्पूज्य तत्र पात्रे ३ सौः स ४ मं सोममण्डलाय कामप्रदषोडशकलात्मने विशेषार्घ्यपात्रामृताय नमः । क्षकारादि अकारान्तं विलोममातृकयाऽमृतमभिपूर्य अष्टगन्धलोळितपुष्पं निधाय नागरखण्डं संमृश्य आप्यायस्व समेतु ते विश्वतस्सोमवृष्णियं भवावाजस्य संगथे ।।

अं अमृतकळायै आं मानदाकळायै इं पूषा ईं तुष्टि उं पुष्टि ऊं रति ऋं धृति ॠं शशिनी लुं चन्द्रिका लूं कान्ति एं ज्योत्स्ना ऐं श्रीकला ओं प्रीति औं अंगदा अं पूर्णा अः पूर्णामृतकला इति षोडशचन्द्रकलास्सम्पूज्य । तत्र चतुरश्र-परितः ॐ ४ ह्सख्फ्रें पथिकदेवताभ्यो हुं फट् स्वाहा । ॐ ४ ऐं ३ ग्रामचण्डालिनी हुं फट् स्वाहा । ॐ ४ ऐं ३ क्रोधचण्डालिनी हुं फट् स्वाहा । ॐ ४ ऐं ३ दृष्टिचण्डा-लिनी हुं फट् स्वाहा । ॐ ४ ऐं ३ स्पर्शचण्डालिनी हुं फट् स्वाहा । ॐ ४ ऐं ३ सृष्टिचण्डालिनी हुं फट् स्वाहा । ॐ ४ ऐं ३ घटचण्डालिनी हुं फट् स्वाहा । ॐ ४ ऐं ३ तपनवेधचण्डालिनी हुं फट् स्वाहा । ॐ ४ ऐं ३ निर्देवचण्डालिनी हुं फट् स्वाहा । ॐ ४ ऐं ३ सर्वजनदृष्टिस्पर्शदोषचण्डालिनी हुं फट् स्वाहा । ॐ ४ ऐं ३ पशुपाशचण्डालिनी हुं फट् स्वाहा । इत्येकादशदोषान्निरस्य । क्रां क्रीं क्रूं क्रैं क्रौं क्रः विकारशोषिणी अस्य विरारान् हन हन स्वाहा ।।

## — पञ्चदशऋचः —

स्वाधिष्ठयामधिष्ठया । पवस्व सोमधारया । इन्द्राय पातवे सुतः । रक्षोह्रा विश्वचर्षिणी । रभियोनि मपोहातं । दृणास्सधस्थ मासदत् ।। वरिवोधातमो भव । मं हिष्ठो वृत्रहं तमः वर्षिराधो मघोनां ।। अभ्यर्ष महानां । देवानां

वीतिमन्धसा । अभिवाज सुतश्रवः ।। त्वामच्छाचरामसि तदिदर्थं दिवे दिवे । इन्दोत्वेन आशसः ।। विष्णुर्योनिं कल्पयतु । त्वष्टा रूपाणि पिगं्शतु । आसिञ्चतु प्रजापतिः । धाता गर्भं दधातु ते ।। गर्भं देहि सिनीवालि गर्भं देहि सरस्वति गर्भं ते अश्विनौ देवा वा धत्तां पुष्करस्रजां ।। हिरण्मयी अरणी यन्निर्मन्धते अश्विना । तं ते गर्भगं् हवामहे । दशमे मासि सूतवे ।। त्रिभिष्ट्वं देव सवितर्वर्षिष्ठै स्सोमदामभिः । अग्ने दक्षैः पुनीहि नः ।। पुनन्तु मां देवजनाः पुनन्तु वसवो धिया । विश्वे देवाः पुनीत मा जातवेदाः पुनीहि मा ।। प्रप्याय स्वप्रस्यन्द स्वसोम विश्वेभि रंशुभिः । देवेभ्य उत्तमं हविः ।। इमं मे गङ्गे यमुने सरस्वति शुतुद्रिस्तोमगं् । स च ता परुष्ण्या असिक्न्या मरुद्वृधे वितस्त यार्जीगीये शृणुया सुषोमया ।। सिता सिते सरिते यत्र सङ्गते मे तत्राप्लुतासि दिवमुत्पतन्ति ये वै तत्वां विसृजन्ति धरास्तेवैज नासो अमृतत्वं भजन्ते ।। तामन्धसात्तो मनुषोदुरोणे । आधत्तं रयिं सह वीरं वचस्यवे । कृतं तीर्थं सुप्रपाणं शुभस्यतीस्थाणुं यथेष्टामपदुर्मतिं हर्ति ।। श्रोणामेकमुदक गामवाजति मां समेकाः पिशतिसूनयाभृतं । अनिसूचस्मकृदेवाको असाभवत् किस्वित्पुत्रेभ्यः पितरा उपावतः इत्यभिमन्त्र्य ।

ह्स्रां ह्स्रिं ह्स्रूं ह्स्रैं ह्स्रौं ह्स्रः अमृते अमृतोद्भवे अमृतेश्वरि अमृतवर्षिणि अमृतस्वरूपिणि अमृतं स्रावय २ शुक्रशापात्सुरां मोचय २ मोचिकायै नमः ।। ॐ जुं सः स्वाहा इत्यष्टवारमभिमन्त्र्य । तत्र स्वाग्रादिप्रादक्षिण्येन आकथादिषोडशवर्णात्मकरेखात्रयं त्रिकोणं विलिख्य तदन्तः स्वाग्रादिकोणेषु प्रादक्षिण्येन हळक्षान् विलिख्य बहिश्च मूलखण्डत्रयं बिन्दुसबिन्दुतुर्यस्वरं तद्वाम दक्षयोः क्रमेण हंस इति च वर्णौ विलिख्य । ३ हंसः नमः इत्याराध्य त्रिकोणस्य परितः वृत्तं निर्माय । स्वाग्रकोणादि प्रादक्षिण्येन प्रागुक्ते ष्षडङ्गमन्त्रैस्सम्पूज्य ३ क १५ तां चिन्मयीमानन्दलक्षणामृतकलशपिशितहस्तद्वयां प्रसन्नां देवीं पूजयामि स्वाहा । इति सुधादेवीमभ्यर्च्य तदर्घ्यं पात्रान्तरेण षडित्युद्धृत्य पुनस्स्वाहेति मन्त्रेण तत्रैव निक्षिप्य ३ हुमित्यवकुण्ठ्य वौषडिति धेनु

मुद्रयाऽमृतीकृत्य फडिति संरक्ष्य ३ नमः इति पुष्पं दत्वा मूलेन गालिन्या निरीक्ष्य योनिमुद्रया नत्वा मूलेन सप्तवारमभिमन्त्र्य प्राणप्रतिष्ठां कृत्वा षोडशोपचारैः सम्पूज्य तद्बिन्दुभिः स्वमात्मानं साधकानपि सर्वं विद्यामयं विभाव्य विशेषार्घ्यपात्रं करेण संस्पृश्य चतुर्नवतिमन्त्रैरभिमन्त्रयेत् । ३ कं सृष्टिकळायै नमः । खं बुद्धिकळायै नमः । गं स्मृतिकळायै । घं मेधा । ङं कान्ति । चं लक्ष्मी । छं द्युति । जं स्थिरा । झं स्थिति । ञं सिद्धि । इति ब्रह्मकलादश । टं जरा ठं पालिनी डं शान्ति ढं ईश्वरि णं रति तं कामिनी थं वरदा दं आह्लादिनी धं प्रीति नं दीर्घा इति विष्णुकळादश । पं तीक्ष्णा फं रौद्रा बं भया भं निद्रा मं तन्द्री यं क्षुत्कळा रं क्रोधिनी लं क्रिया वं उद्गारि शं मृत्यु इति रुद्रकला दश । षं पीतकळायै सं श्वेता हं अरुणा ळं असिता इति चतस्र ईश्वरकळाः । अं निवृत्ति आं प्रतिष्ठा इं विद्या ईं शान्ति उं इन्धिका ऊं दीपिका ऋं रेचिका ॠं मोचिका लुं परा लूं सूक्ष्मा एं सूक्ष्मामृत ऐं ज्ञान ओं ज्ञानामृत औं आप्यायिनी अं व्यापिनी अः व्योमरूपकळायै नमः इति सदाशिवकलाष्षोडश । ८८ हगं् स श्शुचिषद्वसुरन्तरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् । प्रतद्विष्णुस्तवते वीर्याय मृगो न भीमः कुच रोगिरिष्ठाः यस्योरुषु त्रिषु विक्रमणेषु अधिक्षयन्ति भुवनानि विश्वा । त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीयमाऽमृतात् ॥ तद्विष्णोः परमं पदगं् सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम ॥ विष्णो र्योनिं कल्पयतु । त्वष्टा रूपाणि पिगं्शतु आसिंचतु प्रजापतिः धाता गर्भं दधातु ते । मूलम् । आहृत्य ॥

अखण्डैकरसानन्दकरे परसुधात्मनि स्वच्छन्दस्फुरणा मत्र निधेहि कुळनायिके । अकुळस्थाऽमृताकारे शुद्धज्ञानकरे परे । अमृतत्वं निधेह्यस्मिन्वस्तुनि क्लिन्नरूपिणी ॥ त्वद्रूपिण्यैकरसत्वं कृत्वा ह्येतत्स्वरूपिणी । भूत्वा परामृताकारे मयि चित्स्फुरणं कुरु ॥

ऐं ब्लूं झ्रौं जुं सः अमृते अमृतोद्भवे अमृतेश्वरि अमृतवर्षिणि अमृतं स्रावय २ स्वाहा ऐं वद वद वाग्वादिनी ऐं क्लीं क्लिन्ने क्लेदिनि क्लेदय महाक्षोभं कुरु कुरु क्लीं सौः मोक्षं कुरु कुरु हसौं सहौः ॥ आहत्य ९९ इत्यर्घ्यं संशोधनम् । एवं अभिमन्त्रितविशेषार्घ्यामृतात् किञ्चित्पात्रान्तरे उद्धृत्य शिरसि श्रीगुरुं त्रिर्यजेत् । सन्निहितो यदि निवेदयेत् । स्वयमपि शोधयेत्तत्त्वत्रयम् पुनः किञ्चिद्विशेषार्घ्यामृतं कारणकलशे निक्षिपेत् । विशेषार्घ्यपात्रं शङ्खं च न चालयेत् ॥

॥ इति विशेषार्घ्यविधिः ॥

## — आदौ श्रीदेवीध्यानश्लोकाः —

ओं बिन्दुत्रिकोणसंयुक्तं वसुकोणसमन्वितम्
दशकोणद्वयोपेतं भुवनारसमन्वितम् ।
दळाष्टकसमोपेतं दळषोडशकान्वितम्
वृत्तत्रयान्वितं भूमि सदनत्रयशोभितम्
नमामि ललिताचक्रं भक्तानामिष्टदायकम् ॥

ध्यानम् – अथाहं बैन्दवे चक्रे सर्वानन्दमयात्मके ।
रत्नसिंहासने रम्ये समासीनां शिवप्रियाम् ॥

उद्यद्भानुसहस्राभां चतुर्बाहुसमन्विताम् ।
अष्टगन्धसमोपेत श्रीचन्दनविलेपनाम् ॥

हेमकुम्भसमप्रख्यस्तनद्वयविराजिताम् ।
मुक्तामाणिक्यखचित नासिकाभरणान्विताम् ॥

पक्वबिम्बफलाभासुरधरद्वयशोभिताम् ।
शुद्धमुक्तावळी प्रख्यदन्तपङ्क्तिविराजिताम् ॥

ताम्बूलपूरितमुखीं सुस्मितास्य विराजिताम् ।
आद्यभूषणसंयुक्तां हेमचिन्ताकसंयुताम् ॥
पतकेन समोपेतां महापतकसंयुताम् ।
मुक्तावळिसमोपेतामेकावळिसमन्विताम् ॥
केयूराङ्गदसयुक्तां चतुर्बाहु समन्विताम् ।
मुक्तामाणिक्यखचित काञ्चीयुत नितम्बिनीम् ॥
रक्तवस्त्रपरीधानां कञ्चुकाद्यैरलंकृताम् ।
सदाशिवाङ्कस्थपृथु महज्जघनमण्डलाम् ॥
कदळीस्तम्बसङ्काश सक्थियुग्मविराजिताम् ।
काहळीकान्ति विलसज्जङ्घायुगळशोभिताम् ॥
ब्रह्मविष्णुमहादेव शिरोमकुटजातया ।
कान्त्या विराजितपदां भक्तत्राणपरायणाम् ॥
इक्षुकार्मुकपुष्पेषु पाशांकुशधरां पराम् ।
संवित्स्वरूपिणीं देवीं ध्यायामि परमेश्वरीम् ॥

हृदि कल्पिते श्रीचक्रे श्रीदेवीं ध्यात्वा षोडशोपचारैः स्सम्पूज्य त्रिखण्ड मुद्रामण्डित कुसुमाञ्जलौ तां परिचितिं समानीय। ३ ह्रीं श्रीं सौः श्रीललितासुन्दर्याः अमृतचैतन्यमूर्तिं कल्पयामि नमः। इति मन्त्रमुच्चारयन्। निजलीलाङ्गीकृतललितवपुषं विचिन्त्य। ह्स्रैं ह्स्क्ल्रीं ह्स्रौः ॥

महापद्मवनान्तस्थे कारणानन्दविग्रहे ।
सर्वभूतहिते मात रेह्येहि परमेश्वरी ॥
देवेशि भक्तसुलभे सर्वावरणसंयुते ।
यावत्वां पूजयिष्यामि तावत्वं सुस्थिरा भव ॥

इत्यावाह्य – आवाहनादि नवमुद्राः प्रदर्श्य प्राणप्रतिष्ठां कृत्वा। परदेवतायाः चतुष्षष्ठ्युपचारानाचरेत्। तेष्वशक्तावां भावनया सामान्यार्घ्योदकात् किञ्चिदम्बाचरणाम्बुजेर्पणबुध्या पात्रान्तरे विक्षिपेत्॥

४ ललिता महात्रिपुरसुन्दरि पाद्यं कल्पयामि नमः॥ ३ आभरणावरोहणम्। ३ सुगन्धतैलाभ्यञ्जनम्। ३ मज्जनशालाप्रवेशनम्। ३ मज्जनमण्टप मणिपीठोपवेशनम्। ३ दिव्यस्नानीयम्। ३ उद्वर्तनम्। ३ उष्णोदकस्नानम्। ३ कनककलशच्युत सकलतीर्थाभिषेचनम्। ३ धौतवस्त्रपरिमार्जनम्। ३ अरुणदुकूलपरिधानम्। ३ अरुण कुचोत्तरीयम्। ३ आलेपमण्टपप्रवेशनम्। ३ आलेपमण्टपमणिपीठोपवेशनम्। ३ चन्दनागरुमृगमदकर्पूरगोरोचनादि दिव्यगन्धसर्वाङ्गविलेपनम्। ३ केशभरस्य कालागरुधूपम्। ३ मल्लिकामालतीजाजिचम्पकाशोकपुन्नागकल्हारमुख्यसर्वर्तुकुसुममालाधारणम्। ३ भूषणमण्टपप्रवेशनम्। ३ भूषणमण्टपमणिपीठोपवेशनम्। ३ नवमणिमकुटम्। ३ चन्द्रशकलम्। २ सीमन्तसिन्दूरम्। ३ तिलकरत्नम्। ३ कालाञ्जनम्। ३ पाळीयुगळम्। ३ मणिकुण्डलयुगळम्। ३ नासाभरणम्। ३ अधरयावकम्। ३ प्रथमभूषणम्। ३ कनकचिन्ताकम्। ३ पतकम्। ३ महापतकम्। ३ मुक्तावळी। ३ एकावळिम्। ३ चन्नवीरम्। ३ केयूरयुगळचतुष्टयम्। ३ वलयावळिम्। ३ ऊर्मिकावळिम्। ३ काञ्चीदाम। ३ कटिसूत्रम्। ३ सौभाग्याभरणम्। ३ पादकटकम्। ३ रत्ननूपुरम्। ३ पादांगुळीयकम्। ३ एककरे पाशम्। ३ अन्यकरे अंकुशम्। ३ इतरकरे पुण्ड्रेक्षुचापम्। ३ अपरकरे पुष्पबाणान्। ३ श्रीमन्माणिक्यपादुके। ३ स्वसमानवेषाभिरावणदेवताभिस्सह श्रीमहाचक्राधिरोहणम्। ३ कामेश्वराङ्कपर्यङ्कोपवेशनम्। ३ अमृतासवचषकम्। ३ आचमनीयम्। ३ कर्पूरवीटिकाम्। ३ आनन्दोल्लासविलासहासम्। ३ मङ्गळारार्तिकम्। समस्तचक्र चक्रेशीयुते देवि नवात्मिके आरार्तिकमिदं तुभ्यं गृहाण मम सिद्धये। ३ छत्रम्। ३ चामरयुगळम्। ३ दर्पणम्। ३ ताळवृन्तम्। ३ गन्धम्। ३ पुष्पम्। ३ धूपम्। ३ दीपम्। ३ नैवेद्यम्। पानीयोत्तरापोशनं

ताम्बूलाद्युपचारान् कृत्वा द्रां सर्वसंक्षोभिणी द्रीं सर्वविद्राविणी क्लीं सर्वाकर्षिणी ब्लूं सर्ववशंकरी सः सर्वोन्मादिनी क्रों सर्वमहांकुशा ह्स्ख्फ्रें सर्वखेचरी ह्सौः सर्वबीजम्। ऐं सर्वयोनि। ह्स्रैं ह्स्क्ल्रीं ह्स्रौं सर्वत्रिखण्डा इति दशमुद्राः प्रदर्श्य ततः चतुरायतनपूजां कुर्यात्॥

— अथ चतुरायतनपूजाविधि. —

नैरुते च गणेशानं सूर्यं वायव्यमेव च।
ईशाने विष्णुमाग्नेये शिवं चैव प्रपूजयेत्।

— गणपतिध्यानम् —

सिन्दूराभं त्रिणेत्रं प्रधुतर जठरं हस्तपद्मैर्दधानं
दन्तं पाशांकुशौ स्वं ह्युरुकरविलसद्बीजपूराभिरामम्।
बालेन्दुद्योतमौळि करिपतिवदनं दानपूरार्द्रगण्डं
भोगीन्द्राबद्धभूषं भजत गणपतिं रक्तवस्त्राङ्गरागम्॥

ओं तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि तन्नो दन्तिः प्रचोदयात्। गणाधिपतये नमः। ध्यायामि। आवाहयामि। आसनं समर्पयामि। पाद्यं समर्पयामि। हस्तयोरर्घ्यं समर्पयामि। स्नपयामि। स्नानं समर्पयामि। वस्त्रं गन्धं अक्षतान् समर्पयामि। पुष्पैः पूजयामि। ओं सुमुखाय नमः एकदन्ताय नमः कपिलाय नमः गजकर्णिकाय नमः लम्बोदराय नमः विकटाय नमः विघ्नराजाय नमः गणाधिपाय नमः धूमकेतवे नमः गणाध्यक्षाय नमः फालचन्द्राय नमः गजाननाय नमः वक्रतुण्डाय नमः शूर्पकर्णाय नमः हेरम्बाय नमः स्कन्दपूर्वजाय नमः पुष्पाणि समर्पयामि॥ वनस्पतिरसैर्दिव्यैर्गन्धाढ्यैः सुमनोहरैः। कपिलाघृत संयुक्तधूपोयं प्रतिगृह्यताम्॥ धूपमाघ्रापयामि॥ सुप्रकाशो महादीपः सर्वत्र तिमिरापह। सबाह्याभ्यन्तरं ज्योतिर्दीपोयं

प्रतिगृह्यताम् । दीपं दर्शयामि ॥ नैवेद्यं समर्पयामि । मध्ये मध्ये पानीयं उत्तरापोशनम् । हस्तप्रक्षाळनम् । पादप्रक्षाळनम् । आचमनीयम् । ताम्बूलम् ॥ तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि । तन्नो दन्तिः प्रचोदयात् ॥ नीराजनं दर्शयामि ॥ प्रदक्षिणनमस्कारान् समर्पयामि । समस्तराजोपचार देवोपचारान् समर्पयामि । अनेन षोडशोपचारपूजनेन भगवान्सर्वदेवात्मकः श्रीमहागणाधिपस्सुप्रीतस्सुप्रसन्नो वरदो भवतु । न्यूनातिरिक्तं सर्वं सुगुणमस्तु ॥

॥ इति गणपतिपूजा ॥

## — अथ सूर्यपूजा —

ध्यानम् – रक्ताम्बुजासनमशेषगुणैकसिन्धुं
भानुं समस्तजगतामधिपं नमामि ।
पद्मद्वयाभयवरान्दधतं कराग्रै
र्माणिक्यमौळि मरुणाङ्गरुचिं त्रिणेत्रम् ॥

भास्कराय विद्महे महाद्युतिकराय धीमहि ।
तन्नो आदित्यः प्रचोदयात् ॥

भास्कराय नमः । ध्यायामि आवाहयामि आसनं समर्पयामि अर्घ्यं पाद्यं आचमनीयं स्नानं आचमनीयं वस्त्रं दिव्यगन्धं अक्षतान् पुष्पाणि पूजयामि ॥ ओं मित्राय नमः रवये नमः सूर्याय नमः भानवे नमः खगाय नमः पूष्णे नमः हिरण्यगर्भाय नमः मरीचये नमः आदित्याय नमः पवित्रे नमः अर्काय नमः भास्कराय नमः नानाविधपरिमळपुष्पाणि समर्पयामि ॥ धूपं दीपं नैवेद्यं मध्ये मध्ये पानीयं उत्तरापोशनं हस्तप्रक्षाळनं पादप्रक्षाळनं आचमनीयं ताम्बूलं नीराजनं मन्त्रपुष्पं प्रदक्षिणनमस्कारान्समर्पयामि । समस्तराजोपचार देवोपचार पूजान्समर्पयामि । अनेन षोडशोपचारपूजनेन भगवान् सर्वदेवात्मकः आदित्यस्सुप्रीतस्सुप्रसन्नो वरदो भवतु न्यूनातिरिक्तं सर्वं सुगुणमस्तु ॥

॥ इति सूर्यपूजा ॥

## — अथ विष्णुपूजा —

ध्यानम् – अव्याद्व्याकोचनीलाम्बुज रुचिरारुणाम्भोजनेत्रोम्बुजस्थो
बालो जङ्घाकटीसुस्थलकलितरणत्किङ्किणीकोमुकुन्दः ।
दोर्भ्यां हय्यङ्गवीनं विमलमपि दधन्पायसं विश्ववन्द्यो
गो गोपी गोपवीतो रुरुनखविलसत्खण्ठभूषश्च रत्नः ॥

ओं नारायणाय विद्महे वासुदेवाय धीमहि तन्नो विष्णुः प्रचोदयात् । विष्णवे नमः ध्यायामि आवाहयामि आसनं अर्घ्यं पाद्यं आचमनीयं स्नानं आचमनीयं वस्त्रं यज्ञोपवीतं गन्धं अक्षतान्समर्पयामि । पुष्पाणि पूजयामि ॥ ओं श्रीकृष्णाय नमः वासुदेवाय नमः नारायणाय नमः देवकीनन्दनाय नमः यदुश्रेष्ठाय नमः वार्ष्णेयाय नमः असुरकृन्तनाय नमः भूभारहरणाय नमः धर्मसंस्थापनाय नमः विष्णवे नमः नानाविधपरिमळपुष्पाणि समर्पयामि । धूपं दीपं नैवेद्यं पानीयं उत्तरापोशनं हस्तप्रक्षाळनं पादप्रक्षाळनं आचमनीयं ताम्बूलं नीराजनं मन्त्रपुष्पं प्रदक्षिणनमस्कारान्समर्पयामि । समस्तराजोपचार देवोपचारान्समर्पयामि ॥ अनेन षोडशोपचारपूजनेन भगवान्सर्वदेवात्मकः श्रीमहाविष्णु स्सुप्रीत स्सुप्रसन्नो वरदो भवतु ॥ न्यूनातिरिक्तं सर्वं सुगुणमस्तु ॥

॥ इति विष्णुपूजा ॥

## — अथ शिवपूजा —

ध्यानम् – मुक्तापीतपयोदमौक्तिक जपावर्णैर्मुखैः
पञ्चभिस्त्र्यक्षै रञ्चितमीशमिन्दुमकुटं पूर्णेन्दुकोटिप्रभम् ।
शूलं टङ्क कृपाण वज्रदहना न्नागेन्द्रघण्टांकुशा
न्पाशाभीतिवरान् दधानममिताकल्पोज्वलाङ्गं भजे ॥

ओं तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ।। महादेवाय नमः ध्यायामि आवाहयामि आसनं अर्घ्यं पाद्यं आचनीयं स्नानं आचमनीयं वस्त्रं यज्ञोपवीतं गन्धं अक्षतान् पुष्पाणि पूजयामि । ओं वामदेवाय नमः ज्येष्ठाय नमः श्रेष्ठाय नमः रुद्राय नमः कालाय नमः कलविकरणाय नमः बलविकरणाय नमः बलाय नमः बलप्रमथनाय नमः सर्वभूतदमनाय नमः मनोन्मनाय नमः महादेवाय नमः नानाविधपरिमळपुष्पाणि समर्पयामि । धूपं दीपं नैवेद्यं मध्ये मध्ये पानीयं उत्तरापोशनं हस्तप्रक्षाळनं पादप्रक्षाळनं आचमनीयं ताम्बूलं तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात् ।। कर्पूरनीराजनं दर्शयामि । मन्त्रपुष्पं प्रदक्षिणनमस्कारान्समर्पयामि । समस्तराजोपचार देवोपचारान्समर्पयामि ।। अनेन षोडशोपचार पूजनेन भगवान्सर्वदेवात्मकः श्रीमहादेव स्सुप्रीत स्सुप्रसन्नो वरदो भवतु । न्यूनातिरिक्तं सर्वं सुगुणमस्तु ।। अभीष्ठसिद्धिं मे देहि शरणागतवत्सले । भक्त्या निवेदितं तुभ्यं चतुरायतनार्चनम् ।। इत्यायतनपूजां देव्यै समर्पयामि । ततः मूलेन श्रीललितात्रिपुरसुन्दरी श्रीपादुकां पूजयामीति त्रिस्सन्तर्पयेत् ।।

।। इति देवीपूजनम् ।।

## — अथ आवरणार्चनम् —

देव्यङ्गे अग्नीशादि कोणेषु मध्ये दिक्षु च पूर्वोक्तविधिना षडङ्गयुवतीः पूजयेत् । क ५ हृदयदेव्यम्बा श्री । ह ६ शिरोदेव्यम्बा श्री । स ४ शिखादेव्यम्बा श्री । क ५ कवचदेव्यम्बा श्री । ह ६ नेत्रदेव्यम्बा श्री । स ४ अस्त्रदेव्यम्बा श्री । सं विन्मये परेदेवि परामतचरुप्रिये । अनुज्ञां त्रिपुरे देहि परिवारार्चनाय मे । तिथिनित्यां संपूज्य । मध्यत्रिकोणस्य दक्षिणरेखायां वारुण्याद्याग्नेयान्तं क्रमेण अं आं इं ईं उं इति पूर्वरेखायाम् ।। ऊं ऋं ॠं लुं लूं इत्युत्तररेखायाम् ।। ईशानादि वारुण्यन्तं एं ऐं ओं औं अं इति पञ्च पञ्चस्वरान्विभाव्य ।। ततः त्रिकोणरेखागत पञ्चदशस्वरेषु वामावर्तेन कामेश्वर्यादिनित्यायजेत् । विन्दौ च षोडशस्वरं विचिन्तयेत् ।। यथा ।। ३ अं ऐं सकलह्रीं

नित्यक्लिन्ने मदद्रवे सौः अं कामेश्वरी नित्या श्री पादुकां पू-त नमः। ३ आं ऐं भगभुगे भगिनि भगोदरि भगमाले भगावहे भगगुह्ये भगयोनि भगनिपातिनि सर्वभगवशङ्करि भगरूपे नित्यक्लिन्ने भगस्वरूपे सर्वाणि भगानि मे ह्यानय। वरदे रेते सुरेते भगक्लिन्ने क्लिन्नद्रवे क्लेदय द्रावय अमोघे भगविच्चे क्षुभ क्षोभय सर्वसत्वान्भगेश्वरि ऐं ब्लूं जें ब्लूं भें ब्लूं मों ब्लूं हें ब्लूं हें क्लिन्ने सर्वाणि भगानि मे वशमानय स्त्रीं हरब्लें ह्रीं आं भगमालिनी नित्या श्री पा ।। ३ इं ओं ह्रीं नित्यक्लिन्ने मदद्रवे स्वाहा। इं नित्यक्लिन्ना नित्या श्री ।। ३ ईं ओं क्रों भ्रों क्रों झ्रौं छ्रौं ज्रैं स्वाहा। ईं भेरुण्डा नित्याश्री ।। ३ उं ह्रीं वह्नि वासिन्यै नमः उं वह्निवासिनी नित्याश्री ।। ३ ऊं ह्रीं क्लिन्ने ऐं क्रों नित्य-मदद्रवे ह्रीं ह्रूं ऊं महावज्रेश्वरी नित्याश्री।। ३ ऋं ह्रीं शिवदूत्यै नमः ऋं शिवदूती नित्याश्री ।। ३ ॠं ओं ह्रीं हुं खेचछेक्षः स्त्रीं हुं क्षें ह्रीं फट् ॠं त्वरिता नित्याश्री पा।। ३ लुं ऐं क्लीं सौः लुं कुळसुन्दरी नित्याश्री ।। लूं हस-कलरडैं हसकलरडीं हसकलरडौः लूं नित्या नित्याश्री।। ३ एं ह्रीं फें स्रूं क्रों आं क्लीं ऐं ब्लूं नित्यमदद्रवे हुं फ्रें ह्रीं एं नीलपताका नित्याश्री ।। ३ ऐं भमरयूं ऐं विजया नित्याश्री ।। ३ ओं सौः। सर्वमङ्गळा नित्याश्री ।। ३ औं ओन्नमो भगवति ज्वालामालिनी देवदेवि सर्वभूतसंहारकारिके जातवेदसि ज्वलन्ती। ज्वल २ प्रज्वल २ ह्रां ह्रिं ह्रूं र र र र र र र हुं फट् स्वाहा। औं ज्वाला-मालिनी नित्याश्री ।। ३ अं च्क्रौं अं चित्रा नित्याश्री ।। ३ अः क १५ अः महानित्याश्री ।। ततो देव्याः पश्चान्मूलत्रिकोण पूर्वरेखायास्तदव्यवहित प्रागग्रत्रिकोणपश्चिमरेखायाश्चान्तरे विमलाजयिन्योर्मध्ये अरुणा वाग्देवता सन्निधौ दक्षिणोत्तरायतरेखात्रयं विभाव्य दक्षिणसंस्था क्रमेण। दिव्यौघ सिद्धौघ मानवौघेभ्यो परौघेभ्यो नमः इति पुष्पाञ्जलिं दत्वा। प्रथमरेखायाम्। ३ परप्रकाशानन्दनाथश्री ।। ३ परशिवानन्दनाथश्रीं। ३ परशक्त्यम्बाश्री। ३ कौळेश्वरानन्दनाथश्री। ३ शुक्लदेव्यम्बाश्री। ३ कुळेश्वरानन्दनाथश्री। ३ कामेश्वर्यम्बाश्री ।। इति दिव्यौघः। द्वितीयरेखायां ३ भोगानन्दनाथश्री। ३ क्लिन्नानन्दनाथश्री। ३ समयानन्दनाथश्री। ३ सहजानन्दनाथश्री। इति

सिद्धौघः ॥ तृतीयरेखायाम् । ३ गगनानन्दनाथश्री । ३ विश्वानन्दनाथश्री। ३ विमलानन्दनाथश्री। ३ मदनानन्दनाथश्री । ३ भुवनानन्दनाथश्री। ३ लीलानन्दनाथश्री । ३ स्वात्मानन्दनाथश्री । ३ प्रियानन्दनाथश्री । इति मानवौघः॥ स्वशिरसि गुरुत्रयं सम्पूज्य। ततः अं आं सौः त्रैलोक्य मोहनचक्राय नमः। इति पुष्पाञ्जलिं दत्त्वा। शुक्लारुण पीतवर्ण रेखात्रयस्य लकारप्रकृतिकपृथिव्यात्मकस्य प्रवेशरीत्या प्रथमरेखायां पश्चिमादिद्वार चतुष्टयदक्षिणभागेषु वाय्वादिकोणेषु पश्चिमनैरृतयोः पूर्वेशानयोश्च मध्ये क्रमेण ॥ ३ अं अणिमा सिद्ध्यम्बाश्री । ३ लं लघिमा । ३ मं महिमा । ३ ईं ईशित्वसिद्धि । ३ वं वशित्वसिद्ध्यम्बाश्री । ३ पं प्राकाम्यसिद्धि। ३ भुं भुक्तिसिद्धि। ३ ईं इच्छासिद्धि। पं प्राप्तिसिद्धि । सं सर्वकामसिद्धि श्री । इति स्वस्य तत्तदभिमुखं भावयन् पूजयेत् ॥ अथ चतुरश्र मध्यरेखायां प्रागुक्तद्वार वामभागेषु कोणेषु च क्रमेण। ३ आं ब्राह्म्यम्बाश्री। ३ ईं माहेश्वर्यम्बाश्री। ३ ऊं कौमार्यम्बाश्री । ३ ॠं वैष्णव्यम्बाश्री। ३ लूं वाराह्यम्बाश्री। ३ ऐं माहेन्द्र्यम्बाश्री। ३ ओं चामुण्डाम्बाश्री । ३ अः महालक्ष्म्यम्बाश्री। ततश्चतुरश्रान्त्यरेखायाम् । ३ द्रां सर्वसंक्षोभिणीश्री । ३ द्रीं सर्वविद्राविणीश्री । ३ क्लीं सर्वाकर्षिणि । ३ ब्लूं सर्ववशङ्करी । ३ सः सर्वोन्मादिनी । ३ क्रों सर्वमहांकुशा । ह्स्ख्फ्रें सर्वखेचरी । ३ ह्सौः सर्वबीज । ३ ऐं सर्वयोनि । ह्स्रैं ह्स्क्लीं ह्स्रौः सर्वत्रिखण्डा । एताः प्रकटयोगिन्यः त्रैलोक्य मोहनचक्रे समुद्रा ससिद्धय स्सायुधा स्सवाहना स्सपरिवारा स्सर्वोपचारैः स्सम्पूजितास्सन्तु नमः ॥ इति पुष्पाञ्जलिं दत्वा । अणिमासिद्धेः पुरतः अं आं सौः त्रिपुराचक्रेश्वरीश्री । द्रां सर्वसंक्षोभिणीमुद्राश्री । अं अणिमासिद्धिश्री । द्रामिति सर्वसंक्षोभिणीमुद्रां प्रदर्श्य । मूलम् ॥ ललिता महात्रिपुरसुन्दरी अभीष्टसिद्धिं मे देहि शरणागतवत्सले । भक्त्या निवेदितं तुभ्यं प्रथमावरणार्चनम् ॥ इति प्रथमावरणपूजां देव्यै समर्प्य योनिमुद्रया प्रणमेत् ॥

॥ इति प्रथमावरणम् ॥

## — अथ द्वितीयावरणार्चनम् —

ऐं क्लीं सौः सर्वाशापूरक चक्राय नमः। श्वेतवर्णे सकार प्रकृतिक षोडश कलात्मक चन्द्रस्वरूपे स्रवदमृतरसे षोडशदळकमले देव्यग्रदळमारभ्य वामावर्तेन ॥ ३ अं कामाकर्षिणी नित्या कलाम्बाश्री। ३ आं बुध्यकर्षिणी। ३ इं अहङ्काराकर्षिणी। ३ ईं शब्दाकर्षिणी। ३ उं स्पर्शाकर्षिणी। ३ ऊं रूपाकर्षिणी। ३ ऋं रसाकर्षिणी। ३ ॠं गन्धाकर्षिणी। ३ लृं चित्ताकर्षिणी। ॡं धैर्याकर्षिणी। ३ एं स्मृत्याकर्षिणी। ३ऐं नामाकर्षिणी। ३ ओं बीजाकर्षिणी। ३ औं आत्माकर्षिणी। ३ अं अमृताकर्षिणी। ३ अः शरीराकर्षिणी। इत्यभ्यर्च्य। एताः गुप्तयोगिन्यः। सर्वाशापरिपूरके चक्रे समुद्रा इत्यादि प्राग्वत्॥ कमाकर्षिण्याः पुरतः ऐं क्लीं सौः त्रिपुरेशि चक्रेश्वरीश्री ॥ द्रीं सर्व-विद्राविणीश्री। लं लघिमसिद्धिश्री। इत्यवमृश्य द्रीमिति सर्वविद्राविणी मुद्रां प्रदर्श्य ॥ ३ मूलं ललिता .... श्री .... अभीष्टसिद्धिं .... द्वितीया-वरणार्चनं इति द्वितीयावरणपूजां देव्यै समर्प्य योनिमुद्रया प्रणमेत् ॥

॥ इति द्वितीयावरणार्चनम ॥

## — अथ तृतीयावरणार्चनम् —

ह्रीं क्लीं सौः सर्वसंक्षोभणचक्राय नमः। हकार प्रकृतिकाष्टमूर्त्यात्मक शिवाभिन्ने जपाकुसुमभिन्ने अष्टपत्रे देव्याः पृष्ठदळमारभ्य पूर्वादि दिक्षु आग्ने-यादि विदिक्षु च क्रमात्। ३ कं खं गं घं ङं अनङ्गकुसुमाश्री। ३ चं ५ अनङ्गमेखलाश्री। ३ टं ५ अनङ्गमदनाश्री। ३ तं ५ अनङ्गमदातुराश्री। ३ पं ५ अनङ्गरेखाश्री। ३ यं ४ अनङ्गवेगिनीश्री। ३ शं ४ अनङ्गांकुशाश्री। ३ ळं क्षं अनङ्गमालिनीश्री। एताः गुप्ततरयोगिन्यः। सर्वसंक्षोभणचक्रे समुद्रा इत्यादि प्राग्वत्। ३ अनङ्ग कुसुमायाः। अग्रे ३ ह्रीं क्लीं सौः त्रिपुर-सुन्दरी चक्रेश्वरीश्री रिति संभाव्य क्लीं सर्वाकर्षिणीमुद्राश्री। मं महिमा-सिद्धिश्री। क्लीमिति सर्वाकर्षिणी मुद्रान्मुद्रयेत् ॥ ३ ॥ मूलम् ॥ ललिता ....

श्री । अभीष्टसिद्धि .... तृतीयवरणार्चनम् ।। इति तृतीयावरणपूजां देव्यै-समर्प्य योनि मुद्रया प्रणमेत् ।।

।। इति तृतीयावरणार्चनम् ।।

## — अथ तुरीयावरणार्चनम् —

हैं ह्क्लीं ह्सौः सर्वसौभाग्यदायकचक्राय नमः । ईकारप्रकृतिक चतुर्दशभुवनात्मक महामायारूपे दाडिमी प्रसून सहोदरे चतुर्दशारे देव्यग्रकोण मारभ्य वामावर्तेन । ३ कं सर्वसंक्षोभिणी शक्तिश्री । ३ खं सर्वविद्राविणी शक्तिश्री । ३ गं सर्वाकर्षिणी शक्तिश्री । ३ घं सर्वाह्लादिनी शक्तिश्री । ३ सर्वसम्मोहिनी शक्तिश्री । ३ चं सर्वस्तम्भिनी शक्तिश्री । ३ छं सर्वजृंभिणी शक्तिश्री । ३ जं सर्ववशङ्करी शक्तिश्री । ३ झं सर्वरञ्जनी शक्तिश्री । ३ ञं सर्वोन्मादिनी शक्तिश्री । ३ टं सर्वार्थसाधिनी शक्तिश्री । ३ ठं सर्वसम्पत्ति-पूरणी शक्तिश्री । ३ डं सर्वमन्त्रमयी शक्तिश्री । ३ ढं सर्वद्वन्द्वक्षयङ्करी शक्तिश्री । एता सम्प्रदाययोगिन्य सर्वसौभाग्यदायके चक्रे समुद्रेस्सायुधा इत्यादि पूर्ववत् ।। सर्वसंक्षोभिण्याः पुरतः । हैं ह्क्लीं ह्सैः त्रिपुरावासिनी चक्रे-श्वरीश्री ।। ३ ब्लूं सर्ववशङ्करीश्री । ३ ईं ईशित्वसिद्धिश्री । इति सम्मान्य ब्लूमिति सर्ववशङ्करी मुद्रामुन्मीलयेत् । ३ मूलं ललिता .... श्रीपादुकां । अभीष्टसिद्धि चतुर्थावरणार्चनं इति तुरीयावरणपूजां देव्यै समर्प्य योनिमुद्रया प्रणमेत् ।।

।। इति चतुर्थावरणार्चनम् ।।

## — अथ पञ्चमावरणार्चनम् —

ह्सैं ह्स्क्लीं ह्सौः सर्वार्थसाधकचक्राय नमः । ईकारप्रकृतिकदशा-वतारक विष्णुस्वरूपे प्रभा पराभूतसिन्दूरे बहिर्दशारे देव्यग्रकोणाद्य प्रादक्षि-ण्येन । ३ णं सर्वसिद्धिप्रदा देवीश्री । ३ तं सर्वसम्पत्प्रदा देवीश्री । ३ थं

सर्वप्रियङ्करीश्री। ३ दं सर्वमङ्गळकारिणी। ३ धं सर्वकामप्रदाश्री। ३ नं सर्वदुःखविमोचनीश्री। ३ पं सर्वमृत्युप्रशमनीश्री। ३ फं सर्वविघ्ननिवारिणीश्री। ३ बं सर्वाङ्गसुन्दरीश्री। ३ भं सर्वसौभाग्यदायिनीश्री। एताः कुळोत्तीर्ण-योगिन्य स्सर्वार्थसाधके चक्रे समुद्रा इत्यादि पूर्ववत्। सर्वसिद्धिप्रदायाः धुर। ह्सैं ह्स्क्लीं ह्सौः त्रिपुराश्री चक्रेश्वरीश्री। ३ सः सर्वोन्मादिनीश्री। ३ वं वशित्वसिद्धिश्री इति समभ्यर्च्य। सः इति सर्वोन्मादिनी मुद्रामुद्घाठ-येत्। ३ मूलं ललिता। श्री अभीष्टसिद्धि पञ्चमावरणार्चनम्॥ इति पञ्चमावरणपूजां देव्यै समर्प्य योनिमुद्रया प्रणमेत्॥

॥ इति पञ्चमावरणार्चनम्॥

## — अथ षष्ठावरणार्चनम् —

ह्रीं क्लीं ब्लें सर्वरक्षाकरचक्राय नमः। रेफप्रकृतिक दशकलात्मक-वैश्वानराभिन्ने जपासुमनस्सहचरेन्तर्दशारे देव्यग्रकोणमारभ्य वामावर्तेन। ३ मं सर्वज्ञादेवीश्री। ३ यं सर्वशक्तिश्री। ३ रं सर्वैश्वर्यप्रदा श्री। ३ लं सर्व-ज्ञानमयीश्री। ३ वं सर्वव्याधिविनाशनीश्री। ३ शं सर्वाधारस्वरूपाश्री। ३ षं सर्वपापहराश्री। ३ सं सर्वानन्दमयीश्री। ३ हं सर्वरक्षास्वरूपिणीश्री। ३ क्षं सर्वेप्सितफलप्रदाश्री। एताः निगर्भयोगिन्य स्सर्वरक्षाकरे चक्रे समद्रा इत्यातदि। सर्वज्ञायाः पुरत। ह्रीं क्लीं ब्लें त्रिपुरमालिनी चक्रेश्वरीश्री। क्रों सर्व महांकुशमुद्राश्री। पं प्राकाम्यसिद्धिश्री। क्रोमिति सर्वमहांकुश मुद्रामंकूरयेत्। ३ मूलं ललिताश्री .... अभीष्ठसिद्धि षष्ठमावरणार्चनम्॥ इति षष्ठावरणपूजा देव्यै समर्प्य योनिमुद्रया प्रणमेत्॥

॥ इति षष्ठावरणार्चनम्॥

## — अथ सप्तमावरणार्चनम् —

ह्रीं श्रीं सौः सर्वरोगहरचक्राय नमः। ककारप्रकृतिकाष्टमूर्त्यात्मक कामेश्वरस्वरूपे पद्मरागरुचिरे अष्टारे देव्यग्र कोणाद्य प्रादक्षिण्येन अं १६ ळूं

वशिनी वाग्देवताश्री । कं ५ क्लूीं कामेश्वरी वाग्देवताश्री । चं ५ न्ल्वीं मोदिनिवा । टं ५ य्लूं विमलावा । ३ तं ५ ज्म्रीं अरुणावा । पं ५ ह्ल्स्व्र यूं जयिनी वा । यं ४ झ्म्रीं सर्वेश्वरी वा । शं ६ क्ष्म्रीं कौळिनी वा । एताः रहस्ययोगिन्य स्सर्वरोगहरे चक्रे समुद्रा इत्यादि । वशिन्याः पुरतः ह्रीं श्रीं सौः त्रिपुरासिद्धा चक्रेश्वरी श्री । हसरुफ्रें सर्वखेचरीमुद्रा श्री । भुं मुक्तिसिद्धचम्बा श्री । हसरुफ्रें सर्वखेचरी मुद्रां प्रदर्श्य । मूलं ललिता श्री । अभीष्टसिद्धिं .... सप्तमावरणार्चनम् । इति सप्तमावरणपूजां देव्यै समर्प्य योनिमुद्रया प्रणमेत् ॥

॥ इति सप्तमावरणार्चनम् ॥

## — अथ अष्टमावरणार्चनम् —

महात्र्यश्रबाह्यतः पश्चिमादि दिक्षु प्रादक्षिण्येन । ३ द्रां द्रीं क्लीं ब्लूं सः यां रां लां वां सर्वजृंभणेभ्यो कामेश्वर कामेश्वरी बाणेभ्यो नमः । बाणशक्त्यम्बा श्री । धं धं सर्वसम्मोहनाभ्यां कामेश्वर कामेश्वरीधनुर्भ्यां नमः । धनुश्शक्त्यम्बा श्री । ह्रीं ह्रीं सर्ववशीकरणाभ्यां कामेश्वर कामेश्वरीपाशाभ्यां नमः । पाशशक्ति श्री । क्रों क्रों सर्वस्तम्भनाभ्यां कामेश्वर कामेश्वरी अंकुशाभ्यां नमः । अंकुशशक्ति श्री ॥ इत्यायुधार्चनं विधाय ह्स्रैं ह्स्क्ल्रीं ह्स्रौः सर्वसिद्धिप्रद चक्राय नः । नादप्रकृतिकगुणत्रयप्रधानशक्तिरूपरेखात्रयात्मके बन्धूकपुष्प बन्धुकिरणे त्रिकोणे अग्रदक्षवामकोणबिन्दौ च क्रमेण । ३ क ५ अग्निचक्रे कामगिरिपीठे मित्रेश नाथात्मके जाग्रद्दशाधिष्ठायके इच्छाशक्त्यात्मक रुद्रात्म शक्तिश्री महाकामेश्वर्यम्बा श्री ॥ ३ क्लीं ह ६ सूर्यचक्रे जालन्धरपीठे षष्ठीशनाथात्मके स्वप्नदशाधिष्ठायके ज्ञानशक्त्यात्मक विष्ण्वात्मक शक्तिश्री महावज्रेश्वर्यम्बा श्री ॥ ३ सौः स ४ सोमचक्रे पूर्णगिरिपीठे उड्डीशनाथात्मके सुषुप्तिदशाधिष्ठायके क्रियाशक्त्यात्मक ब्रह्मात्मशक्ति श्रीमहाभगमालिन्यम्बा श्री ॥ एताः अतिरहस्ययोगिन्यः सर्वसिद्धिप्रदे चक्रे समुद्रा इत्यादि ॥ कामे-

श्वर्याः पुरतः  ह्स्रैं ह्स्क्लीं ह्स्रौः त्रिपुराम्बा चक्रेश्वरी श्री। ह्सौः सर्वबीजमुद्रा श्री। इं इच्छाशक्त्यम्बा श्री। ह्सौः सर्वबीजमुद्रां प्रदर्श्य। ३ मूलम्। अभीष्टसिद्धिम्। अष्टमावरणार्चनम्। इत्यष्टमावरणपूजां देव्यै समर्प्य योनिमुद्रया प्रणमेत्॥

॥ इति अष्टमावरणार्चनम्॥

## — अथ नवमावरणार्चनम् —

मूलं सर्वानन्दमयचक्राय नमः बिन्द्वभिन्नपरब्रह्मात्मके बिन्दुचक्रे हसकल हसकहल सकलह्रीं। ललिता श्री॥ एताः परापररहस्ययोगिन्यः सर्वानन्दमये चक्रे समुद्रा इत्यादि। महात्रिपुरसुन्दर्याः पुरतः। क ५ ह ६ स ४ महात्रिपुरसुन्दरी चक्रेश्वरी श्री। ऐं सर्वयोनिमुद्रा श्री। पं प्राप्तिसिद्धयम्बा श्री। ऐं सर्वयोनिमुद्रां प्रदर्श्य॥

तुरीयविद्यामुच्चार्य – सर्वानन्दमयचक्रे महोड्याणपीठे चर्यानाथात्मिके तुर्यातीत दशाधिष्ठायके शान्त्यतीतकलात्मिके प्रकाशविमर्शसामरस्यात्मिक परब्रह्मस्वरूपिणी परामृतशक्ति सर्वमन्त्रेश्वरी सर्वपीठेश्वरी सर्वयोगीश्वरी सर्ववागीश्वरी सर्वसिद्धेश्वरी सर्ववीरेश्वरी सकलजगदुत्पत्तिमातृका ससचक्रा ससदेवतास्सासनास्सायुधास्सवाहनास्सपरिवारास्सचक्रेशिकापरया अपरया परापरया सपर्यया सर्वोपचारैः सम्पूजिता स्सन्तर्पिता स्सन्तुष्टास्सन्तु नमः॥ ह्स्रैं ह्स्क्लीं ह्स्रौः सर्वत्रिखण्डामुद्रां प्रदर्श्य। ३ मूलम्॥ अभीष्टसिद्धिं मे देहि प्रसीद मम सर्वदा भक्त्या निवेदितं तुभ्यम्॥

॥ नवमावरणार्चनम्। इति बिन्दौ बिन्दुना समर्प्य॥

## — अथ पञ्चपञ्चका पूजाविधिः —

बैन्दवे परमेशानीं मध्ये सिंहासनं यजेत्। अनेनैव प्रकारेण पूजये त्पञ्च पञ्चकान्॥ तदुक्तम्॥ श्रीविद्या च महालक्ष्मीर्महालक्ष्मी तथैव च।

त्रिशक्ति स्सर्वसाम्राज्यलक्ष्मी पञ्च प्रकीर्तिताः ॥ यथा ॥ बिन्दुचक्रे सिंहासवाकारेण । मध्ये वायव्येशानाग्नेय नैरृतेषु ॥

मूलमुच्चार्य – श्रीमहालक्ष्मीश्वरीबृन्दमण्डितासनसंस्थिता सर्वसौभाग्य-जननी श्रीमहात्रिपुरसुन्दरी श्रीविद्यालक्ष्म्यम्बा श्री ॥ १ ॥ इति मध्ये सम्पूज्य ॥ वायव्यकोणे – श्रीमहालक्ष्मीश्वरीबृन्द .... जननी श्रीमहात्रिपुरपुन्दरी महालक्ष्मी लक्ष्म्यम्बा श्री ॥ २ ॥ ईशाने – ओं श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद प्रसीद श्रीं ह्रीं श्रीं ओं महालक्ष्म्यै नमः। महालक्ष्मीश्वरीबृन्द....जननी श्री महात्रिपुर-सुन्दरी लक्ष्मी लक्ष्म्यम्बा श्री ॥ ३ ॥ आग्नेये–श्रीं ह्रीं क्लीं महालक्ष्मीश्वरी-बृन्द....जननी श्रीमहात्रिपुरसुन्दरी त्रिशक्ति लक्ष्म्यम्बा श्री ॥ ४ ॥ नैरृते–श्रीं हसकलह्रीं श्रीं श्रीं महालक्ष्मीश्वरी .... जनबी श्रीमहात्रिपुरसुन्दरी साम्राज्य-लक्ष्म्यम्बा श्री ॥ ५ ॥ अथ पञ्चकोशाम्बाः....ततः पुनर्मध्ये ॥ पञ्चकोशेश्वरीः पूजयेत् । श्री विद्या च परंज्योतिः परा निष्कलशाम्भवी। अजपा मातृका चेति पञ्चकोशाः प्रकीर्तिताः ॥ ३ मूलमुच्चार्य ॥ महाकोशेश्वरीबृन्द .... जननी श्री महात्रिपुरसुन्दरी श्री विद्याकोशाम्बा श्री ॥ १ ॥ वायव्यकोणे–ओं ह्रीं हंसस्सोहं स्वाहा । महाकोशेश्वरीबृन्द .... जननी श्री महात्रिपुरसुन्दरी परञ्ज्योतिः कोशाम्बा श्री ॥ २ ॥ ईशाने – ओं हंसः महाकोशेश्वरीबृन्द .... जननी महात्रिपुर-सुन्दरी परा निष्कळा कोशाम्बा श्री ॥ ३ ॥ आग्नेये – हंसः महाकोशेश्वरी ... जननी महात्रिपुरसुन्दरी अजपाकोशाम्बा श्री ॥ ४ ॥ नैरृते – अं आं क्षं महाकोशेश्वरीबृन्द .... सुन्दरी मातृका कोशाम्बा श्री ॥ ५ ॥

— अथ पञ्चकल्पलताः —

श्रीविद्या त्वरिताचैव पारिजातेश्वरी तथा । त्रिपुटा पञ्चबाणेशी पञ्चकल्पलतास्मृताः ॥ मूलमुच्चार्य ॥ मध्ये - महाकल्पलतेश्वरीबृन्द .... सुन्दरी श्रीविद्याकल्पलताम्बा श्री । वायव्यकोणे - ह्रीं क्लीं ऐं ब्लूं स्त्रीं महाकल्पलतेश्वरीबृन्द .... सुन्दरी पञ्चकामेश्वरीसैव त्वरिता कल्पलता श्री ।

ईशाने - ओं ह्रीं ह्रां हसकलह्रीं ओं सरस्वत्यै नमः। महाकल्पलतेश्वरीबृन्द.... सुन्दरी पारिजातेश्वरी कल्पलताम्बा श्री। आग्नेये - श्रीं ह्रीं क्लीं ऐं क्लीं सौः। महाकल्पलतेश्वरी .... सुन्दरी कुमारीसैव त्रिपुटा कल्पलताम्बा श्री। नैऋते - द्रां द्रीं क्लीं ब्लूं सः। महाकल्पलतेश्वरीबृन्द .... सुन्दरी पञ्चबाणेश्वरी कल्पलताम्बा श्री। इति सम्पूज्य ॥

## — अथ पञ्चकामदुघाः —

श्रीविद्याऽमृतपीठा च सुधासू रमृतेश्वरी। अन्नपूर्णेति विख्याताः पञ्चका मधुघास्मृताः। तत्र मध्ये - मूलमुच्चार्य। महाकामधुघेश्वरीबृन्द .... सुन्दरी श्रीविद्याकामदुघाम्बा श्री। वायव्ये – ओं ह्रीं जुं हंसः सञ्जीवनजीवं प्राणग्रन्थिस्थं कुरु कुरु स्वाहा। महाकामदुघेश्वरीबृन्द .... सुन्दरी अमृतपीठेश्वरी कामदुघाम्बा श्री। ईशाने – ऐं वद वद वाग्वादिनी ह्स्रैं क्लिन्ने क्लेदिनि महाक्षोभं कुरु कुरु क्लीं स्रौं ह्स्क्लीं ओं मोक्षं कुरु कुरु ह्स्रौं महाकामदुघेश्वरीबृन्द .... सुन्दरी सुधासूः कामदुघाम्बा श्री। आग्नेये – ऐं प्लूं झ्रौं जुंसः अमृते अमृतोद्भवे अमृतेश्वरि अमृतवर्षिणि अमृतं स्रावय स्रावय स्वाहा। महाकाम .... सुन्दरी अमृतेश्वरी कामदुघाम्बा श्री। नैऋते – ओं ह्रीं श्रीं क्लीं नमो भगवति माहेश्वरि अन्नपूर्णे स्वाहा। महाकामदुघेश्वरी .... सुन्दरी अन्नपूर्णा कामदुघाम्बा श्री। इति सम्पूज्य ॥

## — अथ पञ्चरत्नपूजाविधिः —

श्रीविद्या सिद्धलक्ष्मीश्च मातङ्गी भुवनेश्वरी। वाराहीति च विख्याताः पञ्चरत्नतया स्मृताः। तत्र मध्ये – मूलदेवीं ध्यात्वा ॥ मूलमुच्चार्य। महारत्नेश्वरीबृन्द .... सुन्दरी श्रीविद्यारत्नाम्बा श्री। वायव्ये – ज्म्रीं महाचण्डे तेजस्संकर्षिणी काळी मन्थने ....हः महारत्नेश्वरी .... सुन्दरी सिद्धलक्ष्मी रत्नाम्बा श्री। ईशाने – ऐं क्लीं ह्स्रौः ऐं ह्रीं श्रीं ओं नमो भगवति राज-

मातङ्गेश्वरि सर्वजनमनोहारि सर्वमुखरञ्जनी क्लीं ह्रीं श्रीं सर्वराजवशङ्करि सर्वस्त्रीपुरुषवशङ्करि सर्वदुष्टमृगवशङ्करि सर्वसत्ववशङ्करि सर्वलोकवशङ्करि त्रैलोक्यम्मे वशमानय स्वाहा ॥ श्रीं ह्रीं ऐं सौः क्लीं ऐं महारत्नेश्वरीबृन्द .... सुन्दरी राजमातङ्गेश्वरीरत्नाम्बा श्री। आग्नेये – श्रीं ह्रीं श्रीं महारत्नेश्वरीबृन्द .... सुन्दरी भुवनेश्वरीरत्नाम्बा श्री। नैरृते – ऐं ग्लौं ऐं ओन्नमो भगवति वार्तालि २ वाराहि २ वाराहमुखि २ अन्धे अन्धिन्यै नमः रुन्धे रुन्धिन्यै नमः जम्भे जम्भिन्यै नमः मोहे मोहिन्यै नमः स्तम्भे स्तम्भिन्यै नमः अमुकं स्तंभय २ सर्वदुष्टप्रदुष्टानां सर्वेषां सर्ववाक्चित्तचक्षुर्मुखगतिजिह्वा-स्तम्भं कुरु २ शीघ्रं वश्यं कुरु कुरु ऐं ग्लौं ऐं ठः ठः ठः ठः हुं फट् स्वाहा। महारत्नेश्वरीबृन्द = सुन्दरी वाराहि रत्नांबा श्री पा ॥

## — अथ षड्दर्शनविद्या —

ऐं ह्रीं श्रीं तारेतुत्तारेतुरे स्वाहा। तारदेवताधिष्ठित बौद्धदर्शन श्री ३ गायत्री = परोपरजसि सावदों ब्रह्मदेवताधिष्ठित वैदिकदर्शन श्री ॥ ओं ह्रीं नमश्शिवाय। रुद्रदेवताधिष्ठित शैवदर्शन श्री॥ ओं ह्रीं घृणि स्सूर्य आदित्यों सूर्यदेवताधिष्ठित सौरदर्शन श्री। ओन्नमो नारायणाय बिष्णुदेवताधिष्ठित वैष्णवदर्शन श्री। ओं श्रीं ह्रीं श्रीं भुवनेश्वरीदेवताधिष्ठित शाक्तदर्शन श्री। ऐं ह्रीं श्रीं ऐं क्लीं सौः ह्स्रैं ह्स्क्ल्रीं ह्स्रौः पूर्वाम्नाय समयविद्येश्वरी उन्मोदिनीदेवि श्री ॥ ३ आं ह्रीं ऐं क्लिन्ने क्लिन्नमदद्रवे कुले ह्सौः दक्षिणाम्नाय समयविद्येश्वरी भोगिनीदेवी श्री ॥ ह्स्रैं ह्स्रीं ह्स्रौं ह्स्ख्फ्रें भगवत्यंबा हसक्षमलवरयूं ह्स्ख्फ्रें अघोरमुखि छ्रां छ्रीं किणिकिणि विच्चे ह्सौः ह्स्ख्फ्रें ह्स्रौं पश्चिमाम्नाय समयविद्येश्वरी कुब्जिकादेव्यम्बा श्री ॥ ४ ह्स्ख्फ्रें महाचण्डयोगीश्वरी कालिके फट्। उत्तराम्नाय समयविद्येश्वरी कालिका-देव्यम्बा श्री ॥ मुखपरयघच् महिचतडयङ् गंशफर् श्री ऊर्ध्वाम्नाय समय विद्येश्वरी श्री ॥

## — दण्डनाथादि नामानि —

ॐ पञ्चम्यै नमः १
,, दण्डनाथायै नमः २
,, संकेतायै नमः ३
,, समयेश्वर्यै नमः ४
,, समयसंकेतायै नमः ५
,, वाराह्यै नमः ६
,, पोत्रिण्यै नमः ७
,, वार्ताळ्यै नमः ८
,, महासेनायै नमः ९
,, आज्ञायै नमः १०
,, चक्रेश्वर्यै नमः ११
,, अरिघ्न्यै नमः १२

इति दण्डनाथनामानि ।

ॐ संगीतयोगिन्यै नमः १
,, श्यामायै नमः २
,, श्यामलायै नमः ३
,, मन्त्रनायिकायै नमः ४
,, मन्त्रिण्यै नमः ५
,, सचिवेशान्यै नमः ६
,, प्रधानेश्यै नमः ७
,, शुकप्रियायै नमः ८
,, वीणावत्यै नमः ९
ॐ वैणिक्यै नमः १०
,, मुद्रिण्यै नमः ११
,, प्रियकप्रियायै नमः १२
,, नीपप्रियायै नमः १३
,, कदम्बेश्यै नमः १४
,, कदम्बवनवासिन्यै नमः १५
,, सदामदायै नमः १६

इति मन्त्रिणीनामानि ।

ॐ सिंहासनेश्यै नमः १
,, ललितायै नमः २
,, महाराज्ञ्यै नमः ३
,, वरांकुशायै नमः ४
,, चापिन्यै नमः ५
,, त्रिपुरायै नमः ६
,, महात्रिपुरसुन्दर्यै नमः ७
,, सुन्दरीचक्रनाथायै नमः ८
,, सम्राज्ञ्यै नमः ९
,, चक्रिण्यै नमः १०
,, चक्रेश्वर्यै नमः ११
,, महादेव्यै नमः १२
,, कामेश्यै नमः १३
,, परमेश्वर्यै नमः १४

ॐ कामराजप्रियायै नमः १५
,, कामकोटिकायै नमः १६
,, चक्रवर्तिन्यै नमः १७
,, महाविद्यायै नमः १८
,, शिवायै नमः १९
,, अनङ्गवल्लभायै नमः २०
ॐ सर्वपाटलायै नमः २१
,, कुळनाथायै नमः २२
,, आम्नायनाथायै नमः २३
,, सर्वाम्नायनिवासिन्यै नमः २४
,, शृङ्गारनायक्यै नमः २५

इति ललितानामानि ।

॥ श्रीरस्तु ॥

## ॥ श्रीललितासहस्रनामावलिप्रारम्भः ॥

ॐ ४ श्रीमात्रे नमः
,, महाराज्ञै नमः
,, श्रीमत्सिंहासनेश्वर्यै नमः
,, चिदग्निकुण्डसंभूतायै नमः
,, देवकार्यसमुद्यतायै नमः
,, उद्यद्भानुसहस्राभायै नमः
,, चतुर्बाहुसमन्वितायै नमः
,, रागस्वरूपपाशाढ्यायै नमः
,, क्रोधाकारांकुशोज्वलायै नमः
,, मनोरूपेक्षुकोदण्डायै नमः १०
,, पञ्चतन्मात्रसायकायै नमः
,, निजारुणप्रभापूरमज्जद्ब्रह्माण्ड-मण्डलायै नमः
ॐ ४ चम्पकाशोकपुन्नागसौगन्धिकलसत्कचायै नमः
,, कुरुविंदमणिश्रेणीकनत्कोटीरमण्डितायै नमः
,, अष्टमीचन्द्रविभ्राजदळिकस्थल-शोभितायै नमः
,, मुखचन्द्रकळंकामृगनाभिविशेषकायै नमः
,, वदनस्मरमांगल्यगृहतोरणचिल्लिकायै
,, वक्त्रलक्ष्मीपरीवाहचलन्मीनाभ-लोचनायै नमः
,, नवचम्पकपुष्पाभनासादण्डविरा-जितायै नमः

ॐ ४ ताराकान्तितिरस्कारिनासाभरणभासुरायै नमः २०
,, कदम्बमञ्जरीक्लुप्तकर्णपूरमनोहरायै नमः
,, ताटङ्कयुगळीभूततपनोडुपमण्डलायै नमः
,, पद्मरागशिलादर्शपरिभाविकपोलभुवे नमः
,, नवविद्रुमबिंबश्रीन्यक्कारिदशनच्छदायै नमः
,, शुद्धविद्यांकुराकारद्विजपंक्तिद्वयोज्वलायै ममः
,, कर्पूरवीटिकासमाकर्षदिग्दन्तरायै
,, निजसल्लापमाधुर्यविनिर्भर्त्सितकच्छप्यै नमः
,, मन्दस्मितप्रभापूरमज्जत्कामेशमानसायै नमः
,, अनाकलितसादृश्यचुबुकश्रीविराजितायै नमः
,, कामेशबद्धमांगल्यसूत्रशोभितकन्धरायै नमः ३०
,, कनकांगदकेयूरकमनीयभुजान्वितायै नमः
,, रत्नग्रैवेयचिन्ताकलोलमुक्ताफलान्वितायै नमः
,, कामेश्वरप्रमरत्नमणिप्रतिपणस्तन्यै नमः

ॐ ४ नाभ्यालवालरोमाळिलताफलकुचद्वयै नमः
,, लक्ष्यरोमलताधारतासमुन्नेयमध्यमायै नमः
,, स्तनभारदळन्मध्यपट्टबन्धवळित्रयायै नमः
,, अरुणारुणकौसुंभवस्त्रभास्वत्कटीतटयै नमः
,, रत्नकिङ्किणिकारम्यरशनादामभूषितायै नमः
,, कामेशज्ञातसौभाग्यमार्दवोरुद्वयान्वितायै नमः
,, माणिक्यमकुटाकारजानुद्वयविराजितायै नमः ४०
,, इन्द्रगोपपरिक्षिप्तस्मरतूणाभजंघिकायै नमः
,, गूढगुल्फायै नमः
,, कूर्मपृष्टजयिष्णुप्रपदान्वितायै नम
,, नखदीधितिसंछन्ननमज्जनतमोगुणायै नमः
,, पदद्वयप्रभाजालपराकृतसरोरुहायै नमः
,, शिंजानमणिमञ्जीरमण्डितश्रीपदांबुजायै नमः
,, मराळीमन्दगमनायै नमः
,, महालावण्यशेवधये नमः
,, सर्वारुणायै नमः

ॐ ४ अनवद्याङ्ग्यै नमः ५०
,, सर्वाभरणभूषितायै नमः
,, शिवकामेश्वराङ्कस्थायै नमः
,, शिवायै नमः
,, स्वाधीनवल्लभायै नमः
,, सुमेरुमध्यश्रृङ्गस्थायै नमः
,, श्रीमन्नगरनायिकायै नमः
,, चिन्तामणिगृहान्तस्थायै नमः
,, पञ्चब्रह्मासनस्थितायै नमः
,, महापद्माटवीसंस्थायै नमः
,, कदंबवनवासिन्यै नमः ६०
,, सुधासागरमध्यस्थायै नमः
,, कामाक्ष्यै नमः
,, कामदायिन्यै नमः
,, देवर्षिगणसङ्घातस्तूयमानात्म-
वैभवायै नमः
,, भण्डासुरवधोद्युक्तशक्तिसेना-
समन्वितायै नमः
,, संपत्करीसमारूढ सिन्धुर
व्रजसेवितायै नमः
,, अश्वारूढाधिष्टिताश्वकोटि
कोटिभिरावृतायै नमः
,, चक्रराजरथारूढ सर्वायुध-
परिष्कृतायै नमः
,, गेयचक्ररथारूढमन्त्रिणी-
परिसेवितायै नमः

ॐ ४ किरिचक्ररथारूढ दण्डनाथा-
पुरस्कृतायै नमः ७०
,, ज्वालामालिनिकाक्षिप्त वह्नि-
प्राकारमध्यगायै नमः
,, भण्डसैन्यवधोद्युक्त शक्तिविक्रम-
हर्षितायै नमः
,, नित्यापराक्रमाटोपनिरीक्षण-
समुत्सुकायै नमः
,, भण्डपुत्रवधोद्युक्तबालाविक्रम-
नन्दितायै नमः
,, मन्त्रिण्यंबाविरचितविषङ्ग-
वधतोषितायै नमः
,, विशुक्रप्राणहरणवाराहीवीर्य-
नन्दितायै नमः
,, कामेश्वरमुखालोककल्पित
श्रीगणेश्वरायै नमः
,, महागणेशनिर्भिन्न विघ्नयन्त्र-
प्रहर्षितायै नमः
,, भण्डासुरेन्द्रनिर्मुक्त शस्त्रप्रत्यस्त्र-
वर्षिण्यै नमः
,, करांगुळिनखोत्पन्न नारायण-
दशाकृत्यै नमः ८०
,, महापाशुपतास्त्राग्नि निर्दग्धासुर-
सैनिकायै नमः
,, कामेश्वराग्निनिर्दग्ध सभण्डा-
सुरशून्यकायै नमः

ॐ ४ ब्रह्मोपेन्द्रमहेन्द्रादि देवसंस्तुत-
वनौभवायै नमः
,, हरनेत्राग्निसंदग्ध कामसञ्जी-
वनौषधये नमः
,, श्रीमद्वाग्भवकूटैकस्वरूप मुख-
पङ्कजायै नमः
,, कण्ठाधः कटिपर्यन्त मध्यकूट-
स्वरूपिण्यै नमः
,, शक्तिकूटैकतापन्न कटयधोभाग-
धारिण्यै नमः
,, मूलमन्त्रात्मिकायै नमः
,, मूलकूटत्रय कळेबरायै नमः
,, कुळामृतैकरसिकायै नमः ९०
,, कुळसङ्केतपाळिन्यै नमः
,, कुळाङ्गनायै नमः
,, कुळान्तस्थायै नमः
,, कौळीन्यै नमः
,, कुळयोगिन्यै नमः
,, अकुळायै नमः
,, समयान्तस्थायै नमः
,, समयाचारतत्परायै नमः
,, मूलाधारैकनिलयायै नमः
,, ब्रह्मग्रन्धिविभेदिन्यै नमः १००
,, मणिपूरान्तरुदितायै नमः
,, विष्णुग्रन्धिविभेदिन्यै नमः
,, आज्ञाचक्रान्तराळस्थायै नमः

ॐ ४ रुद्रग्रन्धिविभेदिन्यै नमः
,, सहस्रारांबुजारूढायै नमः
,, सुधासाराभिवर्षिण्यै नमः
,, तटिल्लतासमरुच्यै नमः
,, षट्चक्रोपरिसंस्थितायै नमः
,, महासक्त्यै नमः
,, कुण्डलिन्यै नमः ११०
,, बिसन्तुतनीयस्यै नमः
,, भवान्यै नमः
,, भावनागम्यायै नमः
,, भवारण्य कुठारिकायै नमः
,, भद्रप्रियायै नमः
,, भद्रमूर्तये नमः
,, भक्तसौभाग्यदायिन्यै नमः
,, भक्तप्रियायै नमः
,, भक्तिगम्यायै नमः
,, भक्तिवश्यायै नमः १२०
,, भयापहायै नमः
,, शांभव्यै नमः
,, शारदाराध्यायै नमः
,, शर्वाण्यै नमः
,, शर्मदायिन्यै नमः
,, शाङ्कर्यै नमः
,, श्रीकर्यै नमः
,, साध्वै नमः
,, शरच्चन्द्रनिभाननायै नमः

ॐ ४ शातोदर्यै नमः १३०
,, शान्तिमत्यै नमः
,, निराधारायै नमः
,, निरञ्जनायै नमः
,, निर्लेपनायै नमः
,, निर्मलायै नमः
,, नित्यायै नमः
,, निराकारायै नमः
,, निराकुलायै नमः
,, निर्गुणायै नमः
,, निष्कळायै नमः १४०
,, शान्तायै नमः
,, निष्कामायै नमः
,, निरुपप्लवायै नमः
,, नित्यमुक्तायै नमः
,, निर्विकारायै नमः
,, निष्प्रपञ्चायै नमः
,, निराश्रयायै नमः
,, नित्यशुद्धायै नमः
,, नित्यबुद्धायै नमः
,, निरवद्यायै नमः १५०
,, निरन्तरायै नमः
,, निष्कारणायै नमः
,, निष्कळङ्कायै नमः
,, निरुपाधये नमः
,, निरीश्वरायै नमः

ॐ ४ नीरागायै नमः
,, रागमथनायै नमः
,, निर्मदायै नमः
,, मदनाशिन्यै नमः
,, निश्चिन्तायै नमः १६०
,, निरहङ्कारायै नमः
,, निर्मोहायै नमः
,, मोहनाशिन्यै नमः
,, निर्ममायै नमः
,, ममताहन्त्र्यै नमः
,, निष्पापायै नमः
,, पापनाशिन्यै नमः
,, निष्क्रोधायै नमः
,, क्रोधशमन्यै नमः
,, निर्लोभायै नमः १७०
,, लोभनाशिन्यै नमः
,, निस्संशयायै नमः
,, संशयघ्न्यै नमः
,, निर्भवायै नमः
,, भवनाशिन्यै नमः
,, निर्विकल्पायै नमः
,, निराबाधायै नमः
,, निर्भेदायै नमः
,, भेदनाशिन्यै नमः
,, निर्नाशायै नमः १८०
,, मृत्युमथन्यै नमः
,, निष्क्रियायै नमः

ॐ ४ निष्परिग्रहायै नमः
,, निस्तुलायै नमः
,, नीलचिकुरायै नमः
,, निरपायायै नमः
,, निरत्ययायै नमः
,, दुर्लभायै नमः
,, दुर्गमायै नमः
,, दुर्गायै नमः १९०
,, दुःखहन्त्र्यै नमः
,, सुखप्रदायै नमः
,, दुष्टदूरायै नमः
,, दुराचारशमन्यै नमः
,, दोषवर्जितायै नमः
,, सर्वज्ञायै नमः
,, सान्द्रकरुणायै नमः
,, समानाधिकवर्जितायै नमः
,, सर्वशक्तिमयै नमः
,, सर्वमङ्गळायै नमः २००
,, सद्गतिप्रदायै नमः
,, सर्वेश्वर्यै नमः
,, सर्वमयै नमः
,, सर्वमन्त्रस्वरूपिण्यै नमः
,, सर्वयन्त्रात्मिकायै नमः
,, सर्वतन्त्ररूपायै नमः
,, मनोन्मन्यै नमः
,, महेश्वर्यै नमः

ॐ ४ महादेव्यै नमः
,, महालक्ष्म्यै नमः २१०
,, मृडप्रियायै नमः
,, महारूपायै नमः
,, महापूज्यायै नमः
,, महापातकनाशिन्यै नमः
,, महामायायै नमः
,, महासत्वायै नमः
,, महाशक्त्यै नमः
,, महारत्यै नमः
,, महाभोगायै नमः
,, महैश्वरायै नमः २२०
,, महावीर्यायै नमः
,, महाबलायै नमः
,, महाबुद्ध्यै नमः
,, महासिद्ध्यै नमः
,, महायोगीश्वरेश्वर्यै नमः
,, महातन्त्रायै नमः
,, महामन्त्रायै नमः
,, महायन्त्रायै नमः
,, महासनायै नमः
,, महायागक्रमाराध्यायै नमः २३०
,, महाभैरवपूजितायै नमः
,, महेश्वरमहाकल्प महाताण्डव-
साक्षिण्यै नमः
,, महाकामेशमहिष्यै नमः

ॐ ४ महात्रिपुरसुन्दर्यै नमः
,, चतुष्षष्टच्युपचाराढ्यायै नमः
,, चतुष्षष्टिकळामय्यै नमः
,, महाचतुष्षष्टिकोटियोगिनीगण-
सेवितायै नमः
,, मनुविद्यायै नमः
,, चन्द्रविद्यायै नमः
,, चन्द्रमण्डलमध्यगायै नमः २४०
,, चारुरूपायै नमः
,, चारुहासायै नमः
,, चारुचन्द्रकळाधरायै नमः
,, चराचरजगन्नाथायै नमः
,, चक्रराजनिकेतनायै नमः
,, पार्वत्यै नमः
,, पद्मनयनायै नमः
,, पद्मरागसमप्रभायै नमः
,, पञ्चप्रेतासनासीनायै नमः
,, पञ्चब्रह्मस्वरूपिण्यै नमः २५०
,, चिन्मय्यै नमः
,, परमानन्दायै नमः
,, विज्ञानघनरूपिण्यै नमः
,, ध्यानध्यातृध्येयरूपायै नमः
,, धर्माधर्मविवर्जितायै नमः
,, विश्वरूपायै नमः
,, जागरिण्यै नमः
,, स्वपन्त्यै नमः

ॐ ४ तैजसात्मिकायै नमः
,, सुप्तायै नमः २६०
,, प्राज्ञात्मिकायै नमः
,, तुर्यायै नमः
,, सर्वावस्थाविवर्जितायै नमः
,, सृष्टिकर्त्र्यै नमः
,, ब्रह्मरूपायै नमः
,, गोप्त्र्यै नमः
,, गोविन्दरूपिण्यै नमः
,, संहारिण्यै नमः
,, रुद्ररूपायै नमः
,, तिरोधानकर्त्र्यै नमः २७०
,, ईश्वर्यै नमः
,, सदाशिवायै नमः
,, अनुग्रहदायै नमः
,, पञ्चकृत्यपरायणायै नमः
,, भानुमण्डलमध्यस्थायै नमः
,, भैरव्यै नमः
,, भगमालिन्यै नमः
,, पद्मासनायै नमः
,, भगवत्यै नमः
,, पद्मनाभसहोदर्यै २८०
,, उन्मेषनिमिषोत्पन्नभुवनावळ्यै
नमः
,, सहस्रशीर्षवदनायै नमः
,, सहस्राक्ष्यै नमः

ॐ ४ सहस्रपदे नमः
,, आब्रह्मकीटजनन्यै नमः
,, वर्णाश्रमविधायिन्यै नमः
,, निजाज्ञारूपनिगमायै नमः
,, पुण्यापुण्यफलप्रदायै नमः
,, श्रुतिसीमन्तसिन्दूरीकृत पादाब्ज-
धूळिकायै नमः
,, सकलागमसन्दोहशुक्तिसंपुट-
मौक्तिकायै नमः १९०
,, पुरुषार्थप्रदायै नमः
,, पूर्णायै नमः
,, भोगिन्यै नमः
,, भुवनेश्वर्यै नमः
,, अम्बिकायै नमः
,, अनादिनिधनायै नमः
,, हरिब्रह्मेन्द्रसेवितायै नमः
,, नारायण्यै नमः
,, नादरूपायै नमः
,, नामरूपविवर्जितायै नमः ३००
,, ह्रींकार्यै नमः
,, ह्रीमत्यै नमः
,, हृद्यायै नमः
,, हेयोपादेयवर्जितायै नमः
,, राजराजार्चितायै नमः
,, राज्ञ्यै नमः
,, रम्यायै नमः

ॐ ४ राजीवलोचनायै नमः
,, रञ्जन्यै नमः
,, रमण्यै नमः ३१०
,, रस्यायै नमः
,, रणत्किङ्किणीमेखलायै नमः
,, रमायै नमः
,, राकेन्दुवदनायै नमः
,, रतिरूपायै नमः
,, रतिप्रियायै नमः
,, रक्षाकर्यै नमः
,, राक्षसघ्न्यै नमः
,, रामायै नमः
,, रमणलम्पटायै नमः ३२०
,, काम्यायै नमः
,, कामकळारूपायै नमः
,, कदम्बकुसुमप्रियायै नमः
,, कल्याण्यै नमः
,, जगतीकन्दयै नमः
,, करुणारससागरायै नमः
,, कलावत्यै नमः
,, कलालापायै नमः
,, कान्तायै नमः
,, कादम्बरीप्रियायै नमः ३३०
,, वरदायै नमः
,, वामनयनायै नमः
,, वारुणीमदविह्वलायै नमः

ॐ ४ विश्वाधिकायै नमः
,, वेदवेद्यायै नमः
,, विंध्याचलनिवासिन्यै नमः
,, विद्यात्र्यै नमः
,, वेदजनन्यै नमः
,, विष्णुमायायै नमः
,, विलासिन्यै नमः ३४०
,, क्षेत्रस्वरूपायै नमः
,, क्षेत्रेश्यै नमः
,, क्षेत्रक्षेत्रज्ञपालिन्यै नमः
,, क्षयवृद्धिनिर्मुक्तायै नमः
,, क्षेत्रपालसमर्चितायै नमः
,, विजयायै नमः
,, विमलायै नमः
,, वंद्यायै नमः
,, वंदारुजनवत्सलायै नमः
,, वाग्वादिन्यै नमः ३५०
,, वामकेश्यै नमः
,, वह्निमण्डलवासिन्यै नमः
,, भक्तिमत्कल्पलतिका यैनमः
,, पशुपाशविमोचिन्यै नमः
,, संहृताशेषपाषण्डायै नमः
,, सदाचारप्रवर्तिकायै नमः
,, तापत्रयाग्निसंतप्तमाह्लाद-चन्द्रिकायै नमः
,, तरुण्यै नमः

ॐ ४ तापसाराध्यायै नमः
,, तनुमध्यायै नमः ३६०
,, तमोपहायै नमः
,, चित्यै नमः
,, तत्पदलक्ष्यार्थायै नमः
,, चिदेकरसरूपिण्यै नमः
,, स्वात्मानन्दलवीभूतब्रह्माद्यानन्द-संतत्यै नमः
,, परायै नमः
,, प्रत्यक्चितीरूपायै नमः
,, पश्यन्त्यै नमः
,, परदेवतायै नमः
,, मध्यमायै नमः ३७०
,, वैखरीरूपायै नमः
,, भक्तमानसहंसिकायै नमः
,, कामेश्वरप्राणनाड्यै नमः
,, कृतज्ञायै नमः
,, कामपूजितायै नमः
,, शृङ्गाररससंपूर्णायै नमः
,, जयायै नमः
,, जालन्धरस्थितायै नमः
,, ओड्याणपीठनिलयायै नमः
,, बिन्दुमण्डलवासिन्यै नमः ३८०
,, रहोयागक्रमाराध्यायै नमः
,, रहस्तर्पणतर्पितायै नमः
,, सद्यःप्रसादिन्यै नमः

ॐ ४ विश्वसाक्षिण्यै नम:
,, साक्षिवर्जितायै नम:
,, षडङ्गदेवतायुक्तायै नम:
,, षाड्गुण्यपरिपूरितायै नम:
,, नित्यक्लिन्नायै नम:
,, निरुपायै नम:
,, निर्वाणसुखदायिन्यै नम: ३९०
,, नित्याषोडशिकारूपायै नम:
,, श्रीकण्ठार्धशरीरिण्यै नम:
,, प्रभावत्यै नम:
,, प्रभारूपायै नम:
,, प्रसिद्धायै नम:
,, परमेश्वर्यै नम:
,, मूलप्रकृत्यै नम:
,, अव्यक्तायै नम:
,, व्यक्ताव्यक्तस्वरूपिण्यै नम: ४००
,, व्यापिन्यै नम:
,, विविधाकारायै नम:
,, विद्याविद्यास्वरूपिण्यै नम:
,, महाकामेशनयनकुमुदाह्लाद-कौमुद्यै नम:
,, भक्तहार्दतमोभेदभानुमद्भानु-संतत्यै नम:
,, शिवदूत्यै नम:
,, शिवाराध्यायै नम:
,, शिवमूर्त्यै नम:

ॐ ४ शिवङ्कर्यै नम:
,, शिवप्रियायै नम:
,, शिवपरायै नम: ४१०
,, शिष्टेष्टायै नम:
,, शिष्टपूजितायै नम:
,, अप्रमेयायै नम:
,, स्वप्रकाशायै नम:
,, मनोवाचामगोचरायै नम:
,, चिच्छक्त्यै नम:
,, चेतनारूपायै नम:
,, जडशक्त्यै नम:
,, जडात्मिकायै नम:
,, गायत्र्यै नम: ४२०
,, व्याहृत्यै नम:
,, सन्ध्यायै नम:
,, द्विजवृन्दनिषेवितायै नम:
,, तत्वासनायै नम:
,, तस्मै नम:
,, तुभ्यम् नम:
,, अय्यै नम:
,, पञ्चकोशान्तरस्थितायै नम:
,, निस्सीममहिम्ने नम:
,, नित्ययौवनायै नम: ४३०
,, मदशालिन्यै नम:
,, मदघूर्णितरक्ताक्ष्यै नम:
,, मदपाटलगण्डभुवे नम:

ॐ ४ चन्दनद्रवदिग्धांग्यै नमः
,, चांपेयकुसुमप्रियायै नमः
,, कुशलायै नमः
,, कोमलकारायै नमः
,, कुरुकुळ्ळायै नमः
,, कुळेश्वर्यै नमः
,, कुळकुण्डालयायै नमः ४४०
,, कौळमार्गतत्परसेवितायै नमः
,, कुमारगणनाथांबायै नमः
,, तुष्ट्यै नमः
,, पुष्टयै नमः
,, मत्यै नमः
,, धृत्यै नमः
,, शान्त्यै नमः
,, स्वस्तिमत्यै नमः
,, कान्त्यै नमः
,, नन्दिन्यै नमः ४५०
,, विघ्ननाशिन्यै नमः
,, तेजोवत्यै नमः
,, त्रिणयनायै नमः
,, लोलाक्षीकामरूपिण्यै नमः
,, मालिन्यै नमः
,, हंसिन्यै नमः
,, मात्रे नमः
,, मलयाचलवासिन्यै नमः
,, सुमुख्यै नमः

ॐ ४ नळिन्यै नमः ४६०
,, सुभ्रुवे नमः
,, शोभनायै नमः
,, सुरनायिकायै नमः
,, काळकण्ठ्यै नमः
,, कान्तिमत्यै नमः
,, क्षोभिण्यै नमः
,, सूक्ष्मरूपिण्यै नमः
,, वज्रेश्वर्यै नमः
,, वामदेव्यै नमः
,, वयोवस्थाविवर्जितायै नमः ४७०
,, सिद्धेश्वर्यै नमः
,, सिद्धविद्यायै नमः
,, सिद्धमात्रे नमः
,, यशस्विन्यै नमः
,, विशुद्धिचक्रनिलयायै नमः
,, आरक्तवर्णायै नमः
,, त्रिलोचनायै नमः
,, खट्वाङ्गादिप्रहरणायै नमः
,, वदनैकसमन्वितायै नमः
,, पायसान्नप्रियायै नमः ४८०
,, त्वक्स्थायै नमः
,, पशुलोकभयङ्कर्यै नमः
,, अमृतादिमहाशक्तिसंवृतायै नमः
,, डाकिनीश्वर्यै नमः
,, अनाहताब्ज निळयायै नमः

ॐ ४ श्यामाभायै नमः
,, वदनद्वयायै नमः
,, दंष्ट्रोज्वलायै नमः
,, अक्षमालादिधरायै नमः
,, रुधिरसंस्थितायै नमः ४९०
,, काळरात्र्यादिशक्त्योघवृतायै नमः
,, स्निग्धौदनप्रियायै नमः
,, महावीरेन्द्रवरदायै नमः
,, राकिण्यम्बास्वरूपिण्यै नमः
,, मणिपूराब्जनिलयायै नमः
,, वदनत्रयसंयुतायै नमः
,, वज्रादिकायुधोपेतायै नमः
,, डामर्यादिभिरावृतायै नमः
,, रक्तवर्णायै नमः
,, मांसनिष्ठायै नमः ५००
,, गुडान्नप्रीतमानसायै नमः
,, समस्तभक्तसुखदायै नमः
,, लाकिन्यम्बास्वरूपिण्यै नमः
,, स्वाधिष्ठानांबुजगतायै नमः
,, चतुर्वक्त्रमनोहरायै नमः
,, शूलाद्यायुधसंपन्नायै नमः
,, पीतवर्णायै नमः
,, अतिगर्वितायै नमः
,, मेदोनिष्ठायै नमः
,, मधुप्रीतायै नमः ५१०
,, बन्धिन्यादिसमन्वितायै नमः

ॐ ४ दध्यन्नासक्तहृदयायै नमः
,, काकिनीरूपधारिण्यै नमः
,, मूलाधारांबुजारूढायै नमः
,, पञ्चवक्त्रायै नमः
,, अस्थिसंस्थितायै नमः
,, अंकुशादिप्रहरणायै नमः
,, वरदादिनिषेवितायै नमः
,, मुद्गौदनासक्तचित्तायै नमः
,, साकिन्यम्बास्वरूपिण्यै नमः ५२०
,, आज्ञाचक्राब्जनिलयायै नमः
,, शुक्लवर्णायै नमः
,, षडाननायै नमः
,, मज्जासंस्थायै नमः
,, हंसवतीमुख्यशक्तिसमन्वितायै नमः
,, हरिद्रान्नैकरसिकायै नमः
,, हाकिनीरूपधारिण्यै नमः
,, सहस्रदळपद्मस्थायै नमः
,, सर्ववर्णोपशोभितायै नमः
,, सर्वायुधधरायै नमः ५३०
,, शुक्लसंस्थितायै नमः
,, सर्वतोमुख्यै नमः
,, सर्वौदनप्रीतचित्तायै नमः।
,, याकिन्यम्बास्वरूपिण्यै नमः।
,, स्वाहायै नमः
,, स्वधायै नमः

ॐ ४ अमत्यै नमः
„ मेधायै नमः
„ श्रुत्यै नमः
„ स्मृत्यै नमः ५४०
„ अनुत्तमायै नमः
„ पुण्यकीर्त्यै नमः
„ पुण्यलभ्यायै नमः
„ पुण्यश्रवणकीर्तनायै नमः
„ पुलोमजार्चितायै नमः
„ बन्धमोचिन्यै नमः
„ बर्बराळकायै नमः
„ विमर्शरूपिण्यै नमः
„ विद्यायै नमः
„ वियदादिजगत्प्रसुवे नमः ५५०
„ सर्वव्याधिप्रशमन्यै नमः
„ सर्वमृत्युनिवारण्यै नमः
„ अग्रगण्यायै नमः
„ अचिन्त्यरूपायै नमः
„ कलिकल्मषनाशिन्यै नमः
„ कात्यायन्यै नमः
„ कालहन्त्र्यै नमः
„ कमलाक्षनिषेवितायै नमः

ॐ ४ तांबूलपूरितमुख्यै नमः
„ दाडिमीकुसुमप्रभायै नमः ५६०
„ मृगाक्ष्यै नमः
„ मोहिन्यै नमः
„ मुख्यायै नमः
„ मृडान्यै नमः
„ मित्ररूपिण्यै नमः
„ नित्यतृप्तायै नमः
„ भक्तनिधयै नमः
„ नियन्त्र्यै नमः
„ निखिलेश्वर्यै नमः
„ मैत्र्यादिवासनालभ्यायै नमः ५७०
„ महाप्रळयसाक्षिण्यै नमः
„ पराशक्त्यै नमः ५७१
„ परानिष्ठायै नमः ५७३
„ प्रज्ञानघनरूपिण्यै नमः
„ माध्वीपानालसायै नमः
„ मत्तायै नमः
„ मातृकावर्णरूपिण्यै नमः
„ महाकैलासनिलयायै नमः
„ मृणाळमृदुदोर्लतायै नमः
„ महनीयायै नमः ५८०

---

५७२ परस्यै शक्त्य }
५८३ परायै निष्ठायै } पाठान्तरम्

ॐ ४ दयामूर्त्यै नमः
,, महासाम्राज्यशालिन्यै नमः
,, आत्मविद्यायै नमः
,, महाविद्यायै नमः
,, श्रीविद्यायै नमः
,, कामसेवितायै नमः
,, श्रीषोडशाक्षरीविद्यायै नमः
,, त्रिकूटायै नमः
,, कामकोटिकायै नमः
,, कटाक्षकिङ्करीभूतकमलासेवितायै नमः ५९०
,, शिरस्थितायै नमः
,, चन्द्रनिभायै नमः
,, फालस्थायै नमः
,, इन्द्रधनुःप्रभायै नमः
,, हृदयस्थायै नमः
,, रविप्रख्यायै नमः
,, त्रिकोणान्तरदीपिकायै नमः
,, दाक्षायण्यै नमः
,, दैत्यहन्त्र्यै नमः
,, दक्षयज्ञविनाशिन्यै नमः ६००
,, दरांदोळितदीर्घाक्ष्यै नमः
,, दरहासोज्वलन्मुख्यै नमः
,, गुरुमूर्त्यै नमः
,, गुणनिधये नमः
,, गोमात्रे नमः

ॐ ४ गुहजन्मभुवे नमः
,, देवेश्यै नमः
,, दण्डनीतिस्थायै नमः
,, दहराकाशरूपिण्यै नमः
,, प्रतिसन्मुख्यराकान्ततिथिमण्डलपूजितायै नमः ६१०
,, कलात्मिकायै नमः
,, कलानाथायै नमः
,, काव्यालापविनोदिन्यै नमः
,, सचामररमावाणीसव्यदक्षिणसेवितायै नमः
,, आदिशक्त्यै नमः
,, अमेयायै नमः
,, आत्मने नमः
,, परमायै नमः
,, पावनाकृत्यै नमः
,, अनेककोटिब्रह्माण्डजनन्यै नमः
,, दिव्यविग्रहायै नमः
,, क्लींकार्यै नमः
,, केवलायै नमः
,, गुह्यायै नमः
,, कैवल्यपददायिन्यै नमः
,, त्रिपुरायै नमः
,, त्रिजगद्वन्द्यायै नमः
,, त्रिमूर्त्यै नमः
,, त्रिदशेश्वर्यै नमः

ॐ ४ त्र्यक्षर्यै नमः ६३०
,, दिव्यगन्धाढ्यायै नमः
,, सिन्दूरतिलकाञ्चितायै नमः
,, उमायै नमः
,, शैलेन्द्रतनयायै नमः
,, गौर्यै नमः
,, गन्धर्वसेवितायै नमः
,, विश्वगर्भायै नमः
,, स्वर्णगर्भायै नमः
,, अवरदायै नमः
,, वागधीश्वर्यै नमः ६४०
,, ध्यानगम्यायै नमः
,, अपरिच्छेद्यायै नमः
,, ज्ञानदायै नमः
,, ज्ञानविग्रहायै नमः
,, सर्ववेदान्तसंवेद्यायै नमः
,, सत्यानन्दस्वरूपिण्यै नमः
,, लोपामुद्रार्चितायै नमः
,, लीलाक्लुप्तब्रह्माण्डमण्डलायै नमः
,, अदृश्यायै नमः
,, दृश्यरहितायै नमः ६५०
,, विज्ञात्र्यै नमः
,, वेद्यवर्जितायै नमः
,, योगिन्यै नमः
,, योगदायै नमः
,, योग्यायै नमः

ॐ ४ योगानन्दायै नमः
,, युगन्धरायै नमः
,, इच्छाशक्ति ज्ञानशक्ति क्रिया-
शक्तिस्वरूपिण्यै नमः
,, सर्वाधारायै नमः
,, सुप्रतिष्ठायै नमः ६००
,, सदसद्रूपधारिण्यै नमः
,, अष्टमूर्तये नमः
,, अजाजैत्र्यै नमः
,, लोकयात्राविधायिन्यै नमः
,, एकाकिन्यै नमः
,, भूमरूपायै नमः
,, निर्द्वैतायै नमः
,, द्वैतवर्जितायै नमः
,, अन्नदायै नमः
,, वसुदायै नमः ६७०
,, वृद्धायै नमः
,, ब्रह्मात्मैक्यस्वरूपिण्यै नमः
,, बृहत्यै नमः
,, ब्राह्मण्यै नमः
,, ब्राह्म्यै नमः
,, ब्रह्मानन्दायै नमः
,, बलिप्रियायै नमः
,, भाषारूपायै नमः
,, बृहत्सेनायै नमः
,, भावाभावविवर्जितायै नमः ६८०

ॐ ४ सुखाराध्यायै नमः
,, शुभकर्यै नमः
,, शोभनासुलभागत्यै नमः
,, राजराजेश्वर्यै नमः
,, राज्यदायिन्यै नमः
,, राज्यवल्लभायै नमः
,, राजत्कृपायै नमः
,, राजपीठनिवेशितनिजाश्रितायै नमः
,, राज्यलक्ष्म्यै नमः
,, कोशनाथायै नमः ६९०
,, चतुरङ्गबलेश्वर्यै नमः
,, साम्राज्यदायिन्यै नमः
,, सत्यसन्धायै नमः
,, सागरमेखलायै नमः
,, दीक्षितायै नमः
,, दैत्यशमन्यै नमः
,, सर्वलोकवशङ्कर्यै नमः
,, सर्वार्थदात्र्यै नमः
,, सावित्र्यै नमः
,, सच्चिदानन्दरूपिण्यै नमः ७००
,, देशकालपरिच्छिन्नायै नमः
,, सर्वगायै नमः
,, सर्वमोहिन्यै नमः
,, सरस्वत्यै नमः
,, शास्त्रमय्यै नमः

ॐ ४ गुहाम्बायै नमः
,, गुह्यरूपिण्यै नमः
,, सर्वोपाधिविनिर्मुक्तायै नमः
,, सदाशिवपतिव्रतायै नमः
,, संप्रदायेश्वर्यै नमः ७१०
,, साधुने नमः
,, यै नमः
,, गुरुमण्डलरूपिण्यै नमः
,, कुलोत्तीर्णायै नमः
,, भगाराध्यायै नमः
,, मायायै नमः
,, मधुमत्यै नमः
,, मह्यै नमः
,, गणाम्बायै नमः
,, गुह्यकाराध्यायै नमः ७२०
,, कोमलाङ्ग्यै नमः
,, गुरुप्रियायै नमः
,, स्वतन्त्रायै नमः
,, सर्वतन्त्रेश्यै नमः
,, दक्षिणामूर्तिरूपिण्यै नमः
,, सनकादिसमाराध्यायै नमः
,, शिवज्ञानप्रदायिन्यै नमः
,, चित्कलायै नमः
,, आनन्दकलिकायै नमः
,, प्रेमरूपायै नमः ७३०
,, प्रियंकर्यै नमः

ॐ ४ नामपारायणप्रीतायै नमः
,, नन्दिविद्यायै नमः
,, नटेश्वर्यै नमः
,, मिथ्याजगदधिष्ठानायै नमः
,, मुक्तिदायै नमः
,, मुक्तिरूपिण्यै नमः
,, लास्यप्रियायै नमः
,, लयकर्यै नमः
,, लज्जायै नमः ७४०
,, रम्भादिवन्दितायै नमः
,, भवदावसुधावृष्टयै नमः
,, पापारण्यदवानलायै नमः
,, दौर्भाग्यतूलवातूलायै नमः
,, जराध्वान्तरविप्रभायै नमः
,, भाग्याब्धिचन्द्रिकायै नमः
,, भक्तचित्तकेकिघनाघनायै नमः
,, रोगपर्वतदम्बोळये नमः
,, मृत्युदारुकुठारिकायै नमः
,, महेश्वर्यै नमः ७५०
,, महाकाळयै नमः
,, महाग्रासायै नमः
,, महाशनायै नमः
,, अपर्णायै नमः
,, चण्डिकायै नमः

ॐ ४ चण्डमुण्डासुरनिषूदिन्यै नमः
,, क्षराक्षरात्मिकायै नमः
,, सर्वलोकेश्यै नमः
,, विश्वधारिण्यै नमः
,, त्रिवर्गदात्र्यै नमः ७६०
,, सुभगायै नमः
,, त्र्यंबकायै नमः
,, त्रिगुणात्मिकायै नमः
,, स्वर्गापवर्गदायै नमः
,, शुद्धायै नमः
,, जपापुष्पनिभाकृतये नमः ७६६
,, ओजोवत्यै नमः ७६७
,, द्युतिधरायै नमः
,, यज्ञरूपायै नमः
,, प्रियव्रतायै नमः ७७०
,, दुराराध्यायै नमः
,, दुराधर्षायै नमः
,, पाटलीकुसुमप्रियायै नमः
,, महत्यै नमः
,, मेरुनिलयायै नमः
,, मन्दारकुसुमप्रियायै नमः
,, वीराराध्यायै नमः
,, विराड्रूपायै नमः
,, विरजसे नमः

---

७६६ अजपायै नमः } पाठान्तरम्
७६७ पुष्पविभाकृतये नमः }

,, विश्वतोमुख्यै नमः ७८०
,, प्रत्यग्रूपायै नमः
,, पराकाशायै नमः
,, प्राणदायै नमः
,, प्राणरूपिण्यै नमः
,, मार्तण्डभैरवाराध्यायै नमः
,, मन्त्रिणीन्यस्तराज्यधुरे नमः
,, त्रिपुरेश्यै नमः
,, जयत्सेनायै नमः
,, निस्त्रैगुण्यायै नमः
,, परापरायै नमः ७९०
,, सत्यज्ञानानन्दरूपायै नमः
,, सामरस्यपरायणायै नमः
,, कपर्दिन्यै नमः
,, कलामालायै नमः
,, कामदुघे नमः
,, कामरूपिण्यै नमः
,, कलानिधये नमः
,, काव्यकलायै नमः
,, रसज्ञायै नमः
,, रसशेवधये नमः ८००
,, पुष्टायै नमः
,, पुरातनायै नमः
,, पूज्यायै नमः
,, पुष्करायै नमः
,, पुष्करेक्षणायै नमः
ॐ ४ परस्मैज्योतिषे नमः ८०६
,, परस्मैधाम्ने नमः ८०७
,, परमाणवे नमः
,, परात्परायै नमः
,, पाशहस्तायै नमः ८१०
,, पाशहन्त्र्यै नमः
,, परमन्त्रविभेदिन्यै नमः
,, मूर्तायै नमः
,, अमूर्तायै नमः
,, अनित्यतृप्तायै नमः
,, मुनिमानसहंसिकायै नमः ८१६
,, सत्यव्रतायै नमः
,, सत्यरूपायै नमः
,, सर्वान्तर्यामिण्यै नमः
,, सत्यै नमः ८२०
,, ब्रह्माण्यै नमः
,, ब्रह्मणे नमः ८२२
,, जनन्यै नमः ८२३

---

८०७ परञ्ज्योतिषे नमः
८०७ परंधाम्ने नमः
८१६ सर्वस्यै नमः
८२० आन्तर्यामिन्यै नमः
८२२ ब्रह्मजनन्यै नमः
८२३ प्रचण्डाज्ञायै नमः
} पाठान्तरम्

ॐ ४ बहुरूपायै नमः
,, बुधार्चितायै नमः
,, प्रसवित्र्यै नमः
,, प्रचण्डायै नमः
,, आज्ञायै नमः
,, प्रतिष्ठायै नमः
,, प्रकटाकृतये नमः ८३०
,, प्राणेश्वर्यै नमः
,, प्राणदात्र्यै नमः
,, पञ्चाशत्पीठरूपिण्यै नमः
,, विशृंखलायै नमः
,, विविक्तस्थायै नमः
,, वीरमात्रे नमः
,, वियत्प्रसुवे नमः
,, मुकुन्दायै नमः
,, मक्तिनिलयायै नमः
,, मूलविग्रहरूपिण्यै नमः ८४०
,, भावज्ञायै नमः
,, भवरोगघ्न्यै नमः
,, भवचक्रप्रवर्तिन्यै नमः
,, छन्दस्सारायै नमः
,, शास्त्रसारायै नमः
,, मन्त्रसारायै नमः
,, तलोदर्यै नमः
,, उदारकीर्तये नमः
,, उद्दामवैभवायै नमः

ॐ ४ वर्णरूपिण्यै नमः ८५०
,, जन्ममृत्युजरातप्तजनविश्रान्तिदायिन्यै नमः
,, सर्वोपनिषदुद्घुष्टायै नमः
,, शान्त्यतीतकलात्मिकायै नमः
,, गम्भीरायै नमः
,, गगनान्तस्थायै नमः
,, गर्वितायै नमः
,, गानलोलुपायै नमः
,, कल्पनारहितायै नमः
,, काष्ठायै नमः
,, अकान्तायै नमः ८६०
,, कान्तार्थविग्रहायै नमः
,, कार्यकारणनिर्मुक्तायै नमः
,, कामकेळितरङ्गितायै नमः
,, कनत्कनकताटङ्कायै नमः
,, लीलाविग्रहधारिण्यै नमः
,, अजायै नमः
,, क्षयविनिर्मुक्तायै नमः
,, मुग्धायै नमः
,, क्षिप्रप्रसादिन्यै नमः
" अन्तर्मुखसमाराध्यायै नमः ८७०
,, बहिर्मुखसुदुर्लभायै नमः
,, त्रय्यै नमः
,, त्रिवर्गनिलयायै नमः
,, त्रिस्थायै नमः

ॐ ४ त्रिपुरमालिन्यै नमः
,, निरामयायै नमः
,, निरालम्बायै नमः
,, स्वात्मारामायै नमः
,, सुधासृतये नमः
,, संसारपङ्कनिर्मग्नसमुद्धरण-
पण्डितायै नमः ८८०
,, यज्ञप्रियायै नमः
,, यज्ञकर्त्र्यै नमः
,, यजमानस्वरूपिण्यै नमः
,, धर्माधारायै नमः
,, धनाध्यक्षायै नमः
,, धनधान्यविवर्धिन्यै नमः
,, विप्रप्रियायै नमः
,, विप्ररूपायै नमः
,, विश्वभ्रमणकारिण्यै नमः
,, विश्वग्रासयै नमः ८९०
,, विद्रुमाभायै नमः
,, वैष्णव्यै नमः
,, विष्णुरूपिण्यै नमः
,, अयोनये नमः
,, योनिनिलयायै नमः
,, कूटस्थायै नमः
,, कुलरूपिण्यै नमः
,, वीरगोष्ठीप्रियायै नमः
,, वीरायै नमः

ॐ ४ नैष्कर्म्यायै नमः ९००
,, नादरूपिण्यै नमः
,, विज्ञानकलनायै नमः
,, कल्यायै नमः
,, विदग्धायै नमः
,, बैन्दवासनायै नमः
,, तत्वाधिकायै नमः
,, तत्वमय्यै नमः
,, तत्वमर्थस्वरूपिण्यै नमः
,, सामगानप्रियायै नमः
,, सौम्यायै नमः ९१०
,, सदाशिवकुटुम्बिन्यै नमः
,, सव्यापसव्यमार्गस्थायै नमः
,, सर्वापद्विनिवारिण्यै नमः
,, स्वस्थायै नमः
,, स्वभावमधुरायै मः
,, धीरायै नमः
,, धीरसमर्चितायै नमः
,, चैतन्यार्घ्यसमाराध्यायै नमः
,, चैतन्यकुसुमप्रियायै नमः
,, सदोदितायै नमः ९२०
,, सदा तुष्टायै नमः
,, तरुणादित्यपाटलायै नमः
,, दक्षिणादक्षिणाराध्यायै नमः
,, दरस्मेरमुखाम्बुजायै नमः
,, कालिनीकेवलायै नमः

ॐ ४ अनर्घ्यकैवल्यपददायिन्यै नमः
„ स्तोत्रप्रियायै नमः
„ स्तुतिमत्यै नमः
„ श्रुतिसंस्थुतवैभवायै नमः
„ मनस्विन्यै नमः ९३०
„ मानवत्यै नमः
„ महेश्यै नमः
„ मङ्गलाकृतये नमः
„ विश्वमात्रे नमः
„ जगद्धात्र्यै नमः
„ बिशालाक्ष्यै नमः
„ विरागिण्यै नमः
„ प्रगल्भायै नमः
„ परमोदारायै नमः
„ परामोदायै नमः ९४०
„ मनोमय्यै नमः
„ व्योमकेश्यै नमः
„ विमावस्थायै नमः
„ वज्रिण्यै नमः
„ वामकेश्वर्यै नमः
„ पञ्चयज्ञप्रियायै नमः
„ पञ्चप्रेतमञ्चाधिशायिन्यै नमः
„ पञ्चम्यै नमः

ॐ ४ पञ्चभूतेश्यै नमः
„ पञ्चसंख्योपचारिण्यै नमः ९५०
„ शाश्वत्यै नमः
„ शाश्वतैश्वर्यायै नमः ९५२
„ शर्मदायै नमः
„ शम्भुमोहिन्यै नमः
„ धरायै नमः ९५३
„ धरसुतायै नमः
„ धन्यायै नमः
„ धर्मिण्यै नमः
„ धर्मवर्धिन्यै नमः
„ लोकातीतायै नमः ९६०
„ गुणातीतायै नमः
„ सर्वातीतायै नमः
„ शमात्मिकायै नमः
„ बन्धूककुसुमप्रख्यायै नमः
„ बालायै नमः
„ लीलाविनोदिन्यै नमः
„ सुमङ्गल्यै नमः
„ सुखकर्यै नमः
„ सुवेषाढ्यायै नमः
„ सुवासिन्यै नमः ९७०
„ सुवासिन्यर्चनप्रीतायै नमः

---

९५२ ईशाश्वतैश्वर्यायै नमः }
९५३ धराधरसुतायै नमः } पाठान्तरम्

ॐ ४ आशोभनायै नमः
,, शुद्धमानसायै नमः
,, बिन्दुतर्पणसंतुष्टायै नमः
,, पूर्वजायै नमः
,, त्रिपुराम्बिकायै नमः
,, दशमुद्रासमाराध्यायै नमः
,, त्रिपुराश्रीवशङ्कर्यै नमः
,, ज्ञानमुद्रायै नमः
,, ज्ञानगम्यायै नमः ९८०
,, ज्ञानज्ञेयस्वरूपिण्यै नमः
,, योनिमुद्रायै नमः
,, त्रिखण्डेश्यै नमः
,, त्रिगुणायै नमः
,, अंबायै नमः
,, त्रिकोणगायै नमः

ॐ ४ अनघायै नमः
,, अद्भुतचारित्रायै नमः
,, वाञ्छितार्थप्रदायिन्यै नमः
,, अभ्यासातिशयज्ञातायै नमः ९९०
,, षडध्वातीतरूपिण्यै नमः
,, अव्याजकरुणामूर्तये नमः
,, अज्ञानध्वान्तदीपिकायै नमः
,, आबालगोपविदितायै नमः
,, सर्वानुल्लङ्घ्यशासनायै नमः
,, श्रीचक्रराजनिलयायै नमः
,, श्रीमत्त्रिपुरसुन्दर्यै नमः
,, श्रीशिवायै नमः
,, शिवशक्त्यैक्यरूपिण्यै नमः
,, ललिताम्बिकायै नमः १०००

श्रीललितासहस्रनामावळि स्समाप्तिमगमत्



श्रीरस्तु

## ललिता त्रिशतीनामावलिप्रारम्भः

ॐ ४ ककाररूपायै नमः
,, कल्याण्यै नमः
,, कल्याणगुणशालिन्यै नमः
,, कल्याणशैलनिलयायै नमः

ॐ ४ कमनीयायै नमः
,, कलावत्यै नमः
,, कमलाक्ष्यै नमः
,, कल्मषघ्न्यै नमः

ॐ ४ करुणामृतसागरायै नमः
,, कदम्बकाननवासयै नमः १०
,, कदम्बकुसुमप्रियायै नमः
,, कन्दर्पविद्यायै नमः
,, कन्दर्पजनकापाङ्गवीक्षणायै नमः
,, कर्पूरवीटीसौरभ्यकल्लोलित —
ककुप्तटायै नमः
,, कलिदोषहरायै नमः
,, कञ्जलोचनायै नमः
,, कर्मविग्रहायै नमः
,, कर्मादिसाक्षिण्यै नमः
,, कारयित्र्यै नमः
,, कर्मफलप्रदायै नमः २०
,, एकाररूपायै नमः
,, एकाक्षर्यै नमः
,, एकानेकाक्षराकृत्यै नमः
,, एतत्तदित्यनिर्देश्यायै नमः
,, एकानन्दचिदाकृत्यै नमः
,, एवमित्यागमाबोध्यायै नमः
,, एकभक्तिमदर्चितायै नमः
,, एकाग्रचित्तनिर्ध्यातायै नमः
,, एषणारहितादृतायै नमः
,, एलासुगन्धिचिकुरायै नमः ३०
,, एनः कूटविनाशिन्यै नमः
,, एकभोगायै नमः
,, एकरसायै नमः

ॐ ४ एकैश्वर्यप्रदायिन्यै नमः
,, एकातपत्रसाम्राज्यप्रदायै नमः
,, एकान्तपूजितायै नमः
,, एधमानप्रभायै नमः
,, एजदनेजज्जगदीश्वर्यै नमः
,, एकवीरादिसंसेव्यायै नमः
,, एकप्राभवशालिन्यै नमः ४०
,, ईकाररूपिण्यै नमः
,, ईशित्र्यै नमः
,, ईप्सितार्थप्रदायिन्यै नमः
,, ईदृगित्यनिर्देश्यायै नमः
,, ईश्वरत्वविधायिन्यै नमः
,, ईशानादि ब्रह्ममय्यै नमः
,, ईशत्वाद्यष्टसिद्धिदायै नमः
,, ईक्षित्र्यै नमः
,, ईक्षणसृष्टाण्डकोट्यै नमः
,, ईश्वरवल्लभायै नमः ५०
,, ईडितायै नमः
,, ईश्वरार्धाङ्गशरीरायै नमः
,, ईशाधिदेवतायै नमः
,, ईश्वरप्रेरणकर्यै नमः
,, ईशताण्डवसाक्षिण्यै नमः
,, ईश्वरोत्सङ्गनिलयायै नमः
,, ईतिबाधाविनाशिन्यै नमः
,, ईहाविरहितायै नमः
,, ईशशक्त्यै नमः

ॐ ४ ईषत्स्मिताननाय नमः ६०
,, लकाररूपायै नमः
,, ललितायै नमः
,, लक्ष्मीवाणीनिषेवितायै नमः
,, लाकिन्यै नमः
,, ललनारूपायै नमः
,, लसद्दाडिमपाटलायै नमः
,, ललन्तिकालसत्फालायै नमः
,, ललाटनयनार्चितायै नमः
,, लक्षणोज्वलदिव्याङ्ग्यै नमः
,, लक्षकोटचण्डनायिकायै नमः ७०
,, लक्ष्यार्थायै नमः
,, लक्षणागम्यायै नमः
,, लब्धकामायै नमः
,, लतातनवे नमः
,, ललामराजदळिकायै नमः
,, लम्बमुक्तालताञ्चितायै नमः
,, लम्बोदरप्रसुवे नमः
,, लभ्यायै नमः
,, लज्जाढ्यायै नमः
,, लयवर्जितायै नमः ८०
,, ह्रीङ्काररूपायै नमः
,, ह्रीङ्कारनिलयायै नमः
,, ह्रींपदप्रियायै नमः
,, ह्रींकारबीजायै नमः
,, ह्रींकारमन्त्रायै नमः

ॐ ४ ह्रींकारलक्षणायै नमः
,, ह्रींकारजपसुप्रीतायै नमः
,, ह्रीमत्यै नमः
,, ह्रींविभूषणायै नमः
,, ह्रीं शीलायै नमः ९०
,, ह्रीं पदाराध्यायै नमः
,, ह्रीं गर्भायै नमः
,, ह्रीं पदाभिदायै नमः
,, ह्रींकारवाच्यायै नमः
,, ह्रींकारपूज्यायै नमः
,, ह्रींकारपीठिकायै नमः
,, ह्रींकारवेद्यायै नमः
,, ह्रींकारचिन्त्यायै नमः
,, ह्रीं नमः
,, ह्रीं शरीरिण्यै नमः १००
,, हकाररूपायै नमः
,, हलधृक्पूजितायै नमः
,, हरिणेक्षणायै नमः
,, हरप्रियायै नमः
,, हराराध्यायै नमः
,, हरिब्रह्मेन्द्रसेवितायै नमः
,, हयारूढसेविताङ्घ्र्यै नमः
,, हयमेधसमर्चितायै नमः
,, हर्यक्षवाहनायै नमः
,, हंसवाहनायै नमः ११०
,, हतदानवायै नमः

ॐ ४ हत्यादिपापशमन्यै नमः
,, हरिदश्वादिसेवितायै नमः
,, हस्तिकुम्भोत्तुङ्गकुचायै नमः
,, हस्तिकृत्तिप्रियाङ्गनायै नमः
,, हरिद्राकुंकुमादिग्धायै नमः
,, हर्यश्वाद्यमरार्चितायै नमः
,, हरिकेशसख्यै नमः
,, हादिविद्यायै नमः
,, हालामदालसायै नमः १२०
,, सकाररूपायै नमः
,, सर्वज्ञायै नमः
,, सर्वेश्यै नमः
,, सर्वमङ्गळायै नमः
,, सर्वकर्त्र्यै नमः
,, सर्वधात्र्यै नमः
,, सर्वहन्त्र्यै नमः
,, सनातन्यै नमः
,, सर्वानवद्यायै नमः
,, सर्वाङ्गसुन्दर्यै नमः १३०
,, सर्वसाक्षिण्यै नमः
,, सर्वात्मिकायै नमः
,, सर्वसौख्यदात्र्यै नमः
,, सर्वविमोहिन्यै नमः
,, सर्वाधारायै नमः
,, सर्वगतायै नमः
,, सर्वावगुणवर्जितायै नमः

ॐ ४ सर्वारुणायै नमः
,, सर्वमात्रे नमः
,, सर्वाभरणभूषितायै नमः १४०
,, ककारार्थायै नमः
,, कालहन्त्र्यै नमः
,, कामेश्यै नमः
,, कामितार्थदायै नमः
,, कामसञ्जीविन्यै नमः
,, कल्यायै नमः
,, कठिस्तनमण्डलायै नमः
,, करभोरवे नमः
,, कलानाथमुख्यै नमः
,, कचजिताम्बदायै नमः १५०
,, कटाक्षस्यन्दिकरुणायै नमः
,, कपालिप्राणनायिकायै नमः
,, कारुण्यविग्रहायै नमः
,, कान्तायै नमः
,, कान्तिधूतजपावळ्यै नमः
,, कलालापायै नमः
,, कम्बुकण्ठ्यै नमः
,, करनिर्जितपल्लवायै नमः
,, कल्पवल्लीसमभुजायै नमः
,, कस्तूरीतिलकोज्वलायै नमः १६०
,, हकारार्थायै नमः
,, हंसगत्यै नमः
,, हाटकाभरणोज्वलायै नमः

ॐ ४ हारहारिकुचाभोगायै नमः
,, हाकिन्यै नमः
,, हल्यवर्जितायै नमः
,, हरित्पतिसमाराध्यायै नमः
,, हठात्कारहतासुरायै नमः
,, हर्षप्रदायै नमः
,, हविर्भोक्त्र्यै १७०
,, हार्दसन्तमसापहार्यै नमः
,, हल्लीहालस्यसन्तुष्टायै नमः
,, हंसमन्त्रार्थरूपिण्यै नमः
,, हानोपादाननिर्मुक्तायै नमः
,, हर्षिण्यै नमः
,, हरिसोदर्यै नमः
,, हाहाहूहू मुखस्तुत्यायै नमः
,, हानिवृद्धिविवर्जितायै नमः
,, हय्यङ्गवीनहृदयायै नमः
,, हरिक्रोपारुणांशुकायै नमः १८०
,, ळाकारार्थायै नमः
,, लतापूज्यायै नमः
,, लयस्थित्युद्भवेश्वर्यै नमः
,, लास्यदर्शनसन्तुष्टायै नमः
,, लाभालाभविवर्जितायै नमः
,, लंघ्येतराज्ञायै नमः
,, लावण्यशालिन्यै नमः
,, लघुसिद्धिदायै नमः
,, लाक्षारससवर्णभायै नमः

ॐ ४ लक्ष्मणाग्रजपूजितायै नमः १९०
,, लभ्येतरायै नमः
,, लब्धभक्तिसुलभायै नमः
,, लाङ्गलायुधायै नमः
,, लग्नचामरहस्त श्रीशारदा-
परिवीजितायै नमः
,, लज्जापदसमाराध्यायै नमः
,, लम्पटायै नमः
,, लकुळेश्वर्यै नमः
,, लब्धमानायै नमः
,, लब्धरसायै नमः
,, लब्धसंपत्समुन्नत्यै नमः २००
,, ह्रींकारिण्यै नमः
,, ह्रींकाराद्यै नमः
,, ह्रींमध्यायै नमः
,, ह्रीं शिखामणये नमः
,, ह्रींकारकुण्डाग्निशिखायै नमः
,, ह्रींकारशशिचन्द्रिकायै नमः
,, ह्रींकारभास्कररुच्यै नमः
,, ह्रींकाराम्भोदचञ्चलायै नमः
,, ह्रींकारकन्दांकुरिकायै नमः
,, ह्रींकारैकपरायणायै नमः २०१
,, ह्रींकारदीर्घिकाहंस्यै नमः
,, ह्रींकारोद्यानकेकिन्यै नमः
,, ह्रींकारारण्यहरिण्यै नमः
,, ह्रींकारालबालवल्लर्यै नमः

ॐ ४ ह्रींकारपञ्जरशुक्त्यै नमः
,, ह्रींकाराङ्कणदीपिकायै नमः
,, ह्रींकारकन्दरसिंह्यै नमः
,, ह्रींकाराम्बुजभृङ्गिकायै नमः
,, ह्रींकारसुमनोमाध्व्यै नमः
,, ह्रींकारतरुमञ्जर्यै नमः २२०
,, सकाराख्यायै नमः
,, समरसायै नमः
,, सकलागमसंस्तुतायै नमः
,, सर्ववेदान्ततात्पर्यभूम्यै नमः
,, सदसदाश्रयायै नमः
,, सकलायै नमः
,, सच्चिदानन्दायै नमः
,, साध्व्यै नमः
,, सद्गतिदायिन्यै नमः
,, सनकादिमुनिध्येयायै नमः २३०
,, सदाशिवकुटुम्बिन्यै नमः
,, सकलाधिष्ठानरूपायै नमः
,, सत्वरूपायै नमः
,, समाकृत्यै नमः
,, सर्वप्रपञ्चनिर्मात्र्यै नमः
,, समानाधिकवर्जितायै नमः
,, सर्वोत्तुंगायै नमः
,, सङ्गहीनायै नमः
,, सद्गुणायै नमः
,, सकलेष्टदायै नमः २४०

ॐ ४ ककारिण्यै नमः
,, काव्यलोलायै नमः
,, कामेश्वरमनोहरायै नमः
,, कामेश्वरप्राणनाड्यै नमः
,, कामेशोत्संगवासिन्यै नमः
,, कामेश्वरालिङ्गिताङ्ग्यै नमः
,, कामेश्वरसुखप्रदायै नमः
,, कामेश्वरप्रणयिन्यै नमः
,, कामेश्वरविलासिन्यै नमः
,, कामेश्वरतपस्सिद्ध्यै नमः २५०
,, कामेश्वरमनःप्रियायै नमः
,, कामेश्वरप्राणनाथायै नमः
,, कामेश्वर विमोहिन्यै नमः
,, कामेश्वरब्रह्मविद्यायै नमः
,, कामेश्वर गृहेश्वर्यै नमः
,, कामेश्वराह्लादकर्यै नमः
,, कामेश्वर महेश्वर्यै नमः
,, कामेश्वर्यै नमः
,, कामकोटिनिलयायै नमः
,, कांक्षितार्थदायै नमः २६०
,, लकारिण्यै नमः
,, लब्धरूपायै नमः
,, लब्धधियै नमः
,, लब्धवाञ्छितायै नमः
,, लब्धपापमनोदूरायै नमः
,, लब्धाहङ्कारदुर्गमायै नमः

ॐ ४ लब्धशक्त्यै नमः
,, लब्धदेहायै नमः
,, लब्धबुद्धये नमः २७०
,, लब्धलीलायै नमः
,, लब्धयौवनशालिन्यै नमः
,, लब्धातिशयसर्वाङ्गसौन्दर्यायै नमः
,, लब्धविभ्रमायै नमः
,, लब्धरागायै नमः
,, लब्धगत्यै नमः
,, लब्धासङ्गागमस्थितै नमः
,, लब्धभोगायै नमः
,, लब्धसुखायै नमः
,, लब्धहर्षाभिपूजितायै नमः २८०
,, ह्रींकारमूर्तये नमः
,, ह्रींकारसौधशृङ्गकपोतिकायै नमः
,, ह्रींकारदुग्धाब्धिसुधायै नमः
,, ह्रींकारकमलेन्दिरायै नमः
,, ह्रींकार मणिदीपार्चिषे नमः

ॐ ४ ह्रींकार तरुशारिकायै नमः
,, ह्रींकारपेटिकामणये नमः
,, ह्रींकारादर्शबिम्बिकायै नमः
,, ह्रींकारकोशासिल्तायै नमः
,, ह्रींकारास्थाननर्तक्यै नमः २९०
,, ह्रींकारशुक्तिका मुक्तामणये नमः
,, ह्रींकारबोधितायै नमः
,, ह्रींकारमय सौवर्णस्तम्भ विद्रुमपुत्रिकायै नमः
,, ह्रींकार वेदोपनिषदे नमः
,, ह्रींकाराध्वरदक्षिणायै नमः
,, ह्रींकारनन्दनाराम नवकल्प-वल्लर्यै नमः
,, ह्रींकारहिमवद्गङ्गायै नमः
,, ह्रींकारार्णवकौस्तुभायै नमः
,, ह्रींकारमन्त्रसर्वस्वायै नमः
,, ह्रींकार परसौख्यदायै नमः ३००
,, श्रीमद्राजराजेश्वर्यै नमः

त्रिशतीनामावळिस्समाप्ता



श्रीरस्तु

## आश्चर्याष्टोत्तरनामावळिप्रारम्भः

ॐ ४ परमानन्दहृद्यै नमः

„ परचैतन्यदीपितायै नमः

„ स्वयंप्रकाशकिरणायै नमः

„ नित्यवैभवशालिन्यै नमः

„ विशुद्धकेवलाखण्डसत्यकालात्म-
रूपिण्यै नमः

„ आदिमध्यान्तरहितायै नमः

„ महामायाविलासिन्यै नमः

„ गुणत्रयपरिच्छेत्र्यै नमः

„ सर्वतत्वप्रकाशिन्यै नमः

„ स्त्रीपुंसभावरसिकायै नमः १०

„ जगत्सर्गादिलम्पटायै नमः

„ अशेषनामरूपादि भेदछेद-
रविप्रभायै नमः

„ अनादिवासनारूपायै नमः

„ वासनोद्यत्प्रपञ्चिकायै नमः

„ प्रपञ्चोपशमप्रौढायै नमः

„ चराचरजगन्मय्यै नमः

„ समस्तजगदाधारायै नमः

„ सर्वसञ्जीवनोत्सुकायै नमः

„ भक्तचेतोमयानन्तस्वार्थवैभव-
विभ्रमायै नमः

ॐ ४ सर्वाकर्षणवश्यादि सर्वकर्म-
दुरन्धरायै नमः २०

„ विज्ञानपरमानन्दविद्यायै नमः

„ सन्तानसिद्धिदायै नमः

„ आयुरारोग्यसौभाग्यबलश्री
कीर्तिभाग्यदायै नमः

„ धनधान्यवस्त्रभूषालेपनमाल्यदायै
नमः

„ गृहग्राममहाराज्य साम्राज्य
सुखदायिन्यै नमः

„ सप्तासकलसंपूर्णसार्वभौम
फलप्रदायै नमः

„ ब्रह्मविष्णुशिवेन्द्रादि पदविश्राणन-
क्षमायै नमः

„ भुक्तिमुक्तिमहाभक्ति विरक्त्य-
द्वैतदायिन्यै नमः

„ निग्रहानुग्रहाध्यक्षायै नमः

„ ज्ञाननिर्णतदायिन्यै नमः ३०

„ परकायप्रवेशादि योगसिद्धि-
प्रदायिन्यै नमः

„ शिष्टसञ्जीवनप्रौढायै नमः

„ दुष्टसंहारसिद्धिदायै नमः

„ लीलाविनिर्मितानेककोटि-
ब्रह्माण्डमण्डलायै नमः

ॐ ४ एकस्यै नमः
,, अनेकात्मिकायै नमः
,, नानारूपिण्यै नमः
,, अर्धाङ्गनेश्वर्यै नमः
,, शिवशक्तिमय्यै नमः
,, नित्यशृङ्गारैकरसप्रियायै नमः ४०
,, तुष्टायै नमः
,, पुष्टायै नमः
,, अपरिच्छिन्नायै नमः
,, नित्ययौवनमोहिन्यै नमः
,, समस्तदेवतारूपायै नमः
,, सर्वदेवादिदेवतायै नमः
,, देवर्षि पितृसिद्धादि योगिनी-भैरवात्मिकायै नमः
,, निधिसिद्धि मणिमुद्रायै नमः
,, शस्त्रास्त्रायुधभासुरायै नमः
,, छत्रचामरवादित्रपताकव्यज-नाञ्छितायै नमः ५०
,, हस्त्यश्वरथपादातामात्यसेना-सुसेवितायै नमः
ॐ ४ पुरोहित कुलाचार्य गुरुशिष्यादि-सेवितायै नमः
,, सुधासमुद्रमध्योद्यत्सुरद्रुम-निवासिन्यै नमः
,, मणिद्वीपान्तरप्रोद्यत्कदम्ब-वनवासिन्यै नमः
,, चिन्तामणिगृहान्तस्थायै नमः

ॐ ४ मणिमण्टपमध्यगायै नमः
,, रत्नसिंहासनप्रोद्यच्छिवमञ्चाधि-शायिन्यै नमः
,, सदाशिवमहालिङ्गमूलसंघट्ट-योनिकायै नमः
,, अन्योन्यालिङ्गसंघर्षकण्ड-संक्षुब्धमानसायै नमः
,, कलोद्यद्बिन्दुकालिन्यातुर्य-नादपरंपरायै नमः ६०
,, नादान्तानन्दसन्दोहस्वयं-व्यक्तवचोमृतायै नमः
,, कामराजमहातन्त्ररहस्या-चारदक्षिणायै नमः
,, मकारपञ्चकोद्भूतप्रौढान्तो-ल्लाससुन्दर्यै नमः
,, श्रीचक्रराजनिलयायै नमः
,, श्रीविद्यामन्त्रविग्रहायै नमः
,, अखण्डसच्चिदानन्द-शिवशक्त्यैक्यरूपिण्यै नमः
,, त्रिपुरायै नमः
,, त्रिपुरेशान्यै नमः
,, महात्रिपुरसुन्दर्यै नमः
,, त्रिपुरावासरसिकायै नमः ७०
,, त्रिपुराश्रीस्वरूपिण्यै नमः
,, महापद्मवनान्तस्थायै नमः
,, श्रीमत्त्रिपुरमालिन्यै नमः

ॐ ४ महात्रिपुरसिद्धाम्बायै नमः
,, श्रीमहात्रिपुराम्बिकायै नमः
,, नवचक्रक्रमादेव्यै नमः
,, महात्रिपुरभैरव्यै नमः
,, श्रीमात्रे नमः
,, ललितायै नमः
,, बालायै नमः ८०
,, राजराजेश्वर्यै नमः
,, शिवायै नमः
,, उत्पत्तिस्थितिसंहारक्रमचक्र-
निवासिन्यै नमः
,, अर्धमेर्वात्मचक्रस्थायै नमः
,, सर्वलोकमहेश्वर्यै नमः
,, वल्मीकपुरमध्यस्थायै नमः
,, जम्बूवननिवासिन्यै नमः
,, अरुणाचल शृङ्गस्थायै नमः
,, व्याघ्रालयनिवासिन्यै नमः
,, श्रीकालहस्तिनिलयायै नमः ९०
,, काशीपुरनिवासिन्यै नमः
,, श्रीमत्कैलासनिलयायै नमः

ॐ ४ द्वादशान्तमहेश्वर्यै नमः
,, श्रीषोडशान्तमध्यस्थायै नमः
,, सर्ववेदान्तलक्षितायै नमः
,, श्रुतिस्मृतिपुराणेतिहासागम-
कलेश्वर्यै नमः
,, भूतभौतिकतन्मात्रदेवताप्राण-
हृन्मय्यै नमः
,, जीवेश्वरब्रह्मरूपायै नमः
,, श्रीगुणाढ्यायै नमः
,, गुणात्मिकायै नमः १००
,, अवस्थात्रयनिर्मुक्तायै नमः
,, वाग्रमोमामहीमय्यै नमः
,, गायत्रीभुवनेनेशानीदुर्गाकाल्यादि-
रूपिण्यै नमः
,, मत्स्यकूर्मवराहादिनानारूप-
विलासिन्यै नमः
,, महायोगीश्वराराध्यायै नमः
,, महावीरवरप्रदायै नमः
,, सिद्धेश्वरकुलाराध्यायै नमः
,, श्रीमच्चरणवैभवायै नमः

श्रीमहात्रिपुरसुन्दरीराजराजेश्वरी परदेवतार्पणमस्तु



## श्रीरस्तु

## श्रीचण्डिकानामावळिप्रारम्भः

ॐ ४ जयजयचामुण्डायै नमः
,, चण्डिकायै नमः
,, त्रिदशमकुटकोटि सङ्घट्टित-चरणारविन्दायै नमः
,, गायत्र्यै नमः
,, सावित्र्यै नमः
,, सरस्वत्यै नमः
,, महाहिकृताभरणायै नमः
,, भैरवरूपधारिण्यै नमः
,, प्रकटितदंष्ट्रायै नमः
,, घोरायै नमः
,, घोरानलज्वालामाला सहस्र-परिवृतायै नमः
,, महाट्टहास धवळित दिगन्तरायैनमः
,, दिवाकरसमप्रभायै नमः
,, कामरूपस्वरूपायै नमः
,, महामणिद्योतितप्रभासंपूर्ण-दिगन्तरायै नमः
,, सर्वायुधपरिपूर्णायै नमः
,, कपालहस्तायै नमः
,, गजाजिनोत्तरीयायै नमः
,, भूतभेताळबृन्दपरिवृतायै नमः
,, मधुकैटभमहिषासुरसेना महिषासुर धूम्रलोचन चण्डमुण्ड-रक्तबीजनिशुम्भशुम्भ दैत्य-कण्टकायै नमः
,, काळरात्र्यै नमः
,, महामायायै नमः
ॐ ४ शिवायै नमः
,, नित्यायै नमः
,, इन्द्राग्नि यमनिरुऋतिवरण वायु-कुबेरेशानब्रह्मविष्णुशिवस्तुत्यै नमः
,, त्रिभुवनधराधरायै नमः
,, वामायै नमः
,, ज्येष्ठायै नमः
,, रौद्रचम्बिकायै नमः
,, ब्राह्मीमाहेश्वरीकौमारीवैष्णवी-वाराहीनारसिंहीन्द्राणी-चामुण्डाशिवदूतीस्वरूपायै नमः
,, महाकालीमहालक्ष्मी-महासरस्वतीतिस्थितायै नमः
,, महोग्रविषोरगफणामणिमकुट-रत्नमहाज्वाला विराजितो-त्तमाङ्ग्यै नमः

ॐ ४ अमरपादपकल्पायै नमः
„ नवरत्नविधिकोशायै नमः
„ तत्वस्वरूपायै नमः
„ वाक्पाणिपादपायूपस्थशब्द-
स्पर्शरूपरसगन्धश्रोत्रत्वक्-
चक्षुर्जिह्वाघ्राणमध्यस्थितायै
नमः
ॐ ४ महाज्वालामहाविषोप-
विषघ्न्यै नमः
„ गन्धर्वविद्याराधितायै नमः
„ ऐंकारह्लींकारश्रींकारहस्तायै नमः

आं क्रों अनश्नपात्रे प्रवेशय २ द्रां शोषय २ द्रीं सुकुमारय सुकुमारय श्रीं सर्वं प्रवेशय सर्वं प्रवेशय त्रैलोक्योदग्रवर्तिनी मेकाग्रचित्तां वशी कुरु २ ऐं आं ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः ह्स्रां ह्स्रीं ह्स्रूं ह्स्फ्रें ह्स्रौं ह्स्रः। मम सर्वकार्याणि साधय साधय हुं फट् स्वाहा। राजद्वारे श्मशाने च विवादे शत्रुसङ्कटे। द्यूते च रणमध्ये च सर्वकार्यजयी भवेत् ॥

चण्डिकाहृदयं गुह्यं त्रिसन्ध्यं कीर्तयेद्द्विजः।
सर्वकामप्रदं नृणां भुक्ति मुक्ति च विन्दति ॥



श्रीचण्डिकापरदेवतार्पणमस्तु

## — नैवेद्यविधिः —

### — अथ धूपः —

वनस्पतिरसैर्दिव्यैर्गन्धाढ्यै स्सुमनोहरैः।
कपिलाघृतसंयुक्त धूपोयं प्रतिगृह्यताम् ॥

ललितामहात्रिपुरसुन्दर्यै नमः। धूपमाघ्रापयामि।

— दीपः —

सुप्रकाशो महादीप सर्वत्र तिमिरापहः ।
सबाह्याभ्यन्तरज्योतीर्दीपोयं प्रतिगृह्यताम् ।।
ललितामहात्रिपुरसुन्दर्यै नमः । दीपं दर्शयामि ।

— अथ नैवेद्यम् —

देव्यग्रे चतुरश्रमण्डलं निर्माय। तत्र स्वर्णादिपात्रे नानाविधान्नं व्यञ्जन-भरितं षड्रसोपेतं पञ्चविधनैवेद्यं निवेश्य मूलेन निरीक्ष्य। हस्तेन प्रोक्ष्य। ओं जुं सः वौषट्। अनेन सप्तवारमभिमन्त्र्य। तेन जलेन प्रोक्ष्य। चक्र-मुद्रां प्रदर्श्य। यमिति वायुबीजेन अधोमुखवामकरेण सप्तवारं जपन्। तद्गत-दोषान्संशोष्य। रमिति वह्निबीजेन अधोमुखेन दक्षकरेण संदह्य। वं इति अमृतीकृत्य। मूलेन विशेषार्घ्यबिन्दुभिः प्रोक्ष्य। मूलेन सप्तवारमभिमन्त्र्य ओं क्लीं कामदुघे अमोघे वरदे विच्चे स्फुर २ श्रीं परश्रीं इति कामधेनुविद्यया धेनुमुद्रयाऽमृतीकृत्य। देव्यै पाद्यार्घ्याचमनं दत्वा। मूलेन देवीं त्रिस्सन्तर्प्य। पात्रान्तरे विशेषार्घ्यबिन्दुं किञ्चिद् गृहीत्वा। वामांगुष्ठेन नैवेद्यपात्रं स्पृशन्। मूलमुच्चार्य। साङ्गायै सायुधायै सवाहनायै सपरिवारायै सर्वात्मिकायै महा-त्रिपुरसुन्दरी श्रीपादुकायै नैवेद्यं कल्पयामि नमः। इति नैवेद्योपरि चुळुकोदकं विक्षिप्य। कृताञ्जलिः।

हेमपात्रगतं दिव्यं परमान्नं सुसंस्कृतम्।
पञ्चधा षड्रसोपेतं गृहाण परमेश्वरि ।।

प्रागुक्तमनुना निवेद्य। सत्यन्त्वर्तेन परिषिञ्चामि। देवसवितः प्रसुव। अमृतोपस्तरणमसि। इति देव्या हस्ते जलं दत्वा। वामकरेण ग्रासमुद्रां विकचोत्पलसन्निभां दर्शयन्। दक्षिणहस्तेन प्राणादि पंचमुद्रा प्रदर्शयन्। ऐं प्राणाय स्वाहा। क्लीं अपानाय स्वाहा। सौः व्यानाय स्वाहा। ऐं क्लीं उदानाय स्वाहा। ऐं क्लीं सौः समानाय स्वाहा। मूलं ऐं आत्मतत्व-

व्यापिका श्रीमहात्रिपुरसुन्दरी तृप्यतु । क्लीं विद्यातत्वव्यापिका श्रीमहात्रिपुरसुन्दरी तृप्यतु । सौः शिवतत्वव्यापिका श्रीमहा .... तृप्यतु । ऐं क्लीं सौः सर्वतत्वव्यापिका श्रीमहा .... तृप्यतु ।

चित्पात्रे सद्धविस्सौख्यं विविधानेकभक्षणम् ।
निवेदयामि ते देवि सानुगायै जुषाण तत् ।।

मधुवाता ऋतायते मधुक्षरन्ति सिन्दवः माध्वीर्नस्सन्त्वोषधीः । मधुनक्तमुतोषसि मधुमत्पार्थिवगं रजः मधुद्यौरस्तु नः पिता मधुमान्नो वनस्पतिर्मधुमागं अस्तु सूर्यः माध्वीर्गावो भवन्तु नः । पुष्पाञ्जलिं विन्यस्य । नैवेद्यजातं तादात्म्येन समर्पयेत् ।।

नमस्ते देवदेवेशि सर्वतृप्तिकरं परम्
अन्यानिवेदितं शुद्धं प्रकृतिस्थं सुशीतलम्
अमृतानन्दसंपूर्णं गृहाण जलमुत्तमम् ।।
(इति निवेद्य – भुञ्जानां परदेवतां ध्यायेत् ।।)

ब्रह्मेशाद्यैस्सरसमभितस्सूपविष्टैस्समन्ता
द्दिव्याकल्पैर्ललितरमणिवीज्यमाना सखीभिः ।
नर्मक्रीडा प्रहसनपरा हासयन्ती सुरेशान्
भुङ्क्ते पात्रे कनकखचिते षड्रसान्तोकधात्री ।।

भुक्तवतीं सुतृप्तां देवीं ध्यात्वा । अमृतापिधानमसीत्युत्तरापोशनं दत्वा । हस्तप्रक्षाळनं गण्डूषं । पादप्रक्षाळनम् । आचमनीयम् । ताम्बूलमानीय । प्राग्वत्प्रोक्ष्य । वनस्पतिदैवत्याय ताम्बूलाय नमः । श्री महात्रिपुरसुन्दरी श्री ........ ताम्बूलं कल्पयामि नमः ।।

मूलं – तमालदळकर्पूरपूगभागसमन्वितम् ।
एलापत्र सुसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ।।

इति निवेद्य ।। कर्पूरारतिः ।

कुळदीपम् ॥ अन्तस्तेजो बहिस्तेज एकीकृत्यामितप्रभम् ।
त्रिधा दीपं परिभ्राम्य कुळदीपं निवेदये इति ॥

— धूपमन्त्रः —

ओं धूरसि धूर्व धूर्वन्तं धूर्वतं योस्मान्धूर्वति तं धूर्वयं वयं धूर्वाम स्त्वं देवाना मसि सस्नितमं पप्रितमञ्जुष्टतमं वह्नितमं देवहूतम मह्रुतमसि हविर्धानं दृगं हस्वसाह्वा मित्रस्य त्वा चक्षुषा प्रेक्षे माभेर्मा संविक्था मात्वाहिगं सिषम् । श्रीमहादेव्यै नमः । धूप माघ्रापयामि ।

— दीपमन्त्रः —

उद्दीप्य स्वजातवेदोपघ्नन्निऋर्ऋतिं मम । पशूंश्च मह्यमावह जीवनं च दिशोदश । मानोहिगं सीर्जातवेदोगामश्वं पुरुषं जगत् । अभिभ्रदघ्न आगहि श्रियामा परिपातय ॥ श्री महादेव्यै नमः । दीपं दर्शयामि ॥

— रथारतिमन्त्रः —

रथे अक्षेषु वृषभस्य वाजे । वातेपर्जन्ये वरुणस्य शुष्मे । इन्द्रं या देवी सुभगा जजान । सान आगन्वर्चसा संविदाना श्रीमहा .... नमः । रथदीपं दर्शयामि ॥

— नक्षत्रारतिमन्त्रः —

अग्निर्नः पातु कृत्तिकाः । नक्षत्रं देवमिन्द्रियम् । इदमासां विचक्षणं हविरासं जुहोतन । यस्य भान्ति रश्मयो यस्य केतवः । यस्येमा विश्वा भुवनानि सर्वास कृत्तिकाभिरभिसंवसानः । अग्निर्नोदेवस्सुविते दधातु ॥ श्रीमहा .... नमः । नक्षत्रदीपं दर्शयामि ॥

— द्व्यारतिमन्त्रः —

द्वाभ्याम् । द्विप्रतिष्ठो हि । वसुभ्यस्त्वा रुद्रेभ्यस्त्वादितेभ्यस्त्वेत्याह । यथा यजुरेवैतत् । द्विहार्तिदीपं दर्शयामि ।

— त्र्यारतिमन्त्रः —

त्रीणी त्रीणी वै देवानामृद्धानि। त्रीणि छन्दाग्ं सि त्रीणि सवनानि। त्रय इमे लोकाः। बुध्यामेव तद्वीर्यं एषु लोकेषु प्रतितिष्ठति। श्रीमहा .... नमः। त्रिहारतिदीपं दर्शयामि॥

—चतुर्हारतिमन्त्रः —

चतुर्हूतो हवैनामैषः। तं वा एतं चतुर्हूतग्ं सन्तम्। चतुर्होतेत्या-चक्षते परोक्षेण। परोक्ष प्रिया इवहि देवाः। श्री .... नमः। चतुर्हारति दीपं दर्शयामि।

— पञ्चहारतिमन्त्रः —

पंचारं चक्रं परिवर्तते पृथु। हिरण्यज्योति स्सरिरस्य मध्ये। अजस्र ज्योतिर्नभसा सर्पदेति। स न इन्द्रः कामवरं ददातु। श्री महा .... नमः। पञ्चहारतिदीपं दर्शयामि॥

गौर्यै नमः। मनोन्मन्यै नमः। अम्बिकायै नमः। भवान्यै नमः। त्रिपुरायै नमः इति सम्पूज्य। धेनुयोनिमुद्रे प्रदर्श्य। जातवेदसे सुनवामसोममरा-तीयतो निदहाति वेदः। स नः पर्षदति दुर्गाणि विश्वा नावेवसिन्धुं दुरिता-त्यग्निः। श्रीमहात्रिपुरसुन्दरी .... नमः। गौरीदीपं समर्पयामि॥ ता मग्नि-वर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टां दुर्गां देवीग्ं शरणमहं प्रपद्ये सुतरसि तरसे नमः। श्रीमहा .... नमः। मनोन्मनीदीपं दर्शयामि॥ अग्ने त्वं पारयानव्यो अस्मान् स्वस्तिभिरतिदुर्गाणि विश्वा। पूश्च पृथ्वी बहुलान उर्वी भवातोकाय तनयाय शं योः। श्रीमहा .... नमः। अम्बिकादीपं दर्शयामि॥ विश्वानिनोदुर्गहा जातवेदस्सिन्धुं वनावा दुरितातिपर्षि। अग्ने अत्रिपन्मनसा-गृणानोस्माकं भूत्वविताातनूनां श्रीमहा .... नमः। भवानीदीपं दर्शयामि॥

पृतनाजितगं सहमान मुग्रमग्निगं हुवेम परमात्सदस्थात् ।। सनः पर्षदति दुर्गाणि विश्वा क्षामद्देवो अतिदुरितात्यग्निः ।। श्रीमहा .... नमः । त्रिपुरा दीपं दर्शयामि ।।

नित्यमङ्गळहारतिः ।। गौरीमिमाय सलिलानितक्षती एकपदी द्विपदी सा चतुष्पदी । अष्टापदी नवपदी बभूवुषी । सहस्राक्षरा परमे व्योमन् श्रीमहा .... नमः । नित्यमङ्गळहारतिदीपं दर्शयामि ।।

— कर्पूरहारतिः —

सोमो वा एतस्य राज्यमादत्ते । यो राजा सन् राज्यो वा सोमेन यजते देवसुवा मेतानि हवींगंषि भवन्ति । एतावन्तो वै देवानागं सवाः । त एवास्मै सवान्प्रयच्छन्ति । त एनं पुनस्सुवन्ते राज्याय देवसू राजा भवति ।।

।। इति दीपाराधनविधिः ।।

— मन्त्रपुष्पम् —

अञ्जलौ पुष्पाण्यादाय मन्त्रपूर्वम् –

शिवे शिव सुशीतलामृततरङ्ग
गन्धोल्लसन्नवावरणदेवते नवनवामृतस्यन्दिनि ।
गुरुक्रमपुरस्कृते गुण शरीरनित्योज्वले
षडङ्गपरिवारिते कलित एष पुष्पाञ्जलिः ।

इति पुष्पाञ्जलिं समर्पयेत् ।।

— कामकळाध्यानम् —

अथ बिन्दुना मुखं । बिन्दुद्वयेन कुचम् । सपरार्थेन योनिरिति । कामकलात्मिकां ध्यात्वा । देवीं शक्तिबीजं श्रीदेव्या हृदयत्वेन भावयेत् ।

मिहिरबिन्दुमुखीं तदधोल्लसच्छशि हुताशन बिन्दुयुगस्तनीम्
सह परार्थ कळारसनास्पदां भजत सत्यमिमां परदेवताम् ।
अग्रबिन्दुपरिकल्पिताननामन्यबिन्दुयुगळस्तनद्वयाम्
नादबिन्दुरशनागुणस्पदां नौमि ते परशिवे परां कळाम् ॥

ईकारोर्ध्वगतोबिन्दुर्मुखं भानु रथोगतौ ।
स्तनौ दहनशीतांशू योनिर्ह्यूर्ध्वकळा भवेत् ॥

— अथ बलिप्रधानम् —

देव्याः दक्षभागे सामान्योदकेन त्रिकोणवृत्त चतुरश्रात्मकं मण्डलं परिकल्प्य ३ ऐं व्यापकमण्डलाय नमः इत्यभ्यर्च्य । अर्धभुक्तपूरितोदकं सक्षीरादित्रयं पात्रं तत्र विन्यस्य । ३ ॐ ह्रीं सर्वविघ्नकृद्भ्यस्सर्वभूतेभ्यो हुं फट् स्वाहा । इति त्रिः पठित्वा दक्षकरार्पितं वामकरतत्वमुद्रास्पृष्टं सलिलं बल्युपरि दत्वा ॥ वामपार्ष्णि घातकरास्फोटौ कुर्वाणः । समुदञ्चित वक्त्रो बाणमुद्रया बलिं भूतैर्ग्राहितं विभाव्य प्रणमेत् ॥

॥ इति बलिप्रधानविधिः ॥

अथ प्रदक्षिणाः – अजेशशक्तिगणसभास्कराणां क्रमादिमाः । वेदा ४ अर्ध २ चन्द्र १ वह्नि ३ अद्रि ७ संख्यास्युस्सर्वसिद्धये ॥ प्रदक्षिणनमस्कारानन्तरं जपं निर्वर्त्य देव्यै समर्पयेत् ।

ॐ गणेशग्रहनक्षत्रयोगिनीं राशिरूपिणीम् ।
देवीं मन्त्रमयीं नौमि मातृकां पीठरूपिणीम् ॥

प्रणमामि महादेवीं मातृकां परमेश्वरीम् ।
कालहल्लोहलोल्लोलकलनाशमकारिणीम् ॥

यदक्षरैकमात्रेपि संसिद्धे स्पर्धते नरः ।
रवितार्क्ष्येन्दुकन्दर्प शङ्करानलविष्णुभिः ॥

यदक्षरशशिज्योत्स्नामण्डितं भुवनत्रयम् ।
वन्दे सर्वेश्वरीं देवीं महाश्रीसिद्धिमातृकाम् ॥

यदक्षरमहासूत्रे प्रोतमेतज्जगत्त्रयम् ।
ब्रह्माण्डादि कटाहान्तं तां वन्दे सिद्धमातृकाम् ॥

यदेकादशमाधारं भीजं कोणत्रयोद्भवम् ।
ब्रह्माण्डादि कटाहान्तं जगदद्यापि दृश्यते ॥

अकचादिटतोन्नद्धपयशाक्षरवर्गिणीम् ।
ज्येष्ठाङ्गबाहु हृत्पृष्ठ कटिपादनिवासिनीम् ॥

तामीकाराक्षरोद्धारां सारात्सारां परात्पराम् ।
प्रणमामि महादेवीं परमानन्दरूपिणीम् ।

अद्यापि यस्या जानन्ति न मनागपि देवताः ।
केयं कस्मात् क्व केनेति सरूपारूपभावनाम् ॥

वन्दे तां महदक्षय्यक्षकाराक्षररूपिणीम् ।
देवीं कुलकलोल्लासं प्रोल्लसन्तीं परां शिवाम् ॥

वर्गानुक्रमयोगेन यस्यां मात्राष्टकं स्थितम् ।
वन्दे तामष्टवर्णोत्थां महासिद्ध्यष्टकेश्वरीम् ॥

कामपूर्णजकाराख्य श्रीपीठान्तर्निवासिनीम् ।
चतुराज्ञाकोशभूतां नौमि श्रीत्रिपुरामहम् ॥

इति द्वादशभि श्श्लोकै स्तवनं सर्वसिद्धिकृत् ।
देव्यास्त्वखण्डरूपायाः स्तवनं तव तथ्यतः ॥

भूमौस्खलितपादानां भूमिरेवावलम्बनम् ।
त्वयि जातापराधानां त्वमेव शरणं शिवे ॥

जपो जल्पः शिल्पं सकलमपि मुद्राविरचना गतिः
प्रादक्षिण्यक्रमणमशनाद्याहुतिविधिः ।
प्रणामस्संवेशस्सुखमखिलमात्मार्पणदृशा
सपर्यापर्यायस्तव भवतु यन्मे विलसितम् ॥

पिता माता भ्राता गुरुरथसुहृद्बान्धवजनः
प्रभुस्तीर्थं कर्माविकल मिहचामुत्र च हितम् ।
विशुद्धाविद्या वा पदमपि च तत्प्राप्यमपि मे
त्वमेव श्रीमातस्त्व पिमि गतशङ्कस्सुखतमः ॥

दृशाद्राघीयस्याधरदलित नीलोत्पल रुचा
दवीयां सन्दीनं स्नपय कृपया मामपि शिवे ।
अनेनायं धन्यो भवति न च ते हानिरियता
वने वा हर्म्ये वा समकरनिपातो हिमकरः ॥

हे सद्रूपिणि हे चिदर्चिरुदये हे कामराजप्रिये
हे भण्डासुरहन्त्रि हेऽद्भुतनिधे हेऽनङ्गसञ्जीविनि ।
हे विश्वप्रसवित्रि हे सकरुणे हे दीनरक्षामणे
हे ह्रीमल्ललिताम्बिके परशिवे मां पाहि डिम्भं निजम् ॥

नमो हेमाद्रिस्थे शिवसति नमश्श्रीपुरगते
नमः पद्माटव्यां कुतुकिनि नमो रत्नगृहगे ।
नमः श्री चक्रस्थेऽखिलमयि नमो बिन्दुनिलये
नमः कामेशाङ्कस्थितिमतिनमस्तेऽम्बललिते ॥

जय जय जगदम्ब भक्तवश्ये
जय जय सान्द्रकृपावशान्तरङ्गे ।

जय जय निखिलार्थ दानशौण्डे
जय जय ललिताम्ब चित्सुखाब्धे ।।

षडङ्गदेवता नित्यादि व्याद्योघत्रयीं गुरून् ।
नमाम्यायुधदेवीश्च शक्तीश्चावरणस्थिताः ।।

विशालाक्ष्यम्बिकाधीन वामाङ्काय शिवात्मने
अमुकानन्दनाथाय मम श्री गुरवे नमः ।।

बालभावानुसारेण ममेदं हि विचेष्टितम् ।
मातृवात्सल्यसदृशं त्वया देवि विधीयताम् ।।

इति स्तुत्वा ततः शक्तिं पूजयेत् । अथ शक्त्यलाभे श्रीदेवीं शक्तिभावनया पूजयेत् ।।

— यथा —

३ सुवासिनीस्वरूपिण्यै श्रीललितायै नमः । अमुकं कल्पयामीति पाद्यार्घ्याचमनानि दत्वा ।।

अळिपात्रमिदं तुभ्यं दीयते पिशितान्वितम् ।
स्वीकृत्य सुभगे देवि श्रियं देहि रिपून् दह ।।

ततः कर्ता देव्या सावशेषतया पीतचषकं स्वीकृत्य ।

वत्स तुभ्यं मया दत्तं पीतशेषं कुळामृतम् ।
पिब शत्रून् हनिष्यामि तवाऽभीष्टं ददामि ते ।।

इति देवीं उक्तवतीं विभाव्य । ँआर्द्रं ज्वलति ज्योतिरहमस्मि । ज्योतिर्ज्वलति ब्रह्माहमस्मि । योहमस्मि ब्रह्माहमस्मि । अहमेवाहं मां

जुहोमि स्वाहेति जुहुयात् ।। इति सुवासिनीपूजाविधिः । ततः — समष्टि-मन्त्रेण पुष्पाञ्जलिं दत्वा — पुनः पात्रमादाय गुरुपादुकामभ्यर्च्य — तत्वानि शोधयेत् । पश्चात् सामान्योदकेन किञ्चिद् गृहीत्वा ।।

साधुवाऽसाधुवा कर्म यद्यदाचरितं शिवे
तत्सर्वं कृपया देवि गृहाणाराधनं ममेति ।
देवनाथगुरो स्वामिन् देशिकस्वात्मनायक
त्राहि त्राहि कृपासिन्धो पूजां पूर्णतरां कुरु ।।

इति देवीवामहस्ते पूजां समर्प्य । शङ्खमुद्धृत्य । देव्युपरि त्रिः परिभ्राम्य तज्जलं हस्ते समादाय सामाजिकानात्मानं च मूलेन तीर्थनिर्माल्यं स्वीकृत्य ।

ज्ञानतोऽज्ञानतो वापि यन्मयाचरितं शिवे
तव कृत्यमिति ज्ञात्वा क्षमस्व परमेश्वरि ।
क्षमस्व देवदेवेशि त्रिपुरे देवपूजिते
तव पादाम्बुजे नित्यं निश्चला भक्तिरस्तु मे ।।

इति क्षमाप्य । सर्वासामावरणदेवतानां श्रीदेव्यङ्गे निलयं विभाव्य खेचरीं बध्वोद्वास्य तेजोरूपेण परिणतां श्रीदेवीं पूर्ववत् हृदयं नीत्वा तत्र च मूर्तिं पञ्चथा उपचर्य पुनरात्माऽभिन्नसंविद्रूपेण विभावयेत् ।।

हृत्पद्मकर्णिकामध्ये शिवेन सहशङ्करि ।
प्रविश त्वं महादेवि सर्वैरावरणैः सह ।।

इति विसर्जनम् ।

ततः संपूजकानां परिपालकानां यतेन्द्रियाणां च तपोधनानाम् ।
देशस्य राष्ट्रस्य कुलस्य राज्ञः करोतु शान्तिं भगवान् कुळेशः ।

नन्दन्तु साधककुलान्यणिमादिसिद्धाः
शापाः पतन्तु समयद्विषियोगिनीनाम् ।
सा शांभवी स्फुरतु कापि समाप्यवस्था
यस्यां गुरोः चरणपङ्कजमेव लभ्यम् ॥

शिवाद्यवनि पर्यन्तं ब्रह्मादि स्तंबसंयुतम् ।
कालज्ञादिशिवान्तं च जगद्यज्ञेन तृप्यतु ॥

इत्यादि शान्तिश्लोकान् पठित्वा विशेषार्घ्यपात्रं मूलेनामस्तकमुद्धृत्य पात्रान्तरेणादाय । आर्द्रं ज्वलतीति जुहुयात् ।

॥ इति नित्यपूजाक्रमः ॥

॥ पूजाखण्डं सम्पूर्णम् ॥



श्रीरस्तु

श्रीमहात्रिपुरसुन्दर्यै नमः

# स्तोत्रखण्डप्रारम्भः

## – आदौ पञ्चदशखड्गमालामन्त्रोद्धारः –

ॐ मालामन्त्रं प्रवक्ष्यामि सर्वसिद्धिप्रदायकम् ।
एकत्रिंशसहस्रार्णं त्रिलोकीमोहनक्षमम् ।
यस्य स्मरणमात्रेण पूजासिद्धिः प्रजायते ॥

ऐं ह्लीं श्रीं ॐ ॐ नमस्त्रिपुरसुन्दरीत्यादि नमस्ते नमस्ते स्वाहेत्यन्तं जप्त्वा ध्यायेत् ॥

ॐ श्रीं ह्लीं ऐं शिवाद्यवनिपर्यन्तं ब्रह्मादिस्तम्बपर्यन्तं कालाग्न्यादि शिवान्तं च सकलभयनिवारणसिद्धौ विनियोगः ॥

सरस्वत्या लक्ष्म्या विधिहरिसपत्नो विहरते ।
रतेः पातिव्रत्यं शिथिलयति रम्येण वपुषा ।
चिरञ्जीवन्नेव क्षपितपशुपाशव्यतिकरः ।
परानन्दाभिख्यं रसयति रसं त्वद्भक्तजनवान् ।
मालामन्त्रविधानन्तु प्रवक्ष्याम्यानुपूर्वशः ।
सर्वसंकल्पसंसिद्धि स्सुतरां ज्ञानतो भवेत् ॥

नवावरणदेवीनां ललितायाः महौजसः ।
एकत्र गणनारूपो वेदवेदाङ्गगोचरः ॥

सर्वागमरहस्यार्थस्मरणात्पापनाशिनी ।
ललिताया महेशान्या माला विद्या महीयसी ॥

नरवश्यं नरेन्द्राणां वश्यं नारीवशंकरम् ।
अणिमादिगणैश्वर्यैरञ्जनं पापभञ्जनम् ॥

तत्तदावरणस्थायि देवतामन्त्रबृन्दजम् ।
मालामन्त्रमिमं गुह्यं परंधामप्रकाशकम् ॥

शक्तिमाला पञ्चधा स्याच्छिवमाला च तादृशी ॥
द्वन्द्वमाला च तादृक्च एवं पञ्चदश क्रमात् ॥

एकैकललितामन्त्रवर्णादभ्युदिता इमाः ।
शुद्धा नमोन्तास्स्वाहान्ता स्तर्पणान्ता जयान्तिकाः ॥

प्रवृत्तयः पञ्चधा स्युर्मालासु निखिलास्वपि ।
ऋषिच्छन्दो देवताभिर्विनियोगः पृथक्पृथक् ॥

सर्वागमेषु कथ्यन्ते गुह्यास्सप्ताष्टमालिकाः ।
सप्ताष्टमालामाहात्म्यं वक्तुं वर्षशतैरपि ॥

न शक्यते वरारोहे पञ्चभिर्वदनैरपि ।
शुद्धा समृद्धिरूपेण जप्येति प्रविधीयते ॥

नमसा पूजनं देवि पादुकां पूजयामि ते ।
स्वाहान्ते होमरचना तर्पयामीति तर्पणम् ॥

जयद्वन्द्वसमायोगात् स्तुतिरुक्तातु पञ्चमी ।
एवं पञ्चविधा योगा मालानां त्रितयं भवेत् ॥

अतः पञ्चदशख्याता माला श्रीललितामनोः ।
शुद्धाया शक्तिमालाया य उद्धारः कृतो मया ॥

तत्र भेदः केवलं तु वक्ष्यते वरवर्णिनि ।
नमस्स्वाहाद्वये प्राप्ते चतुर्थी सम्प्रदायिका ॥

तर्पणे तु द्वितीयास्याज्जयासमृद्धिरेव सा ।
शक्त्यादि पञ्च त्रितय मुपस्थादीन्द्रियेश्वराः ॥

अरुणाद्या द्वादशाख्याः प्रातरर्कादियोजनात् ।
ऋषयः पञ्चदशथा तेषां नामानि कीर्तये ॥

उपस्थाऽपायुवत्पाणि वाणीघ्राणं च जिह्विका ।
दृक्चर्मकर्णाहङ्कारबुद्धि हृद्विषया अमी ॥

प्रधानपुंभ्यां सार्थं तु तत्पश्चाच्छृणु पार्वति ।
अरुणश्चैव मित्रश्च धाताचार्यंमभास्करौ ॥

अंशुश्चैव भगेन्द्रश्च विवस्वान् पूषभानुमान् ।
सविता त्वष्टृ विष्णू च प्रातरर्कादयस्त्रयः ॥

ब्रह्मादित्रितयाकारा अथ छन्दांसि मच्छृणु ।
गायत्र्युष्णिगनुष्टुप्च बृहती पंक्तिरेव च ॥

त्रिष्टुप्च जगती चैव तथातिजगतीति च ।
शर्वरी सातिपूर्वा स्यादष्टयत्यष्टी तथा स्मृतिः ॥

धृतिश्चातिधृतिश्चैव कृतिः पञ्चदशेरिताः ।
एकैकमालिकायास्तु पृथग्वक्ष्ये मुनीश्वरि ॥

देवता ललिता मन्त्रवर्णाद्याह्वयशोभिते ।
ललिता कामगा दाहि भिन्ना भिन्ना ह्यर्चिता ॥

सर्वत्र ललिता मन्त्रा देवतात्वेन भाषिता ।
सत्वादिगुणभेदेन भोगमोक्षादिभेदतः ॥

कादिमन्त्रस्थवर्णानां शिष्यस्य समुदाहृतम् ।
कामेश्वरश्च कामेशी चैकवीरस्तथैकला ॥

ईश्वरश्चेश्वरी देवी ललिता लक्षतारका ।
हृदयश्चैव हृल्लेखा हलिनी हलिका मराट् ॥

सरस्वती च सर्वज्ञः कमलाकालमर्दनः ।
हरनाथः कामशिवो ललिता हरिवल्लभा ॥

लक्ष्मीश्चैव ललज्जिह्वो हिरण्या हृदयेश्वरः ।
सर्वेश्वरोपि सकलजननी ललिताम्बिका ॥

करुणाकर कामेशः कामकोटिश्च तद्वधूः ।
लीलावती च ललिता कामो लावण्यनायकः ॥

हरीश्वरी हिरण्याख्य बाहुस्तद्भर्तृ शंकरः ।
एवं मिथुनरूपेण देवताः परिकीर्तिताः ॥

विनियोगं प्रवक्ष्यामि सावधानमना श्शृणु ।
खड्गश्च पादुकासिद्धिरञ्जनं बलसिद्धियुक् ॥

वाग्देहलोहसिद्धिश्च अणिमाद्यष्टसिद्धयः ।
वश्याकर्षणसम्मोहस्तम्भनानि च सर्वशः ॥

अथ सर्वसमृद्धिश्च नित्यानन्दश्च मुक्तिदः ।
एताः पञ्चदशप्रोक्ता मालानां फलतां गताः ॥

त्रितारतारहृदया आदावन्ते च शाम्भवि ।
समस्ताद्यादि रुद्राणि सर्वमेतन्न भिद्यते ॥

शुद्धशक्त्याश्च माला तु प्रकृतिर्विकृतिः परा ।
सप्ताष्टमालाजपनं प्रत्यहं कर्तुमक्षमः ॥

प्रकृतिं शुद्धशक्त्याख्यां त्रिसन्ध्यं परिकीर्तयेत् ।
सर्वमालाजपफलं समस्तं पुरुषोऽश्नुते ॥

एकवारं प्रतिदिनं दशपञ्चस्रजं जपन् ।
महापातकनिर्मुक्त स्सर्वपुण्यमवाप्नुयात् ॥

सप्ताष्टमालामावर्त्य सप्ताष्टदिवसावधि ।
अत्यसाध्यामपि वधू माकर्षयति मोहितः ॥

मासमेकं समावर्त्य सप्ताष्टस्रजमुत्तमाम् ॥
असाध्यसाध्याच्छ्रीविद्ये मुच्यते स गदाधरात् ।

सप्ताष्टमालिका चापि नित्यं पुण्यमयाकृतिः ॥
जलेष्वग्निरिव त्रस्य वीक्ष्यते भूतपूर्वकैः ।

पूजाहोमस्तर्पणं स्यान्मन्त्रशक्तिप्रभावतः ॥
पुष्पाच्छतोयाभावेऽपि जपमात्रेण सिध्यति ॥

बालानां बुद्धिबोधार्थं मालासु निखिलास्वपि ।
ग्रन्थस्योक्तप्रकारेण दिङ्मात्रेण प्रदर्श्यते ॥

मालामन्त्रैरमीभिस्तु मन्त्रिता भूतिपांसवः ।
क्षिप्ता भूतादि भूतानां मूर्ध्नि भूतविनाशकाः ॥

ज्वरिणां च ज्वरा यान्ति वाता वातकिनामपि ।
असाध्यरोगग्रस्तानां रोगा यान्ति रिपुक्षयः ॥

एतन्मन्त्रिततोयेन भस्मना वासमुक्षणात् ।
पठित्वा हस्तस्पर्शाद्वा नात्र कार्या विचारणा ॥

सप्ताष्टमालासंख्याभिर्मन्त्रयित्वा घटोदकम् ।
सप्ताहं सेवनं कृत्वा वन्ध्या पुत्रवती भवेत् ॥

इति ललितासौभाग्यहृदयाख्यायां ललितापरिशिष्टोक्तप्रमेयव्यक्तायां पञ्चदशमालामन्त्रसाधारणक्रमः समाप्तः ॥



॥ श्रीरस्तु ॥

श्रीमद्राजराजेश्वर्यै नमः

## – श्रीदेवीखड्गमालास्तोत्रप्रारम्भः –

### — समष्टिमाला —

अस्यश्री सौभाग्यहृदयपञ्चदशमालामहामन्त्रस्य अरुणादित्यादयो ऋषयः गायत्र्यादि पञ्चदशश्छंदांसि श्रीपञ्चदशविद्यामाला मण्डलरूपिणी श्रीललिता विद्यामहाभट्टारिका देवता खड्गादि मोक्षान्तपञ्चदशसिद्धौ विनियोगः । मूलविद्यया न्यासं कृत्वा ध्यायेत् ॥

तटिल्लेखा तन्वीं तपनशशिवैश्वानरमयीम्
निषण्णां षण्णामप्युपरि कमलानां तव कळाम् ।
महापद्माटव्यां मृदितमलमायेन मनसा
महान्तः पश्यन्तो दधति परमाह्लादलहरीम् ॥

स्वदेहोद्भूताभिर्घृणिभिरणिमाद्याभिरभितो
निषेव्ये नित्ये त्वामहमिति सदा भावयति यः ।
किमाश्चर्यं तस्य त्रिणयनसमृद्धिं तृणयतो ।
महासंवर्ताग्निर्विरचयति नीराजनविधिम् ॥

ॐ ऐं ह्रीं श्रीं नमस्त्रिपुरसुन्दरि हृदयादेवि शिरोदेवि शिखादेवि महाश्रीचक्र नगरसाम्राज्यलक्ष्मि नमस्ते नमस्ते स्वाहा । श्रीं ह्रीं ऐं ॐ ॥

॥ इति समष्टिमाला ॥

अस्यश्री शुद्धशक्तिमालामन्त्रस्य उपस्थेन्द्रियाधिष्ठायी अरुणादित्य ऋषिः गायत्री छन्दः सात्विकककारभट्टारकपीठस्थित कामेश्वरांकनिलया कामेश्वरी ललिता महाभट्टारिका देवता ऐं बीजं क्लीं शक्तिः सौः कीलकं मम खड्ग-सिध्यर्थे जपे विनियोगः । मूलेन करहृदयादिन्यासः ॥

ध्यानम् – तादृशं खड्गमाप्नोति येन हस्तस्थितेन वै ।
अष्टादशमहाद्वीपसम्राड्भोक्ता भविष्यति ॥

ॐ ऐं ह्रीं श्रीं । ॐ नमस्त्रिरसुन्दरि हृदयदेवि शिरोदेवि शिखादेवि कवचदेवि नेत्रदेवि अस्त्रदेवि कामेश्वरि भगमालिति नित्यक्लिन्ने भेरुण्डे वह्निवासिनि महावज्रेश्वरि शिवदूति त्वरिते कुळसुन्दरि नित्ये नीलपताके विजये सर्वमंगळे ज्वालामालिनि चित्रे महानित्ये परमेश्वरपरमेश्वरिमयि मित्रेशमयि षष्ठिशमयि ओड्डीशमयि चर्यानन्दनाथमयि लोपामुद्रामयि अगस्त्यमयि काल-तापनमयि धर्माचार्यनाथमयि मुक्तकेशेश्वरमयि दीपकळानाथमयि विष्णुदेवमयि

प्रभाकरदेवमयि तेजोदेवमयि मनोजदेवमयि कल्याणदेवमयि रत्नदेवमयि वासुदेवमयि श्रीरामानन्दनाथमयि अणिमासिद्धे लघिमासिद्धे महिमासिद्धे ईशित्वसिद्धे वशित्वसिद्धे प्राकाम्यसिद्धे भुक्तिसिद्धे इच्छासिद्धे प्राप्तिसिद्धे सर्वकामसिद्धे ब्राह्मि माहेश्वरि कौमारि वैष्णवि वाराहि महेन्द्रि चामुण्डे महालक्ष्मीश्वरि सर्वसंक्षोभिणि सर्वविद्राविणि सर्वाकर्षिणि सर्ववशङ्करि सर्वोन्मादिनि सर्वमहांकुशे सर्वखेचरि सर्वबीजे सर्वयोने सर्वत्रिखण्डे त्रैलोक्यमोहनचक्रस्वामिनि प्रकटयोगिनि कामाकर्षिणि बुद्ध्याकर्षिणि अहङ्काराकर्षिणि शब्दाकर्षिणि स्पर्शाकर्षिणि रूपाकर्षिणि रसाकर्षिणि गन्धाकर्षिणि चित्ताकर्षिणि धैर्याकर्षिणि स्मृत्याकर्षिणि नामाकर्षिणि बीजाकर्षिणि आत्माकर्षिणि अमृताकर्षिणि शरीराकर्षिणि सर्वाशापरिपूरकचक्रस्वामिनि गुप्तयोगिनि अनङ्गकुसुमे अनङ्गमेखले अनङ्गमदने अनङ्गमदनातुरे अनङ्गरेखे अनङ्गवेगिनि अनङ्गांकुशे अनङ्गमालिनि सर्वसंक्षोभणचक्रस्वामिनि गुप्ततरयोगिनि सर्वसंक्षोभिणि सर्वविद्राविणि सर्वाकर्षिणि सर्वाह्लादिनि सर्वसंमोहिनि सर्वस्तम्भिनि सर्वजम्भिनि सर्ववशंकरि सर्वरञ्जनि सर्वोन्मादिनि सर्वार्थसाधिनि सर्वसंपत्तिपूरणि सर्वमन्त्रमयि सर्वद्वन्द्वक्षयंकरि सर्वसौभाग्यदायकचक्रस्वामिनि सम्प्रदाययोगिनि ।। सर्वसिद्धिप्रदे सर्वसम्पत्प्रदे सर्वप्रियकरि सर्वमंगळकारिणि सर्वकामफलप्रदे सर्वदुःखविमोचनि सर्वमृत्युप्रशमनि सर्वविघ्ननिवारिणि सर्वांगसुन्दरि सर्वसौभाग्यदायिनि सर्वार्थसाधकचक्रस्वामिनि कुळयोगिनि ।। सर्वज्ञे सर्वशक्ते सर्वैश्वर्यप्रदायिनि सर्वज्ञानमयि सर्वव्याधिविनाशिनि सर्वाधारस्वरूपे सर्वपापहरे सर्वानन्दमयि सर्वरक्षास्वरूपिणि सर्वेप्सितफलप्रदे सर्वरक्षाकरचक्रस्वामिनि निगर्भयोगिनि ।। वशिनि कामेश्वरि मोदिनि विमले अरुणे जयिनि सर्वेश्वरि कौळिनि सर्वरोगहरचक्रस्वामिनि रहस्ययोगिनि ।। बाणिनि चापिनि पाशिनि अंकुशिनि महाकामेश्वरि महावज्रेश्वरि महाभगमालिनि महात्रिपुरसुन्दरि सर्वसिद्धिप्रदचक्रस्वामिनि अतिरहस्ययोगिनि ।। श्रीमहाभट्टारिके सर्वानन्दमयचक्रस्वामिनि परापररहस्ययोगिनि त्रिपुरे त्रिपुरेशि त्रिपुरसुन्दरि त्रिपुरवासिनि त्रिपुराश्री त्रिपुरमालिनि त्रिपुरासिद्धे त्रिपुराम्बे महात्रिपुरसुन्दरि महामाहेश्वरि महामहाराज्ञि महामहाशक्ते

महामहागुप्ते महामहाज्ञप्ते महामहानन्दे महामहास्कन्दे महामहास्पन्दे महामहाशये महामहाश्रीचक्रनगरसाम्राज्यलक्ष्मि नमस्ते नमस्ते स्वाहा ।। श्रीं ह्रीं ऐं ॐ ।।

।। इति शुद्धशक्तिमाला ।।

अस्यश्री शुद्धशक्तिनमोन्तमाला महामन्त्रस्य पायिन्द्रियाधिष्ठायी मित्रादित्यऋषिः उष्णिक्छन्दः राजसएकारभट्टारकपीठस्थित एकवीरनाम कामेश्वरांकनिलया एकला नाम कामेश्वरी ललिता भट्टारिका देवता पादुका सिद्धौ विनियोगः । मूलेन षडङ्गन्यासः । सर्वमालिका सुछायमेव न्यासक्रमः ।।

ध्यानम् – तादृशं पादुकायुग्म माप्नोति तव भक्तिमान् ।
यदाक्रमणमात्रेण क्षणात्त्रिभुवनभ्रमः ।।

ॐ ऐं ह्रीं श्रीं ॐ नमस्त्रिपुरसुन्दर्यै नमः । हृदयदेव्यै नमः । शिरोदेव्यै नमः । शिखादेव्यै नमः ।। महाश्रीचक्रनगरसाम्राज्यलक्ष्मि नमस्ते नमस्ते स्वाहा नमः ।। श्रीं ह्रीं ऐं ॐ ।।

।। इति शुद्धशक्तिनमोन्तमाला समाप्ता ।।

अस्यश्री शुद्धशक्तिस्वाहान्तमाला महामन्त्रस्य पादेन्द्रियाधिष्ठायी धात्र्यादित्यऋषिः अनुष्टुप्छन्दः तामसईकारभट्टारकपीठस्थित ईश्वरनामकामेश्वरांक निलया ईश्वरी नाम कामेश्वरी ललिता भट्टारिकादेवता अञ्जनसिद्धौ विनियोगः । मूलेन करांगन्यासः ।।

ध्यानम् – सिद्धाञ्जनं समासाद्य तेनाञ्चितविलोचनः ।
सिद्धिं पश्यति सर्वत्र भक्तस्तेन समृद्धिमान् ।।

ॐ ऐं ह्रीं श्रीं ॐ नमस्त्रिपुरसुन्दर्यै स्वाहा । हृदयदेव्यै स्वाहा । शिरोदेव्यै स्वाहा । शिखादेव्यै स्वाहा । महाश्रीचक्रनगरसाम्राज्यलक्ष्म्यै नमस्ते नमस्ते स्वाहा । । श्रीं ह्रीं ऐं ॐ ।।

।। इति शुद्धशक्तिस्वाहान्तमाला समाप्ता ।।

अस्यश्री शुद्धशक्तितर्पणान्तमालामहामन्त्रस्य पाणीन्द्रियाधिष्ठायी अर्यमादित्यऋषिः बृहती छन्दः भोगदलकारभट्टारकपीठस्थितलक्षसारनामक कामेश्वरांकनिलया लक्षसारका नाम कामेश्वरि ललिता भट्टारिका देवता बलसिद्धौ विनियोगः । मूलेन करांगन्यासः ।।

ध्यानम् – बलसिद्धि महत्प्राप्य पाताळतलयोगिनः ।
दृष्ट्वा ततः प्राप्य सिद्धि तव भक्त स्सुखी भवेत् ।।

ॐ ऐं ह्रीं श्रीं ॐ नमस्त्रिपुरसुन्दरीं तर्पयामि । हृदयदेवीं तर्पयामि । शिरोदेवीं तर्पयामि । शिखादेवीं तर्पयामि । महाश्रीचक्रनगरसाम्राज्यलक्ष्मीं तर्पयामि । नमस्ते नमस्ते स्वाहा । श्रीं ह्रीं ऐं ॐ ।।

।। इति शुद्धशक्तितर्पणान्तमाला समाप्ता ।।

अस्यश्री शुद्धशक्तिजयान्तमालामहामन्त्रस्य वागिन्द्रियाधिष्ठायी भास्करादित्यऋषिः पंक्तिश्छंदः मोक्षदह्रींकारभट्टारकपीठस्थितहृदयनाम कामेश्वरांक निलय हृल्लेखा नाम कामेश्वरी नाम महाभट्टारिकादेवता वाक्सिद्धौ विनियोगः । मूलेन करहृदयन्यासः ।।

ध्यानम् – वाक्सिद्धिर्विविधा प्रोक्ता शापानुग्रहदैविका ।
महाकवित्वरूपा च भक्त स्तेन समृद्धिमान् ।।

ॐ ऐं ह्रीं श्रीं ॐ नमस्त्रिपुरसुन्दरि जय जय हृदयदेवि जय जय शिरोदेवि जय जय शिखादेवि जय जय महाश्रीचक्रनगरसाम्राज्यलक्ष्मी जय जय नमस्ते नमस्ते स्वाहा । श्रीं ह्रीं ऐं ॐ ।।

।। इति शुद्धशक्तिजयान्तमाला समाप्ता ।।

अस्यश्री शुद्धशिवमाला महामन्त्रस्य घ्राणेन्द्रियाधिष्ठायी अंशादित्य ऋषिः त्रिष्टुप्छन्दः सात्त्विकहकारभट्टारकपीठस्थितहलिनिनाम ललिता विभूषि-

षितांकनिलयहृलिनाम कामेश्वर महाभट्टारको देवता देहशुद्धौ विनियोगः । मूलेन करांगन्यासः ॥

ध्यानम् – तथा शुध्यति ते भक्त शरीरं येन पार्वति ।
शुद्धकांचनवत्तस्य कदापि क्वापि न क्षयः ॥

ॐ ऐं ह्रीं श्रीं ॐ नमस्त्रिपुरसुन्दर हृदयादेव शिरोदेव शिखादेव कवच दव नेत्रदेव अस्त्रदेव कामेश्वर भगमालिन् नित्यक्लिन्न भेरुण्डवह्निवासिन् महावज्रेश्वर शिवदूत त्वरित कुळसुन्दर नित्यनीलपताक विजय सर्वमङ्गळ ज्वालामालिन् चित्रमहानित्य परमेश्वर परमेश्वरमय मित्रेशमय षष्ठीशमय ओड्डीशमय चर्यानन्दनाथिमय लोपामुद्रामय अगस्त्यमय कालतापनमय धर्माचार्य नाथमय मुक्तकेशेश्वरमय दीपकलानाथमय विष्णुदेवमय प्रभाकरदेवमय तेजोदेवमय मनोजदेवमय कल्याणदेवमय रत्नदेवमय वासुदेवमय श्रीरामानन्दनाथमय अणिमासिद्धे लघिमासिद्धे महिमासिद्धे ईशित्वसिद्धे वसित्वसिद्धे प्राकाम्यसिद्धे भुक्तिसिद्धे इच्छासिद्धे प्राप्तिसिद्धे सर्वकामसिद्धे ब्राह्म माहेश्वर कौमार वैष्णव वाराह माहेन्द्र चामुण्ड महालक्ष्मीश्वर सर्वसंक्षोभिन् सर्वविद्राविन् सर्वाकर्षिन् सर्ववशंकर सर्वोन्मादिन् सर्वमहाकुश सर्वखेचर सर्वबीज सर्वयोने सर्वत्रिखण्डत्रैलोक्यमोहनचक्रस्वामिन् प्रकटयोगिन् कामाकर्षिन् बुध्याकर्षिन् अहंकाराकर्षिन् शब्दाकर्षिन् स्पर्शाकर्षिन् रूपाकर्षिन् रसाकर्षिन् गन्धाकर्षिन् चित्ताकर्षिन् धैर्याकर्षिन् स्मृत्याकर्षिन् नामाकर्षिन् बीजाकर्षिन् आत्माकर्षिन् अमृताकर्षिन् शरीराकर्षिन् सर्वाशापरिपूरकचक्रस्वामिन् गुप्तयोगिन् ॥ अनगकुसुम अनङ्गमेखल अनङ्गमदन अनङ्गमदनातुर अनङ्गरेख अनङ्गवेगिन् अनङ्गांकुश अनङ्गमालिन् सर्वसंक्षोभणचक्रस्वामिन् गुप्ततरयोगिन् ॥ सर्वसंक्षोभिन् सर्वविद्राविन् सर्वाकर्षिन् सर्वाह्लादिन् सर्वसम्मोहिन् सर्वस्तम्भिन् सर्वजम्भिन् सर्ववशंकर सर्वरञ्जन सर्वोन्मादिन् सर्वार्थसाधक सर्वसंपत्तिपूरण सर्वमन्त्रमय सर्वद्वन्द्वक्षयङ्कर सर्वसौभाग्यदायक चक्रस्वामिन् संप्रदाययोगिन्

सर्वसिद्धिप्रद सर्वसम्पत्प्रद सर्वप्रियंकर सर्वमङ्गळकारिन् सर्वकामफलप्रद सर्वदुःखविमोचन सर्वमृत्युप्रशमन सर्वविघ्ननिवारिन् सर्वांगसुन्दर सर्वसौभाग्य-दायिन् सर्वार्थसाधकचक्रस्वामिन् कुळयोगिन्। सर्वज्ञ सर्वशक्ते सर्वैश्वर्यप्रदायिन् सर्वज्ञानमय सर्वव्याधिविनाशिन् सर्वाधारस्वरूप सर्वपापहर सर्वानन्दमय सर्वरक्षास्वरूपिन् सर्वेप्सितफलप्रद सर्वरक्षाकरचक्रस्वामिन् निगर्भयोगिन् वशिन् कामेश्वर मोदिन् विमल अरुण जयिन् सर्वेश्वर कौळिन् सर्वरोगहरचक्रस्वामिन् रहस्ययोगिन् बाणिन् चापिन् पाशिन् अंगुळिन् महाकामेश्वर महावज्रेश्वर महाभगमालिन् महात्रिपुरसुन्दर सर्वसिद्धिप्रदचक्रस्वामिन् अतिरहस्ययोगिन्। श्रीमहाभट्टारक सर्वानन्दमय चक्रस्वामिन् परापररहस्ययोगिन्। त्रिपुर त्रिपुरेश त्रिपुरसुन्दर त्रिपुरवासिन् त्रिपुराश्री त्रिपुरमालिन् त्रिपुरासिद्ध त्रिपुराम्ब महात्रिपुरसुन्दर महामहेश्वर महामहाराज महामहाशक्ते महामहागुप्ते महामहाज्ञप्ते महामहानन्द महामहास्कन्द महामहास्पन्द महामहाशय महामहाश्रीचक्रनगरसाम्राज्यमहालक्ष्मी नमस्ते नमस्ते स्वाहा। श्रीं ह्रीं ऐं ॐ॥

॥ इति शुद्धशिवमाला समाप्ता ॥

अस्यश्री शुद्धशिवनमोन्तमाला महामन्त्रस्य जिह्वेन्द्रियाधिष्ठायी भगेन्द्रादित्यऋषिः जगती छन्दः राजससकार भट्टारक पीठस्थित सरस्वतीनाम ललिताविभूषिताङ्गनिलय सर्वज्ञनाम कामेश्वरो महाभट्टारको देवतालोहसिद्धौ विनियोगः ॥

ध्यानम् – त्वद्भुक्तहस्तस्पर्शेन लोह मष्टविधं शिवे ।
काञ्चनत्व मवाप्नोति एतस्य शिवतुल्यता ॥

ॐ ऐं ह्रीं श्रीं ॐ नमस्त्रिपुरसुन्दराय नमः। हृदयदेवाय नमः। शिरोदेवाय नमः। शिखादेवाय नमः। महाश्रीचक्रनगरसाम्राज्यलक्ष्मी नमस्ते नमस्ते स्वाहा। श्रीं ह्रीं ऐं ॐ ॥

॥ इति शुद्धशिवनमोन्तमाला समाप्ता ॥

अस्यश्री शुद्धशिवस्वाहान्तमाला महामन्त्रस्य चक्षुरिन्द्रियाधिष्ठायी विवस्वदादित्यऋषिः अतिजगतीछन्दः तामसककारभट्टारकपीठस्थित कमला नाम ललिता विभूषितांकनिलय कालमर्दननाम कामेश्वर महाभट्टारको देवता अणिमादिसिद्धौ विनियोगः । मूलेन करांगन्यासः ॥

ध्यानम् – स्युरणुत्वमहत्वाद्या स्स्वेच्छामात्रप्रकल्पिताः ।
तव भक्तशरीराणा मणिमादि गुणा स्मृताः ॥

ओं ऐं ह्रीं श्रीं ओं नमस्त्रिपुरसुन्दराय स्वाहा । हृदयदेवाय स्वाहा । शिरोदेवाय स्वाहा । शिखादेवाय स्वाहा । महाश्रीचक्रनगरसाम्राज्यलक्ष्म्यै स्वाहा । नमस्ते नमस्ते स्वाहा । श्रीं ह्रीं ऐं ॐ ॥

॥ इति शुद्धशिवस्वाहान्तमाला समाप्ता ॥

अस्यश्री शुद्धशिवतर्पणान्तमाला महामन्त्रस्य त्वगिन्द्रियाधिष्ठायी पूषादित्यऋषिः शक्वरीछन्दः भोगदहकारभट्टारकपीठस्थितहरिवल्लभा नाम ललिता विभूषितांकनिलयहरनाथनाम कामेश्वर महाभट्टारको देवता सर्ववश्यसिद्धौ विनियोगः । मूलेन करांगन्यासः ॥

ध्यानम् – शरीरमर्धं सप्राणं निवेद्य निजभृत्यवत् ।
तव भक्तान्निषेवन्ते वशीभूता नृपादयः ॥

ॐ ऐं ह्रीं श्रीं ॐ नमस्त्रिपुरसुन्दरं तर्पयामि । हृदयदेवं तर्पयामि । शिरोदेवं तर्पयामि । शिखादेवं तर्पयामि । महाश्रीचक्रनगरसाम्राज्यलक्ष्मी नमस्ते नमस्ते स्वाहा । श्रीं ह्रीं ऐं ॐ ॥

॥ इति शुद्धशिवतर्पणान्तमाला समाप्ता ॥

अस्यश्री शुद्धशिवजयान्तमाला महामन्त्रस्य श्रोत्रेन्द्रियाधिष्ठायी सवित्रादित्यऋषिः अतिशक्वरी छन्दः मोक्षदलकारभट्टारकपीठस्थितलक्ष्मीनाम ललिता विभूषितांकनिलय ललज्जिह्वानाम कामेश्वर महाभट्टारको देवता सर्वाकर्षणसिद्धौ विनियोगः । मूलेन करांगन्यासः ॥

ध्यानम् – बहिः प्राकारसंगुप्ता विगळेन नियन्त्रिताः ।
त्वद्भक्ता कृष्यमाणास्तु योषितस्संवदन्ति हि ॥

ॐ ऐं ह्रीं श्रीं ॐ नमस्त्रिपुरसुन्दर जय जय । हृदयदेव जय जय । शिरोदेव जय जय । शिखादेव जय जय । महाश्रीचक्र नगरसाम्राज्यलक्ष्मी नमस्ते नमस्ते स्वाहा । श्रीं ह्रीं ऐं ॐ ॥

॥ इति शुद्धशिवजयान्तमाला समाप्ता ॥

अस्यश्री शुद्धशक्तिशिवमिथुनमालामहामन्त्रस्य अहंकारेन्द्रियाधिष्ठायी त्वष्ट्रादित्यऋषिः अष्टिश्छन्दः सात्विकह्लींकारपीठस्थित हिरण्याः नाम ललिता विभूषितांकनिलय हृदयेश्वर नाम कामेश्वर महाभट्टारको देवता सर्वसम्मोहनसिद्धौ विनियोगः । मूलेन करांगन्यासः ॥

ध्यानम् – अम्बिके तव भक्ताना मवलोकनमात्रतः ।
किं कर्तव्यविमूढा स्स्यु र्नरनारीनृपादयः ॥

ॐ ऐं ह्रीं श्रीं ॐ नमस्त्रिपुरसुन्दरि नमस्त्रिपुरसुन्दर ॐ हृदयदेवि ॐ हृदयदेव शिरोदेवि शिरोदेव शिखादेवि शिखादेव कवचदेवि कवचदेव नेत्रदेवि नेत्रदेव अस्त्रदेवि अस्त्रदेव कामेश्वरि कामेश्वर भगमालिनि भगमालिन् नित्यक्लिन्ने नित्यक्लिन्न भेरुण्डे भेरुण्ड वह्निवासिनि वह्निवासिन् महावज्रेश्वर

महावज्रेश्वर शिवदूति शिवदूत त्वरिते त्वरित कुळसुन्दरि कुळसुन्दर नित्ये नित्य नीलपताके नीलपताक विजये विजय सर्वमङ्गळे सर्वमङ्गळ ज्वालामालिनि ज्वालामालिन् चित्रे चित्र महानित्ये महानित्य परमेश्वर परमेश्वरमयि परमेश्वर परमेश्वरमय मित्रेशमयि मित्रेशमय षष्टीशमयि षष्टीशमय ओड्डीशमयि ओड्डीशमय चर्यानन्दनाथमयि चर्यानन्दनाथमय लोपामुद्रामयि लोपामुद्रामय अगस्त्यमयि अगस्त्यमय कालतापनमयि कालतापनमय धर्माचार्यनाथमयि धर्माचार्यनाथमय मुक्तकेशीश्वरमयि मुक्तकेशीश्वरमय दीपकलानाथमयि दीपकलानाथमय विष्णुदेवमयि विष्णुदेवमय प्रभाकरदेवमयि प्रभाकरदेवमय तेजोदेवमयि तेजोदेवमय मनोजदेवमयि मनोजदेवमय कल्याणदेवमयि कल्याणदेवमय रत्नदेवमयि रत्नदेवमय वासुदेवमयि वासुदेवमय श्रीरामानन्दनाथमयि श्रीरामानन्दनाथमय अणिमासिद्धे अणिमासिद्धे लघिमासिद्धे लघिमासिद्धे महिमासिद्धे महिमासिद्धे ईशित्वसिद्धे ईशित्वसिद्धे वशित्वसिद्धे वशित्वसिद्धे प्राकाम्यसिद्धे प्राकाम्यसिद्धे भुक्तिसिद्धे भुक्तिसिद्धे इच्छासिद्धे इच्छासिद्धे प्राप्तिसिद्धे प्राप्तिसिद्धे सर्वकामसिद्धे सर्वकामसिद्धे ब्राह्मि ब्राह्म माहेश्वरि माहेश्वर कौमारि कौमार वैष्णवि वैष्णव वाराहि वाराह माहेन्द्रि माहेन्द्र चामुण्डे चामुण्ड महालक्ष्मीश्वरि महालक्ष्मीश्वर सर्वसंक्षोभिणि सर्वसंक्षोभिन् सर्वविद्राविणि सर्वविद्राविन् सर्वाकर्षिणि सर्वाकर्षिन् सर्ववशङ्करि सर्ववशङ्कर सर्वोन्मादिनि सर्वोन्मादिन् सर्वमहांकुशे सर्वमहांकुश सर्वखेचरि सर्वखेचर सर्वबीजे सर्वबीज सर्वयोने सर्वयोने सर्वत्रिखण्डे सर्वत्रिखण्ड त्रैलोक्यमोहनचक्रस्वामिनि त्रैलोक्यमोहनचक्रस्वामिन् प्रकटयोगिनि प्रकटयोगिन् कामाकर्षिणि कामाकर्षिन् बुद्ध्याकर्षिणि बुद्ध्याकर्षिन् अहङ्काराकर्षिणि अहङ्काराकर्षिन् शब्दाकर्षिणि शब्दाकर्षिन् स्पर्शाकर्षिणि स्पर्शाकर्षिन् रूपाकर्षिणि रूपाकर्षिन् रसाकर्षिणि रसाकर्षिन् गन्धाकर्षिणि गन्धाकर्षिन् चित्ताकर्षिणि चित्ताकर्षिन् धैर्याकर्षिणि धैर्याकर्षिन् स्मृत्याकर्षिणि स्मृत्याकर्षिन् नामाकर्षिणि नामाकर्षिन् बीजाकर्षिणि बीजाकर्षिन् आत्माकर्षिणि आत्माकर्षिन् अमृताकर्षिणि अमृताकर्षिन् शरीराकर्षिणि शरीराकर्षिन् सर्वाशापरिपूरकचक्रस्वामिनि सर्वाशापरि-

पूरकचक्रस्वामिन् गुप्तयोगिनि गुप्तयोगिन् अनङ्गकुसुमे अनङ्गकुसुम अनङ्ग-मेखले अनङ्गमेखल अनङ्गमदने अनङ्गमदन अनङ्गमदनातुरे अनङ्गमदनातुर अनङ्गरेखे अनङ्गरेख अनङ्गवेगिनि अनङ्गवेगिन् अनङ्गांकुशे अनङ्गांकुश अनङ्गमालिनि अनङ्गमालिन् सर्वसंक्षोभणचक्रस्वामिनि सर्वसंक्षोभणचक्र-स्वामिन् गुप्ततरयोगिनि गुप्ततरयोगिन् । सर्वसंक्षोभिणि सर्वसंक्षोभिन् सर्व-विद्राविणि सर्वविद्राविन् सर्वाकर्षिणि सर्वाकर्षिन् सर्वाह्लादिनि सर्वाह्लादिन् सर्वसंमोहिनि सर्वसंमोहन सर्वस्तंभिनि सर्वस्तंभिन् सर्वजंभिनि सर्वजंभिन् सर्व-वशङ्करि सर्ववशङ्कर सर्वरञ्जनि सर्वरञ्जन सर्वोन्मादिनि सर्वोन्मादिन् सर्वार्थ-साधिनि सर्वार्थसाधिन् सर्वसंपत्तिपूरणि सर्वसंपत्तिपूरण सर्वमन्त्रमयि सर्वमन्त्र-मय सर्वद्वन्द्वक्षयङ्करि सर्वद्वन्द्वक्षयङ्कर सर्वसौभाग्यदायकचक्रस्वामिनि सर्व-सौभाग्यदायकचक्रस्वामिन् संप्रदाययोगिनि संप्रदाययोगिन् । सर्वसिद्धिप्रदे सर्वसिद्धिप्रद सर्वसंपत्प्रदे सर्वसंपत्प्रद सर्वप्रियंकरि सर्वप्रियंकर सर्वमङ्गळ-कारिणि सर्वमङ्गळकारिन् सर्वकामफलप्रदे सर्वकामफलप्रद सर्वदुःखविमोचिनि सर्वदुःखविमोचन सर्वमृत्युप्रशमनि सर्वमृत्युप्रशमन सर्वविघ्ननिवारिणि सर्वविघ्न निवारिन् सर्वाङ्गसुन्दरि सर्वाङ्गसुन्दर सर्वसौभाग्यदायिनि सर्वसौभाग्यदायिन् सर्वार्थसाधकचक्रस्वामिनि सर्वार्थसाधकचक्रस्वामिन् कुळयोगिनि कुळयोगिन् सर्वज्ञे सर्वज्ञ सर्वशक्ते सर्वशक्ते सर्वैश्वर्यप्रदायिनि सर्वैश्वर्यप्रदायिन् सर्वज्ञान-मयि सर्वज्ञानमय सर्वव्याधिविनाशिनि सर्वव्याधिविनाशिन् सर्वाधारस्वरूपे सर्वाधारस्वरूप सर्वपापहरे सर्वपापहर सर्वानन्दमयि सर्वानन्दमय सर्वरक्षा-स्वरूपिणि सर्वरक्षास्वरूपिन् सर्वेप्सितफलप्रदे सर्वेप्सितफलप्रद सर्वरक्षाकर चक्रस्वामिनि सर्वरक्षाकरचक्रस्वामिन् निगर्भयोगिनि निगर्भयोगिन् । वशिनि वशिन् कामेश्वरि कामेश्वर मोदिनि मोदिन् विमले विमल अरुणे अरुण जयिनि जयिन् सर्वेश्वरि सर्वेश्वर कौळिनि कौळिन् सर्वरोगहरचक्रस्वामिनि सर्वरोग-हरचक्रस्वामिन् रहस्ययोगिनि रहस्ययोगिन् । बाणिनि बाणिन् चापिनि चापिन् पाशिनि पाशिन् अंकुशिनि अंकुशिन् महाकामेश्वरि महाकामेश्वर महा वज्रेश्वरि महावज्रेश्वर महाभगमालिनि महाभगमालिन् महात्रिपुरसुन्दरि महा-

त्रिपुरसुन्दर सर्वसिद्धिप्रदचक्रस्वामिनि सर्वसिद्धिप्रदचक्रस्वामिन् अतिरहस्य-योगिनि अतिरहस्ययोगिन् । श्रीमहाभट्टारिके श्रीमहाभट्टारक सर्वानन्दमय चक्रस्वामिनि सर्वानन्दमयचक्रस्वामिन् परापररहस्ययोगिनि परापररहस्ययोगिन् त्रिपुरे त्रिपुर त्रिपुरेशि त्रिपुरेश त्रिपुरसुन्दरि त्रिपुरसुन्दर त्रिपुरवासिनि त्रिपुर-वासिन् त्रिपुराश्रि त्रिपुराश्रि त्रिपुरमालिनि त्रिपुरमालिन् त्रिपुरासिद्धे त्रिपुरा-सिद्धे त्रिपुराम्बे त्रिपुराम्ब महात्रिपुरसुन्दरि महात्रिपुरसुन्दर महामाहेश्वरि महा-माहेश्वर महामहाराज्ञि महामहाराज महामहाशक्ते महामहाशक्ते महामहागुप्ते महामहागुप्ते महामहाज्ञप्ते महामहाज्ञप्ते महामहानन्दे महामहानन्द महामहा स्कन्दे महामहास्कन्द महामहास्पन्दे महामहास्पन्द महामहाशये महामहाशय महाश्रीचक्रनगरसाम्राज्यलक्ष्मि नमस्ते नमस्ते स्वाहा ॥ श्रीं ह्रीं ऐं ओम् ॥

॥ इति शुद्धशक्तिशिवमिथुनमाला समाप्ता ॥

अस्यश्री शुद्धशक्तिशिवमिथुननमोन्तमालामहामन्त्रस्य बुद्धीन्द्रियाधि-ष्ठायी विष्ण्वादित्यऋषिः अत्यष्टिश्छंदः राजससकारभट्टारकपीठस्थित सकल जननी नाम ललिता विभूषितांकनिलय सर्वेश्वरनाम महाकामेश्वर महाभट्टारको देवता सर्वस्तम्भनसिद्धौ विनियोगः । मूलेन करांगन्यासः ॥

ध्यानम् – तव भक्तप्रभावेन शरीरेन्द्रियचेतसा ।
साध्यान्तु स्तम्भतां स्तम्भा स्स्वकार्यविरहात्मकाः ॥

ओं ऐं ह्रीं श्रीं ओं नमस्त्रिपुरसुन्दर्यै नमः । ओं नमस्त्रिपुरसुन्दराय नमः । हृदमदेव्यै नमः । हृदयदेवाय नमः । शिरोदेव्यै नमः । शिरोदेवाय नमः । महा-श्रीचक्रनगरसाम्राज्यलक्ष्मि नमस्ते नमस्ते स्वाहा । श्रीं ह्रीं ऐं ओं ॥

॥ इति शुद्धशक्तिशिवमिथुननमोन्तमाला समाप्ता ॥

अस्यश्री शुद्धशक्तिशिवमिथुनस्वाहान्तमालामहामन्त्रस्य मन इन्द्रिया-धिष्ठायी ब्रह्मरूपी प्रातरादित्यऋषिः धृतिश्छंदः तामसककारभट्टारकपीठस्थित-

कामकोटिनाम ललिता विभूषितांकनिलय करुणाकरनाम कामेश्वर महाभट्टारको देवता सर्वसमृद्धिसिद्धौ विनियोगः । मूलेन करांगन्यासः ॥

ध्यानम् – धर्मश्चार्थश्च कामश्च त्रिवर्गोऽयं शरीरिणः ।
अप्रयासेन सिद्धिस्यात्तव भक्तस्य शोभने ॥

ओं ऐं ह्रीं श्रीं ओं नमस्त्रिपुरसुन्दर्यै स्वाहा । ओं नमस्त्रिपुरसुन्दराय स्वाहा । हृदयदेव्यै स्वाहा । हृदयदेवाय स्वाहा । शिरोदेव्यै स्वाहा । शिरोदेवाय स्वाहा । महाश्रीचक्रनगरसाम्राज्यलक्ष्मि नमस्ते नमस्ते स्वाहा । श्रीं ह्रीं ऐं ओं ॥

॥ इति शुद्धशक्तिशिवमिथुनस्वाहान्तमाला समाप्ता ॥

अस्यश्री शुद्धशक्तिशिवमिथुनतर्पणान्तमालामहामन्त्रस्य प्रकृतीन्द्रियाधिष्ठायी नारायणरूपी मध्याह्नादित्यऋषिः अतिधृतिश्छंदः भोगदलकारभट्टारक पीठस्थित लीलावतीनाम ललिताविभूषितांकनिलयलावण्यनायकनाम कामेश्वर महाभट्टारको देवता भोगसिद्धौ विनियोगः । मूलेन करांगन्यासः ॥

ध्यानम् – अलौकिकं लौकिकं च द्विविधं सुखमण्डलम् ।
न दुर्लभं परशिवे त्वत्पादाम्भोजसङ्गिनाम् ॥

ओं ऐं ह्रीं श्रीं ओं नमस्त्रिपुरसुन्दरीं तर्पयामि । त्रिपुरसुन्दरं तर्पयामि । हृदयदेवीं तर्पयामि । हृदयदेवं तर्पयामि । शिरोदेवीं तर्पयामि । शिरोदेवं तर्पयामि । महाश्रीचक्रनगरसाम्राज्यलक्ष्मी नमस्ते नमस्ते स्वाहा । श्रीं ह्रीं ऐं ओम् ॥

॥ इति शुद्धशक्तिशिवमिथुनतर्पणान्तमाला समाप्ता ॥

अस्यश्री शुद्धशक्तिशिवमिथुनजयान्तमाला महामन्त्रस्य पुरुषेन्द्रियाधिष्ठायी महेश्वररूपी सायमादित्यऋषिः कृतिश्छंदः मोक्षदह्रींकारपीठस्थित

हृरीश्वरीनाम ललिता विभूषितांकनिलय हिरण्यबाहुनाम कामेश्वरमहाभट्टारको देवता मोक्षसिद्धौ विनियोगः । मूलेन करांगन्यासः ॥

ध्यानम् – या देवता भोगकरी सा न मोक्षाय कल्पते ।
मोक्षदा न हि भोगाय ललिता तद्द्वयास्पदम् ॥
ललिताभक्तियुक्तानां भोगमोक्षैककारणम् ॥

ओं ऐं ह्रीं श्रीं ओं नमस्त्रिपुरसुन्दरि जय जय त्रिपुरसुन्दर जय जय हृदयदेवि हृदयदेव जय जय शिरोदेवि जय जय शिरोदेव जय जय महाश्रीचक्र नगरसाम्राज्यलक्ष्मी नमस्ते नमस्ते स्वाहा । श्रीं ह्रीं ऐं ओम् ॥

॥ इति शुद्धशक्तिशिवमिथुनजयान्तमाला समाप्ता ॥

॥ इति पञ्चदशमाला समाप्ताः ॥

अस्यश्री सुवर्णकुसुमांजलिमालामहामन्त्रस्य सकलेन्द्रियाधिष्ठायी श्रीदक्षिणामूर्ति ऋषिः गायत्रीछंदः सात्विक-राजस-तामस-भोगमोक्षदपञ्चदशविद्या भट्टारकपीठस्थितपरमशिवांकनिलया कामेश्वरी महाभट्टारिका देवता सर्वसिद्धौ विनियोगः । मूलेन करांगन्यासः ॥

ध्यानम् – स्वदेहोद्भूताभिर्घृणिभिरणिमाद्याभिरभितो
निषेवे नित्ये त्वामह मिति सदा भावयति यः ।
किमाश्चर्यं तस्य त्रिणयनसमृद्धि तृणयतो
महासंवर्तकाग्नि विरचयति नीराजनविधिम् ॥

तटिल्लेखा तन्वीं तपनशशिवैश्वानरमयीं
निषण्णां षण्णामप्युपरि कमलानां तव कळां ।
महापद्माटव्यां मदितमलमायेन मनसा
महान्तः पश्यन्तो दधति पर माह्लादलहरीम् ॥

ऐं ह्रीं श्रीं ओं नमस्त्रिपुरसुन्दरि हृदयदेवि शिरोदेवि शिखादेवि। महा-श्रीचक्रनगरसाम्राज्यलक्ष्मी नमस्ते नमस्ते स्वाहा ॥

॥ इति सुवर्णकुसुमाञ्जलिमाला समाप्ता ॥

एषा विद्या महासिद्धिदायिनी स्मृतिमात्रतः ।
अग्निवातमहाक्षोभे राज्ञो राष्ट्रस्य विप्लवे ॥

लुण्ठने तस्करभये संग्रामे सलिलप्लवे ।
समुद्रयान विक्षोभे भूतप्रेतादिजे भये ॥

डाकिनी पूतना यक्षरक्षः कूश्माण्डजे भये ।
अपस्मार ज्वरव्याधि मृत्यून्मादादिजे भये ॥

मित्रभेदे ग्रहभये व्यसनेष्वाभिचारिके ।
अन्येष्वपि च दोषेषु मालामन्त्रं पठेन्नरः ॥

सर्वोपद्रवनिर्मुक्त साक्षाच्छिवसमो भवेत् ।
आपत्काले नित्यपूजां विस्तरात्कर्तुमक्षमः ॥

एकवारं पठेदेनं सर्वपूजाफलं भवेत् ।
न वा वरुणदेवीनां ललिताया महौजसः ॥

एकत्र गणनारूपो वेदवेदाङ्गगोचरः ।
सर्वागमरहस्यार्थं स्मरणात्पापनाशिनी ॥

ललिताया महेशान्या माला विद्या महीयसी ।
नरवश्यं नरेन्द्राणां वश्यं नारीवशङ्करम् ॥

अणिमादि गणैश्वर्यं रञ्जनं पापभञ्जनम् ।
तत्तदावरणस्थायि देवता मन्त्रबृन्दजम् ॥

मालामन्त्रमिमं गुह्यं परन्धाम प्रकाशकम् ।
तस्माद्गोप्यतमाद् गोप्यं रहस्यं भुक्तिमुक्तिदम् ॥

शक्तिमाला पञ्चधास्याच्छिवमाला च तादृशी ।
द्वन्द्वमाला च तादृक्च एवं पञ्चदश क्रमात् ॥

॥ इति वामकेश्वरतन्त्रे उमामहेश्वरसंवादे देवीखड्गमालिकास्तोत्रं संपूर्णम् ॥
॥ श्रीपरदेवतार्पणमस्तु ॥



## आम्नायस्तवप्रारम्भः

### — पूर्वाम्नायः —

शुद्धविद्या च बाला च द्वादशार्धा मतङ्गिनी ।
द्विजत्वसाधिनी विद्या गायत्री वेदमातृका ॥

गाणापत्यं कार्तिकेयं मृत्युञ्ज्यं नीलकण्ठकम् ।
त्र्यम्बकं जातवेदाश्च तथा प्रत्यङ्गिरादयः ॥

सद्यो जात मुखोद्भूता वैदिकास्तु द्विकोटयः ।
एताः कामगिरिन्द्रस्थाः पूर्वाम्नायस्य देवताः ॥

गुरुत्रयादिपीठास्तं चतुर्विंशत्सहस्रकम् ।
एतदावरणोपेतं पूर्वाम्नायं भजाम्यहम् ॥

विशुद्धौ भावयेन्मन्त्री पूर्वाम्नायमनून्प्रिये ।

### — दक्षिणाम्नायः —

सौभाग्यविद्या बगळा वाराही वटुकास्तथा ॥

श्रीतिरस्करिणी प्रोक्ता महामाया प्रकीर्तिता ।
अघोरं शरभं खडरावण वीरभद्रकम् ॥

रौद्रं शास्ता पाशुपताद्यस्त्रशस्त्रादि भैरवम् ।
दक्षिणामूर्तिमन्त्राद्याश्शैवागमसमुद्भवाः ॥

वामदेवमुखोद्भूताः कोटिमन्त्रा वरानने ।
पूर्णपीठस्थिता देवि दक्षिणाम्नायदेवता ॥

द्विसहस्रन्तु देव्यस्ताः परिवारसमन्विताः ।
भैरवादिपदद्वन्द्वं भजेद्दक्षिणमुत्तमम् ॥

हृदयेनाहृते देवि दक्षाम्नायमनून्स्मरेत् ।

— **पश्चिमाम्नायः** —

लोपामुद्रा महादेवि अम्बा च भुवनेश्वरी ॥

अन्नपूर्णा कामकळा सर्वसिद्धिप्रदायिनी ।
सुदर्शनं वैनतेयं कार्तवीर्यं नृसिंहकम् ॥

नामत्रयं राममन्त्रं गोपालं सौरमेव च ।
धन्वन्तरं चेन्द्रजाल मिन्द्रादि सुरमन्त्रकम् ॥

दत्तात्रेयं द्वादशाष्टौ वैष्णवैगामचोदिताः ।
अघोरमुखसम्भूतं मदंशं कोटिसंख्यकम् ॥

एता जालन्ध्रपीठस्थाः पश्चिमाम्नायदेवताः ।
दूत्यादि चतुष्षष्ठिसिद्धान्तं त्रिसहस्रकम् ॥

आम्नायं पश्चिमं वन्दे सर्वदा सर्वकामदम् ।
भावयेन्मणिपूरे तु पश्चिमाम्नायजं मनुम् ॥

— उत्तराम्नायः —

तुरीयाम्बा महार्घा च अश्वारूढा तथैव च ।
मिश्राम्बा च महादेवी श्रीमद्वाग्वादिनी अपि ॥

दुर्गा कालीदहृच्चंडी नकुळी च पुलिन्दिनी ।
रेणुका लक्ष्मी वागीशा मातृकाद्या स्स्वयंवरा ॥

पञ्चाम्नायसमोपेतं श्रीविद्याख्यं मदंशकम् ।
मुखात्तत्पुरुषात्ज्ञाता द्विकोटिमन्त्रनायकाः ॥

एताश्चोड्याणपीठस्थाश्शाक्तागमसमुद्भवा ।
द्विसहस्रन्तु देव्यस्थाः परिवारयुताः प्रिये ॥

मुद्रादिनवकंचैव सिद्धानां मिथुनं तथा ।
वीरावळी च नवकं भजेदाम्नायमुत्तमम् ॥

उत्तराम्नायस्य मनून्हृदिस्थाने विभावयेत् ।

— ऊर्ध्वाम्नायः —

परापरा च सा देवि परा शाम्भवमेव च ॥

प्रासादं दहरं हंसं महावाक्यादिकं परम् ।
पञ्चाक्षरं महामन्त्रं तारकं जन्मतारकम् ॥

ईशानमुखसम्भूता स्स्वात्मानन्दप्रदायकाः ।
कोटिसङ्ख्या महादेवि मद्रूपा सर्वसिद्धिदाः ॥

एता शाम्भवपीठस्था सहस्रपरिवारिताः ।
आराध्यमालिनीपूर्वं मण्डलान्तं तथैव च ॥

सायुज्यहेतुकं नित्यं वन्दे चोर्ध्वमकल्मषम् ।
ऊर्ध्वाम्नायस्य च मनून्मूलाधारे विभावयेत् ॥

— अनुत्तराम्नायः —

स्मर्तव्या पादुका पूर्वं चरणं तदनन्तरम् ।
पञ्चाम्बानवनाथांश्च मूलविद्यास्ततःपरम् ॥

आधारविद्याषट्कञ्च पुनरंघ्रिद्वयं क्रमात् ।
शाम्भवी चाथ हृल्लेखा समयापरबोधिनी ॥

कौळ पञ्चाक्षरी पञ्चदशार्णानुत्तरात्मिका ।
षोडशीपूर्तिविद्या च महात्रिपुरसुन्दरी ॥

ऊर्ध्वश्रीपादुकापूर्वं चरणान्तं गुरोः क्रमात् ।
पश्चादनुत्तरं वन्दे परब्रह्मस्वरूपिणीम् ॥

अनुत्तराम्नायमनूमाज्ञाचक्रे विभावयेत् ॥
श्रीनाथगुरुमन्त्रादीन्मण्डलान्तं यथाक्रमम् ॥

सप्तकोटिमहामन्त्रान्द्वादशान्ते सदा स्मरेत् ।
शुचिर्व्याप्यशुचिर्वापि गच्छंस्तिष्ठन् स्वपन्नपि ॥

मन्त्रैकशरणो विद्वान्मनसापि सदा स्मरेत् ।
तत्तत्सिद्धिं च साहस्रं जपेत्साधकपुङ्गवः ॥

जपान्ते श्रीशुद्धमालाम्नायस्तोत्रमुत्तमम् ।
ललितानामसहस्रं सर्वपूर्तिकरं स्तवम् ॥

स्तवराजञ्च पञ्चैते भक्त्या प्रतिदिनं पठेत् ।
भुक्त्वा भोगान्यथा कामान्सर्वभूतहितेरतः ॥

सुभार्यापुत्रसौभाग्यस्स भूतिः पशुमान्भवेत् ।
एकवारं जपेदेनान् कोटियज्ञफलं लभेत् ॥

एतद्विज्ञानमात्रेण सर्वेषां देशिकोत्तमः ।
शिवसायुज्यमाप्नोति शिवयोरेव शासनात् ॥

इति श्रीरुद्रयामळतन्त्रे उमामहेश्वरसंवादे शिवेन रचितमाम्नायस्तोत्रं सम्पूर्णम् ।

बैन्दवं ब्रह्मरन्ध्रे च मस्तके च त्रिकोणकम् ।
ललाटे वसुकोणं च भ्रुवोर्मध्ये दशारकम् ॥

अन्तर्दशारं कण्ठे च हृदये मनुकोणकम् ।
नाभौ ह्यष्टदळं पद्मं स्वाधिष्ठाने कळाश्रकम् ॥
आधारे चतुरश्रं स्यादेवं चक्रं विभावयेत् ।

श्रीसद्गुरुपरदेवतार्पणमस्तु

श्रीगुरवेनमः

## — श्रीललितासहस्रनामस्तोत्रप्रारम्भः —

श्रीविद्यां जगतां धात्रीं सर्गस्थितिलयेश्वरीम् ।
नमामि ललितां नित्यां महात्रिपुरसुन्दरीम् ॥

पाशांकुशेक्षुकोदण्डप्रसूनविशिखां स्मरेत् ।
उद्यत्कोटिरविप्रख्यां महात्रिपुरसुन्दरीम् ॥

अश्वानन महाबुद्धे सर्वशास्त्रविशारद ।
कथितं ललितादेव्याश्चरितं परमाद्भुतम् ॥

पूर्वं प्रादुर्भवो मातुस्ततः पट्टाभिषेचनम् ।
भण्डासुरवधश्चैव विस्तरेण त्वयोदितः ॥

वर्णितं श्रीपुरमपि महाविभवविस्तरम् ।
श्रीमत्पञ्चदशाक्षर्या महिमा वर्णितस्तथा ।

षोढान्यासादयोन्यासान्यासखण्डे समीरिताः ।
अन्तर्यागक्रमश्चैव बहिर्यागक्रमस्तथा ॥

महायागक्रमश्चापि पूजाखण्डे समीरिताः ।
पुरश्चरणखण्डे तु जपलक्षणमीरितम् ॥

होमखण्डे त्वया प्रोक्तो होमद्रव्यविधिक्रमः ।
चक्रराजस्य विद्यायाश्श्रीदेव्या देशिकात्मनोः ॥

रहस्यखण्डे तादात्म्यं परस्परमुदीरितम् ।
स्तोत्रखण्डे बहुविधास्तुतयः परिकीर्तिताः ॥

मुद्रिणी दण्डिनी देव्याः प्रोक्ते नामसहस्रके ।
न तु श्रीललितादेव्याः प्रोक्तं नामसहस्रकम् ॥

तत्र मे संशयो जातो हयग्रीव दयानिधे ।
किं वा त्वया विस्मृतं तद्ज्ञात्वा वा समुपेक्षितम् ॥

मम वा योग्यता नास्ति श्रोतुं नामसहस्रकम् ।
किमर्थं भवता नोक्तं तत्र मे कारणं वद ॥

सूतउवाच —

इति पृष्टो हयग्रीवो मुनिना कुम्भजन्मना ।
प्रहृष्टो वचनं प्राह तापसं कुम्भसम्भवम् ॥

श्रीहयग्रीवः —

लोपामुद्रापतेगस्त्य सावधानमनाश्शृणु ।
नाम्नां सहस्रं यन्नोक्तं कारणं तद्वदामि ते ॥

रहस्यमिति मत्वाऽहं नोक्तवांस्तेन चान्यथा ।
पुनश्च पृच्छते भक्त्या तस्मात्तत्ते वदाम्यहम् ॥

ब्रूयाच्छिष्याय भक्ताय रहस्यमपि देशिकः ।
भवता न प्रदेयं स्यादभक्ताय कदाचन ॥

न शठाय न दुष्टाय नाविश्वासाय कर्हिचित् ।
श्रीमातृभक्तियुक्ताय श्रीविद्याराजवेदिने ॥

उपासकाय शुद्धाय देयं नामसहस्रकम् ।
यानि नामसहस्राणि सद्यसिद्धिप्रदानि वै ॥

तन्त्रेषु ललितादेव्यास्तेषु मुख्यमिदम्मुने ।
श्रीविद्यैव तु मन्त्राणां तत्र कादिर्यथापरा ॥

पुराणां श्रीपुरमिव शक्तीनां ललिता यथा ।
श्रीविद्योपासकानां च यथादेवः परश्शिवः ॥

तथा नामसहस्रेषु परमेतत्प्रकीर्तितम् ।
यथास्य पठना द्देवी प्रीयते ललिताम्बिका ॥

अन्यनामसहस्रस्य पाठान्नप्रीयते तथा ।
श्रीमातुः प्रीतये तस्मादनिशं कीर्तयेदिदम् ॥

बिल्वपत्रैश्चक्रराजे योर्चये ल्ललिताम्बिकाम् ।
पद्मैर्वा तुलसीपुष्टैरेभिर्नामसहस्रकैः ॥

सद्यः प्रसादं कुरुते तस्य सिंहासनेश्वरी ।
चक्राधिराजमभ्यर्च्य जप्त्वा पञ्चदशाक्षरीम् ॥

जपान्ते कीर्तयेन्नित्यमिदं नामसहस्रकम् ।
जपपूजाद्यशक्तश्चेत्पठेन्नामसहस्रकम् ॥

साङ्गार्चने साङ्गजपे यत्फलं तदवाप्नुयात् ।
उपासने स्तुतीरन्याः पठेदभ्युदयो हि सः ॥

इदं नामसहस्रं तु कीर्तयेन्नित्यकर्मवत् ।
चक्रराजार्चनं देव्या जपो नाम्नां च कीर्तनम् ॥

भक्तस्य कृत्यमेतावदन्यदभ्युदयं विदुः ।
भक्तस्यावश्यकमिदं नामसहस्रकीर्तनम् ॥

तत्र हेतुं प्रवक्ष्यामि श्रृणु त्वं कुम्भसम्भव ।
पुरा श्रीललितादेवी भक्तानां हितकाम्यया ॥

वाग्देवीर्वशिनीमुख्यास्समाहूयेदमब्रवीत् ।
वाग्देवता वशिन्याद्याः श्रृणुध्वं वचनं मम ॥

भवत्यो मत्प्रसादेन प्रोल्लसद्वाग्विभूतयः ।
मद्भक्तानां वाग्विभूतिप्रदाने विनियोजिताः ॥

मच्चक्रस्य रहस्यज्ञा मम नामपरायणाः ।
मम स्तोत्रविधानाय तस्मादाज्ञापयामि वः ॥

कुरुध्वमङ्कितं स्तोत्रं मम नामसहस्रकैः ।
येन भक्तैः स्तुताया मे सद्यः प्रीतिः परा भवेत् ॥

इत्याज्ञप्ता वचो देव्यो देव्या श्रीललिताम्बया ।
रहस्यैर्नामभिर्देव्याश्चक्रुस्स्तोत्रमनुत्तमम् ॥

रहस्यनामसाहस्रमिति तद्विश्रुतं परम् ॥
ततः कदाचित्सदसि स्थित्वा सिंहासनेम्बिका ॥

स्वसेवावसरं प्रादात्सर्वेषां कुम्भसम्भव ।
सेवार्थमागतास्तत्र ब्रह्माणी ब्रह्मकोटयः ॥

लक्ष्मीनारायणानाञ्च कोटयस्समुपागताः ।
गौरी कोटीसमेतानां रुद्राणामपि कोटयः ॥

मन्त्रिणी दण्डिनी मुख्यास्सेवार्थं यास्समागताः ।
शक्तयो विविधाकारा स्तासां संख्या न विद्यते ॥

दिव्यौघा मानवौघाश्च सिद्धौघाश्च समागताः ।
तत्र श्रीललितादेवी सर्वेषां दर्शनं ददौ ॥

तेषु दृष्ट्वोपविष्टेषु स्वे स्वे स्थाने यथाक्रमम् ।
ततश्श्रीललितादेवी कटाक्षाक्षेपचोदिताः ॥

उत्थाय वशिनीमुख्या बद्धाञ्जलिपुटास्तदा ।
अस्तुवन्नामसाहस्रैः स्वकृतैर्ललिताम्बिकाम् ॥

श्रुत्वा स्तवं प्रसन्नाभूल्ललिता परमेश्वरी ।
ते सर्वे विस्मयं जग्मुर्ये तत्र सदसि स्थिताः ॥

ततः प्रोवाच ललिता सदस्यान्देवतागणान् ।
ममाज्ञयैव वाग्देव्यश्चक्रु स्तोत्रमनुत्तमम् ॥

अंकितं नामभिर्दिव्यै र्मम प्रीतिविधायकैः ।
तत्पठध्वं सदा यूयं स्तोत्रं मत्प्रीतिवृद्धये ॥

प्रवर्तयध्वं भक्तेषु मम नामसहस्रकम् ।
इदं नामसहस्रं मे यो भक्तः पठते सकृत् ॥

स मे प्रियतमो ज्ञेयस्तस्मै कामान् ददाम्यहम् ।
श्रीचक्रे मां समभ्यर्च्य जप्त्वा पञ्चदशाक्षरीम् ॥

पश्चान्नामसहस्रम्मे कीर्तयेन्मम तुष्टये ।
मामर्चयतु वा मा वा विद्यां जपतु वा न वा ॥

कीर्तयेन्नामसहस्रमिदं मत्प्रीतये सदा ।
मत्प्रीत्या सकलान्कामान् लभते नात्र संशयः ॥

तस्मान्नामसहस्रम्मे कीर्तयध्वं सदादरात् ।

हयग्रीव उवाच —

इति श्रीललितेशानी शास्ति देवान् सहानुगान् ॥

तदाज्ञया तदारभ्य ब्रह्मविष्णुमहेश्वराः ।
शक्तयो मन्त्रिणीमुख्या इदं नामसहस्रकम् ॥

पठन्ति भक्त्या सततं ललितापरितुष्टये ।
तस्मादवश्यं भक्तेन कीर्तनीयमिदं मुने ॥

आवश्यकत्वे हेतुस्ते मया प्रोक्तो मुनीश्वर ।
इदानीं नामसाहस्रं वक्ष्यामि श्रद्धया श्रृणु ॥

इति श्रीब्रह्माण्डपुराणे उत्तरखण्डे
हयग्रीवागस्त्यसंवादे ललितासहस्रनाम पूर्वभागो नाम
प्रथमोध्यायः

## श्रीललितासहस्रनामस्तोत्रन्यासः

अस्यश्री सहस्रनामस्तोत्र महामन्त्रस्य वशिन्यादि वाग्देवता ऋषयः। अनुष्टुप्छन्दः। ललिता भट्टारिकादेवता। क ए ई लह्रीं सकलह्रीं शक्तिः हसकलह्रीं कीलकं - महात्रिपुरसुन्दरी प्रसादसिद्धयर्थे जपे विनियोगः॥ क ए ई ल ह्रीं अंगुष्टाभ्यां नमः। हसकलह्रीं तर्जनीभ्यां नमः। सकलह्रीं मध्यमाभ्यां नमः। क ए ई ल ह्रीं अनामिकाभ्यां नमः। हसकहलह्रीं कनिष्ठिकाभ्यां नमः। सकलह्रीं करतलकरपृष्ठाभ्यां नमः॥ एवं हृदयादिन्यासः। भूर्भुव स्सुवरोमिति दिग्बन्धः॥

ध्यानम् – पङ्कजपाशेक्षुधरामंकुश कोदण्ड पञ्चबाणधराम्।
पङ्कजमध्यनिषण्णां पङ्केरुहलोचनां परां वन्दे॥

लमित्यादि पञ्चपूजां कुर्यात्॥ हरिः ॐ॥

### — श्रीललितासहस्रनामस्तोत्रप्रारम्भः —

श्रीमाता श्रीमहाराज्ञी श्रीमत्सिंहासनेश्वरी।
चिदग्निकुण्डसम्भूता देवकार्यसमुद्यता॥

उद्यद्भानुसहस्राभा चतुर्बाहुसमन्विता।
रागस्वरूपपाशाढ्या क्रोधाकारांकुशोज्वला॥

मनोरूपेक्षुकोदण्डा पञ्चतन्मात्रसायका।
निजारुणप्रभापूरमज्जद्ब्रह्माण्डमण्डला॥

चम्पकाशोकपुन्नाग सौगन्धिकलसत्कचा।
कुरुबिन्दमणिश्रेणी कनत्कोटीरमण्डिता॥

अष्टमीचन्द्रविभ्राज दळिकस्थलशोभिता ।
मुखचन्द्रकळङ्काभ मृगनाभिविशेषका ॥

वदनस्मरमाङ्गल्य गृहतोरणझिल्लिका ।
वक्त्रलक्ष्मीपरीवाह चलन्मीनाभलोचना ॥

नवचम्पकपुष्पाभनासादण्डविराजिता ।
ताराकान्ति तिरस्कारि नासाभरणभासुरा ॥

कदम्बमञ्जरीक्लृप्त कर्णपूरमनोहरा ।
ताटङ्कयुगळीभूत तपनोडुपमण्डला ॥

पद्मरागशिलादर्श परिभावि कपोलभूः ।
नवविद्रुमबिम्बश्रीन्यक्कारिरदनच्छदा ॥

शुद्धविद्यांकुराकार द्विजपङ्क्तिद्वयोज्वला ।
कर्पूरवीटिकामोद समाकर्षद्दिगन्तरा ॥

निजसल्लापमाधुर्यविनर्भर्त्सितकच्छपी ।
मन्दस्मितप्रभापूर मज्जत्कामेशमानसा ॥

अनाकलितसादृश्य चुबुकश्रीविराजिता ।
कामेशबद्धमाङ्गल्यसूत्रशोभितकन्धरा ॥

कनकाङ्गद केयूरकमनीयभुजान्विता ।
रत्नग्रैवेयचिन्ताकलोलमुक्ताफलान्विता ॥

कामेश्वरप्रेमरत्नमणिप्रतिपणस्तनी ।
नाभ्यालवाल रोमाळि लताफलकुचद्वयी ॥

लक्ष्यरोमालताधारतासमुन्नेयमध्यमा ।
स्तनभारदळन्मध्य पट्टबन्धवळित्रया ॥

अरुणारुणकौसुम्भ वस्त्रभास्वत्कटीतटी ।
रत्नकिङ्किणिकारम्यरशनादामभूषिता ॥

कामेशज्ञातसौभाग्य मार्दवोरुद्वयान्विता ।
माणिक्यमकुटाकार जानुद्वयविराजिता ॥

इन्द्रगोपपरिक्षिप्त स्मरतूणाभजङ्घिका ।
गूढगुल्भा कूर्मपृष्ठ जयिष्णुप्रपदान्विता ॥

नखदीधितिसंछन्ननमज्जनतमोगुणा ।
पदद्वयप्रभाजालपराकृतसरोरुहा ॥

शिञ्जानमणिमञ्जीरमण्डितश्रीपदांबुजा ।
मराळी मन्दगमना महालावण्यशेवधिः ॥

सर्वारुणानवद्याङ्गी सर्वाभरणभूषिता ।
शिवकामेश्वराङ्कस्था शिवास्वाधीनवल्लभा ॥

सुमेरुमध्यशृङ्गस्था श्रीमन्नगरनायिका ।
चिन्तामणिगृहान्तस्था पञ्चब्रह्मासनस्थिता ॥

महापद्माटवीसंस्था कदम्बवनवासिनी ।
सुधासागरमध्यस्था कामाक्षी कामदायिनी ॥

देवर्षिगणसङ्घातस्तूयमानात्मवैभवा ।
भण्डासुरवधोद्युक्तशक्तिसेनासमावृता ॥

संपत्करीसमारूढसिन्दुरव्रजसेविता ।
अश्वारूढाधिष्ठिताश्वकोटिकोटिभिरावृता ॥

चक्रराजरथारूढसर्वायुधपरिष्कृता ।
गेयचक्ररथारूढमन्त्रिणीपरिसेविता ॥

किरिचक्ररथारूढदण्डनाथपुरस्कृता ।
ज्वालामालिनिकाक्षिप्तवह्निप्राकारमध्यगा ॥

भण्डसैन्यवधोद्युक्तशक्तिविक्रमहर्षिता ।
नित्या पराक्रमाटोपनिरीक्षणसमुत्सुका ॥

भण्डपुत्रवधोद्युक्तबालाविक्रमनन्दिता ।
मन्त्रिण्यम्बाविरचितविषङ्गवधतोषिता ॥

विशुक्रप्राणहरणवाराही वीर्यनन्दिता ।
कामेश्वरमुखालोककल्पितश्रीगणेश्वरा ॥

महागणेशनिर्भिन्नविघ्नयन्त्रप्रहर्षिता ।
भण्डासुरेन्द्रनिर्मुक्तशस्त्रप्रत्यस्त्रवर्षिणी ॥

करांगुलिनखोत्पन्ननारायणदशाकृतिः ।
महापाशुपतास्त्राग्निनिर्दग्धाऽसुरसैनिका ॥

कामेश्वरास्त्रनिर्दग्ध सभण्डासुरसैनिका ।
ब्रह्मोपेन्द्रमहेन्द्रादि देवसंस्तुतवैभवा ॥

हरनेत्राग्निसंदग्धकामसञ्जीवनौषधिः ।
श्रीमद्वाग्भवकूटैकस्वरूपमुखपङ्कजा ॥

कण्ठाधःकटिपर्यंतमध्यकूटस्वरूपिणी ।
शक्तिकूटैकतापन्नकटयधोभागधारिणि ॥

मूलमन्त्रात्मिका मूलकूटत्रयकळेबरा ।
कळामृतैकरसिका कुळसङ्केतपालिनी ॥

कुळाङ्गना कुळान्तस्था कौळिनी कुळयोगिनी ।
अकुळा समयान्तस्था समयाचारतत्परा ॥

मूलाधारैकनिलया ब्रह्मग्रन्धिविभेदिनी ।
मणिपूरान्तरुदिता विष्णुग्रन्धिविभेदिनी ॥

आज्ञाचक्रान्तराळस्था रुद्रग्रन्दिविभेदिनी ।
सहस्रारांबुजारूढा सुधासाराभिवर्षिणी ॥

तटिल्लतासमरुचिष्षट्चक्रोपरिसंस्थिता ।
महाशक्तिः कुण्डलिनी बिसतन्तुतनीयसी ॥

भवानी भावनागम्या भवारण्यकुठारिका ।
भद्रप्रिया भद्रमूर्तिर्भक्तसौभाग्यदायिनी ॥

भक्तप्रिया भक्तिगम्या भक्तिवश्या भयापहा ।
शाम्भवी शारदाराध्या शर्वाणी शर्मदायिनी ॥

शाङ्करी श्रीकरी साध्वी शरश्चन्द्रविभानना ।
शातोदरी शान्तिमती निराधारा निरञ्जना ॥

निर्लेपा निर्मला नित्या निराकारा निराकुला ।
निर्गुणा निष्कळा शान्ता निष्कामा निरुपप्लवा ॥

नित्यमुक्ता निर्विकारा निष्प्रपञ्चा निराश्रया ।
नित्यशुद्धा नित्यबुद्धा निरवद्या निरंतरा ।।

निष्कारणा निष्कळङ्का निरुपाधिर्निरीश्वरा ।
नीरागा रागमथना निर्मदा मदनाशिनी ।।

निश्चिन्ता निरहंकारा निर्मोहा मोहनाशिनी ।
निर्ममा ममताहन्त्री निष्पापा पापनाशिनी ।।

निष्क्रोधा क्रोधशमनी निर्लोभा लोभनाशिनी ।
निस्संशया संशयघ्नी निर्भवा भवनाशिनी ।।

निर्विकल्पा निराबाधा निर्भेदा भेदनाशिनी ।
निर्नाशा मृत्युमथनी निष्क्रिया निष्परिग्रहा ।।

निस्तुला नीलचिकुरा निरपाया निरत्यया ।
दुर्लभा दुर्गमा दुर्गा दुःखहन्त्री सुखप्रदा ।।

दुष्टदूरा दुराचारशमनी दोषवर्जिता ।
सर्वज्ञा सान्द्रकरुणा समानाधिकवर्जिता ।।

सर्वशक्तिमयी सर्वमङ्गळा सद्गतिप्रदा ।
सर्वेश्वरी सर्वमयी सर्वमन्त्रस्वरूपिणी ।।

सर्वयन्त्रात्मिका सर्वतन्त्ररूपा मनोन्मनी ।
महेश्वरी महादेवी महालक्ष्मीर्मृडप्रिया ।।

महारूपा महापूज्या महापातकनाशिनी ।
महामाया महासत्वा महाशक्तिर्महारतिः ।।

महाभोगा महैश्वर्या महावीर्या महाबला ।
महाबुद्धिर्महासिद्धिर्महायोगेश्वरेश्वरी ॥

महातन्त्रा महामन्त्रा महायन्त्रा महासना ॥
महायागक्रमाराध्या महाभैरवपूजिता ॥

महेश्वरमहाकल्पमहाताण्डवसाक्षिणी ।
महाकामेशमहिषी महात्रिपुरसुन्दरी ॥

चतुष्षष्ट्युपचाराढ्या चतुष्षष्टिकळामयी ।
महाचतुष्षष्टिकोटियोगिनीगणसेविता ॥

मनुविद्या चन्द्रविद्या चन्द्रमण्डलमध्यगा ।
चारुरूपा चारुहासा चारुचन्द्रकळाधरा ॥

चराचरजगन्नाथा चक्रराजनिकेतना ।
पार्वती पद्मनयना पद्मरागसमप्रभा ॥

पञ्चप्रेतासनासीना पञ्चब्रह्मस्वरूपिणी ।
चिन्मयी परमानन्दा विज्ञानघनरूपिणी ॥

ध्यानध्यातृध्येयरूपा धर्माधर्मविवर्जिता ।
विश्वरूपा जागरिणी स्वपन्ती तैजसात्मिका ॥

सुप्ता प्राज्ञात्मिका तुर्या सर्वावस्थाविवर्जिता ।
सृष्टिकर्त्री ब्रह्मरूपा गोप्त्री गोविन्दरूपिणी ॥

संहारिणी रुद्ररूपा तिरोधानकरीश्वरी ।
सदाशिवानुग्रहदा पञ्चकृत्यपरायणा ॥

भानुमण्डलमध्यस्था भैरवी भगमालिनी ।
पद्मासना भगवती पद्मनाभसहोदरी ॥

उन्मेषनिमिषोत्पन्नविपन्नभुवनावळिः ।
सहस्रशीर्षवदना सहस्राक्षी सहस्रपात् ॥

आब्रह्मकीटजननी वर्णाश्रमविधायिनी ।
निजाज्ञारूपनिगमा पुण्यापुण्यफलप्रदा ॥

श्रुतिसीमन्तसिन्दूरीकृतपादाब्जधूळिका ।
सकलागमसन्दोहशुक्तिसंपुटमौक्तिका ॥

पुरुषार्थप्रदापूर्णा भोगिनी भुवनेश्वरी ।
अम्बिकाऽनादिनिधना हरिब्रह्मेन्द्रसेविता ॥

नारायणी नादरूपा नामरूपविवर्जिता ।
ह्रींकारी ह्रीमती हृद्या हेयोपादेयवर्जिता ॥

राजराजार्चिता राज्ञी रम्या राजीवलोचना ।
रञ्जनी रमणीरस्या रणत्किङ्किणिमेखला ॥

रमा राकेन्दुवदना रतिरूपा रतिप्रिया ।
रक्षाकरी राक्षसघ्नी रामा रमणलम्पटा ॥

काम्या कामकलारूपा कदम्बकुसुमप्रिया ।
कल्याणी जगतीकन्दा करुणारससागरा ॥

कळावती कळालापा कान्ता कादम्बरीप्रिया ।
वरदा वामनयना वारुणी मदविह्वला ॥

विश्वाधिका वेदवेद्या विन्ध्याचलनिवासिनी ।
विधात्री वेदजननी विष्णुमायाविलासिनी ॥

क्षेत्रस्वरूपा क्षेत्रेश्री क्षेत्रक्षेत्रज्ञपालिनी ।
क्षयवृद्धिविनिर्मुक्ता क्षेत्रपालसमर्चिता ॥

विजया विमला वन्द्या वन्दारुजनवत्सला ।
वाग्वादिनी वामकेशी वह्निमण्डलवासिनी ॥

भक्तिमत्कल्पलतिका पशुपाशविमोचनी ।
संहृताशेषपाषण्डा सदाचारप्रवर्तिका ॥

तापत्रयाग्निसंतप्तसमाह्लादनचन्द्रिका ।
तरुणी तापसाराध्या तनुमध्या तमोपहा ॥

चितिस्तत्पदलक्ष्यार्था चिदेकरसरूपिणी ।
स्वात्मानन्दलवीभूतब्रह्माद्यानन्दसन्ततिः ॥

परा प्रत्यक्चितीरूपा पश्यन्ती परदेवता ।
मध्यमा वैखरीरूपा भक्तमानसहंसिका ॥

कामेश्वरप्राणनाडी कृतज्ञा कामपूजिता ।
शृङ्गाररससंपूर्णा जया जालन्धरस्थिता ॥

ओड्याणपीठनिलया बिन्दुमण्डलवासिनी ।
रहोयागक्रमाराध्या रहस्तर्पणतर्पिता ॥

सद्यः प्रसादिनी विश्वसाक्षिणी साक्षिवर्जिता ।
षडङ्गदेवतायुक्ता षाड्गुण्यपरिपूरिता ॥

नित्यक्लिन्ना निरुपमा निर्वाणसुखदायिनी ।
नित्या षोडशिकारूपा श्रीकण्ठार्धशरीरिणी ॥

प्रभावती प्रभारूपा प्रसिद्धा परमेश्वरी ।
मूलप्रकृतिरव्यक्ता व्यक्ताव्यक्तस्वरूपिणी ॥

व्यापिनी विविधाकारा विद्याविद्यास्वरूपिणी ।
महाकामेशनयनकुमुदाह्लादचन्द्रिका ॥

भक्तहार्दतमोभेदभानुमद्भानुसन्ततिः ।
शिवदूती शिवाराध्या शिवमूर्ति श्शिवङ्करी ॥

शिवप्रिया शिवपरा शिष्टेष्टा शिष्टपूजिता ।
अप्रमेया स्वप्रकाशा मनोवाचामगोचरा ॥

चिच्छक्तिश्चेतनारूपा जडशक्तिर्जडात्मिका ।
गायत्री व्याहृतिस्सन्ध्या द्विजबृन्दनिषेविता ॥

तत्त्वासना तत्त्वमयी पञ्चकोशान्तरस्थिता ।
निस्सीममहिमा नित्ययौवना मदशालिनी ॥

मदघूर्णितरक्ताक्षी मदपाटलगण्डभूः ।
चन्दनद्रवदिग्धाङ्गी चाम्पेयकुसुमप्रिया ॥

कुशला कोमलाकारा कुरुकुळ्ळा कुळेश्वरी ।
कुलकुण्डालया कौळमार्गतत्परसेविता ॥

कुमारगणनाथाम्बा तुष्टिः पुष्टिर्मतिर्धृतिः ।
शान्तिस्स्वस्तिमती कान्तिर्नन्दिनी विघ्ननाशिनी ॥

तेजोवती त्रिनयना लोलाक्षी कामरूपिणी ।
मालिनी हंसिनी माता मलयाचलवासिनी ॥

सुमुखी नळिनी सुभ्रू श्शोभना सुरनायिका ।
कालकण्ठी कान्तिमती क्षोभिणी सूक्ष्मरूपिणी ॥

वज्रेश्वरी वामदेवी वयोवस्थाविवर्जिता ।
सिद्धेश्वरी सिद्धविद्या सिद्धमाता यशस्विनी ॥

विशुद्धचक्रनिलया रक्तवर्णा त्रिलोचना ।
खट्वाङ्गादिप्रहरणा वदनैकसमन्विता ॥

पायसान्नप्रिया त्वक्स्था पशुलोकभयङ्करी ।
अमृतादिमहाशक्तिसंवृता डाकिनीश्वरी ॥

अनाहताब्जनिलया श्यामाभा वदनद्वया ।
दंष्ट्रोज्वलाक्षमालादिधरा रुधिरसंस्थिता ॥

काळरात्र्यादिशक्त्यौघवृता स्निग्धौदनप्रिया ।
महावीरेन्द्रवरदा राकिन्यम्बास्वरूपिणी ॥

मणिपूराब्जनिलया वदनत्रयसंयुता ।
वज्रादिकायुधोपेता डामर्यादिपरीवृता ॥

रक्तवर्णा मांसनिष्ठा गुडान्नप्रीतमानसा ।
समस्तभक्तसुखदा लाकिन्यम्बास्वरूपिणी ॥

स्वाधिष्ठांबुजगता चतुर्वक्त्रमनोहरा ।
शूलाद्यायुधसंपन्ना पीतवर्णाऽतिगर्विता ॥

मेधोनिष्ठा मधुप्रीता बन्दिन्यादिसमन्विता ।
दध्यन्नासक्तहृदया काकिनीरूपधारिणी ॥

मूलाधाराम्बुजारूढा पञ्चवक्त्रास्थिसंस्थिता ।
अंकुशादिप्रहरणा वरदादिनिषेविता ॥

मुद्गौदनासक्तचित्ता साकिनीरूपधारिणी ।
आज्ञाचक्राब्जनिलया शुक्लवर्णा षडानना ॥

मज्जासंस्था हंसवती मुख्यशक्तिसमन्विता ।
हरिद्रान्नैकरसिका हाकिनीरूपधारिणी ॥

सहस्रदळपद्मस्था सर्ववर्णोपशोभिता ।
सर्वायुधधरा शुक्लसंस्थिता सर्वतोमुखी ॥

सर्वौदनप्रीतचित्ता याकिन्यम्बास्वरूपिणी ।
स्वाहा स्वधा मतिर्मेधा श्रुतिस्मृतिरनुत्तमा ॥

पुण्यकीर्तिः पुण्यलभ्या पुण्यश्रवणकीर्तना ।
पुलोमजार्चिता बन्धमोचनी बर्बराळका ॥

विमर्शरूपिणी विद्या वियदादि जगत्प्रसूः ।
सर्वव्याधिप्रशमणी सर्वमृत्युनिवारिणी ॥

अग्रगण्या चिन्त्यरूपा कलिकल्मषनाशिनी ।
कात्यायनी कालहन्त्री कमलाक्षनिषेविता ॥

ताम्बूलपूरितमुखी दाडिमीकुसुमप्रभा ।
मृगाक्षी मोहिनी मुख्या मृडानी मित्ररूपिणी ॥

नित्यतृप्ता भक्तनिधिर्नियन्त्री निखिलेश्वरी ।
मैत्र्यादिवासनालभ्या महाप्रळयसाक्षिणी ॥

पराशक्तिः परानिष्ठा प्रज्ञानघनरूपिणी ।
माध्वीपानालसा मत्ता मातृका वर्णरूपिणी ॥

महाकैलासनिलया मृणाळमृदुदोर्लता ।
महावीया दयामूर्तिर्महासाम्राज्यशालिनी ॥

आत्मविद्या महाविद्या श्रीविद्या कामसेविता ।
श्रीषोडशाक्षरी विद्या त्रिकूटा कामकोटिका ॥

कटाक्षकिङ्करीभूतकमलाकोटिसेविता ।
शिरस्स्थिता चन्द्रनिभा फालस्थेन्द्र धनुःप्रभा ॥

हृदयस्था रविप्रख्या त्रिकोणान्तरदीपिका ।
दाक्षायणी दैत्यहन्त्री दक्षयज्ञविनाशिनी ॥

दरान्दोळितदीर्घाक्षी दरहासोज्वलन्मुखी ।
गुरुमूर्ति र्गुणनिधि र्गोमाता गुहजन्मभूः ॥

देवेशी दण्डनीतिस्था दहराकाशरूपिणी ।
प्रतिपन्मुख्यराकान्ततिथिमण्डलपूजिता ॥

कळात्मिका कळानाथा काव्यालापविनोदिनी ।
सचामररमावाणी सव्यदक्षिणसेविता ॥

आदिशक्तिरमेयात्मा परमा पावनाकृतिः ।
अनेककोटिब्रह्माण्डजननी दिव्यविग्रहा ॥

क्लींकारी केवला गुह्या कैवल्यपददायिनी ।
त्रिपुरा त्रिजगद्वन्द्या त्रिमूर्तिस्त्रिदशेश्वरी ॥

त्र्यक्षरी दिव्यगन्धाढ्या सिन्दूरतिलकाञ्चिता ।
उमा शैलेन्द्रतनया गौरी गन्धर्वसेविता ॥

विश्वगर्भा स्वर्णगर्भा वरदा वागधीश्वरी ।
ध्यानगम्या परिच्छेद्या ज्ञानदा ज्ञानविग्रहा ॥

सर्ववेदान्तसंवेद्या सत्यानन्दस्वरूपिणी ।
लोपामुद्रार्चिता लीलाक्लृप्तब्रह्माण्डमण्डला ॥

अदृश्या दृश्यरहिता विज्ञात्री वेद्यवर्जिता ॥
योगिनी योगदा योग्या योगानन्दा युगन्धरा ॥

इच्छाशक्ति ज्ञानशक्ति क्रियाशक्तिस्वरूपिणी ।
सर्वाधारा सुप्रतिष्ठा सदसद्रूपधारिणी ॥

अष्टमूर्ति रजाजैत्री लोकयात्रविधायिनी ।
एकाकिनी भीमरूपा निर्द्वैता द्वैतवर्जिता ॥

अन्नदा वसुदा वृद्धा ब्रह्मात्म्यैक्यस्वरूपिणी ।
बृहती ब्राह्मणी ब्राह्मी ब्रह्मानन्दा बलिप्रिया ॥

भाषारूपा बृहत्सेना भावाभावविवर्जिता ।
सुखाराध्या शुभकरी शोभना सुलभागतिः ॥

राजराजेश्वरी राज्यदायिनी राज्यवल्लभा ।
राजत्कृपा राजपीठनिवेशितनिजाश्रिता ॥

राज्यलक्ष्मीः कोशनाथा चतुरङ्गबलेश्वरी ।
साम्राज्यदायिनी सत्यसन्धा सागरमेखला ॥

दीक्षिता दैत्यशमनी सर्वलोकवशंकरी ।
सर्वार्थदात्री सावित्री सच्चिदानन्दरूपिणी ॥

देशकालपरिच्छिन्ना सर्वगा सर्वमोहिनी ।
सरस्वती शास्त्रमयी गुहाम्बा गुह्यरूपिणी ॥

सर्वोपादिविनिर्मुक्ता सदाशिवपतिव्रता ।
संप्रदायेश्वरी साध्वी गुरुमण्डलरूपिणी ॥

कुलोत्तीर्णा भगाराध्या माया मधुमती मही ।
गणाम्बा गुह्यकाराध्या कोमलांगी गुरुप्रिया ॥

स्वतन्त्रा सर्वतन्त्रेशी दक्षिणामूर्तिरूपिणी ।
सनकादिसमाराध्या शिवज्ञानप्रदायिनी ॥

चित्कळानन्दकलिका प्रेमरूपा प्रियंकरी ।
नामपारायणप्रीता नन्दिविद्या नटेश्वरी ॥

मिथ्या जगदधिष्ठाना मुक्तिदा मुक्तिरूपिणी ।
लास्यप्रिया लयकरी लज्जा रंभादिवन्दिता ॥

भवदा वसुधा वृष्टिः पापारण्यदवानला ।
दौर्भाग्यतूलवातूला जराध्वान्तरविप्रभा ॥

भाग्याब्धिचन्द्रिका भक्तचित्तकेकि घनाघना ।
रोगपर्वतदम्बोळिर्मृत्युदारुकुठारिका ॥

महेश्वरी महाकाली महाग्रासा महाशना ।।
अपर्णा चण्डिका चण्डमुण्डासुरनिषूदिनी ।

क्षराक्षरात्मिका सर्वलोकेशी विश्वधारिणी ।।
त्रिवर्गधात्री सुभगा त्र्यम्बिका त्रिगुणात्मिका ।।

स्वर्गापवर्गदा शुद्धा जपापुष्पनिभाकृतिः ।
ओजोवती द्युतिधरा यज्ञरूपा प्रियव्रता ।।

दुराराध्या दुराधर्षा पाटली कुसुमप्रिया ।
महती मेरुनिलया मन्दारकुसुमप्रिया ।।

वीराराध्या विराड्रूपा विरजा विश्वतोमुखी ।
प्रत्यग्रूपा पराकाशा प्राणदा प्राणरूपिणी ।।

मार्ताण्डभैरवाराध्या मन्त्रिणीन्यस्तराज्यधूः ।
त्रिपुरेशी जयत्सेना निस्त्रैगुण्या परापरा ।।

सत्यज्ञानानन्दरूपा सामरस्यपरायणा ।
कपर्दिनी कळामाला कामधुक्कामरूपिणी ।।

कळानिधिः काव्यकळा रसज्ञा रसशेवधिः ।
पुष्टा पुरातना पूज्या पुष्करा पुष्करेक्षणा ।।

परञ्ज्योतिः परंधाम परमाणुः परात्परा ।
पाशहस्ता पाशहन्त्री परमन्त्रविभेदिनी ।।

मुर्तामूर्ता नित्यतृप्ता मुनिमानसहंसिका ।
सत्यव्रता सत्यरूपा सर्वान्तर्यामिनी सती ।।

ब्रह्माणी ब्रह्मजननी बहुरूपा बुधार्चिता ।
प्रसवित्री प्रचण्डाज्ञा प्रतिष्ठा प्रकटाकृतिः ॥

प्राणेश्वरी प्राणदात्री पञ्चाशत्पीठरूपिणी ।
विशृङ्खला विविक्तस्था वीरमाता वियत्प्रसूः ॥

मुकुन्दा मुक्तिनिलया मूलविग्रहरूपिणी ।
भावज्ञा भवरोगघ्नी भवचक्रप्रवर्तिनी ॥

छन्दस्सारा शास्त्रसारा मन्त्रसारा तलोदरी ।
उदारकीर्तिरुद्दामवैभवा वर्णरूपिणी ॥

जन्ममृत्युजरातप्तजनविश्रान्तिदायिनी ।
सर्वोपनिषदुद्घुष्टा शान्त्यतीतकळात्मिका ॥

गंभीरा गगनान्तस्था गर्विता गानलोलुपा ।
कल्पनारहिता काष्ठा कान्ता कान्तार्थविग्रहा ॥

कार्यकारणनिर्मुक्ता कामकेळितरङ्गिता ।
कनत्कनकताटङ्का लीलाविग्रहधारिणी ॥

अजा क्षयविनिर्मुक्ता मुग्धा क्षिप्रप्रसादिनी ।
अन्तर्मुखसमाराध्या बहिर्मुखसुदुर्लभा ॥

त्रयी त्रिवर्गनिलया त्रिस्था त्रिपुरमालिनी ।
निरामया निरालंबा स्वात्मारामा सुधासृतिः ॥

संसारपङ्कनिर्मग्नसमुद्धरणपण्डिता ।
यज्ञप्रिया यज्ञकर्त्री यजमानस्वरूपिणी ॥

धर्माधारा धनाध्यक्षा धनधान्यविवर्धिनी ।
विप्रप्रिया विप्ररूपा विश्वभ्रमणकारिणी ॥

विश्वग्रासा विद्रुमाभा वैष्णवी विष्णुरूपिणी ।
अयोनिर्योनिलया कूटस्था कुळरूपिणी ॥

वीरगोष्ठीप्रिया वीरा नैष्कर्म्या नादरूपिणी ।
विज्ञावकलना कल्याविदग्धा बैन्दवासना ॥

तत्वाधिका तत्वमयी तत्वमर्थस्वरूपिणी ।
सामगानप्रिया सोम्या सदाशिवकुटुम्बिनी ॥

सव्यापसव्यमार्गस्था सर्वापद्विनिवारिणी ।
स्वस्था स्वभावमधुरा धीराधीरसमर्चिता ॥

चैतन्यार्घ्यसमाराध्या चैतन्यकुसुमप्रिया ।
सदोदिता सदा तुष्टा तरुणादित्यपाटला ॥

दक्षिणादक्षिणाराध्या दरस्मेरमुखांबुजा ।
कौळिनी केवलाऽनर्घ्यकैवल्यपददायिनी ॥

स्तोत्रप्रिया स्तुतिमती श्रुतिसंस्तुतवैभवा ।
मनस्विनी मानवती महेशी मङ्गळाकृतिः ॥

विश्वमाता जगद्धात्री विशालाक्षी विरागिणी ।
प्रगल्भा परमोदारा परामोदा मनोमयी ॥

व्योमकेशी विमानस्था वज्रिणी वामकेश्वरी ।
पञ्चयज्ञप्रिया पञ्चप्रेतमञ्चधिशायिनी ॥

पञ्चमी पञ्चभूतेशी पञ्चसंख्योपचारिणी ।
शाश्वती शाश्वतैश्वर्या शर्मदा शंभुमोहिनी ॥

धराधरसुता धन्या धर्मिणी धर्मवर्धिनी ।
लोकातीता गुणातीता सर्वातीता शमात्मिका ॥

बन्धूककुसुमप्रख्या बाला लीलाविनोदिनी ।
सुमङ्गळी सुखकरी सुवेषाढ्या सुवासिनी ॥

सुवासिन्यर्चनप्रीता शोभना शुद्धमानसा ।
बिन्दुतर्पणसंतुष्टा पूर्वजा त्रिपुराम्बिका ॥

दशमुद्रासमाराध्या त्रिपुराश्री वशङ्करी ।
ज्ञानमुद्रा ज्ञानगम्या ज्ञातृज्ञेयस्वरूपिणी ॥

योनिमुद्रा त्रिखण्डेशी त्रिकोणाम्बा त्रिकोणगा ।
अनघाद्भुतचारित्रा वाञ्चितार्थप्रदायिनी ॥

अभ्यासातिशयज्ञाता षडध्वातीतरूपिणी ।
अव्याजकरुणामूर्ति रज्ञानध्वान्तदीपिका ॥

आबालगोपविदिता सर्वानुल्लङ्घ्यशासना ।
श्रीचक्रराजनिलया श्रीमत्त्रिपुरसुन्दरी ॥

श्रीशिवा शिवशक्त्यैक्यरूपिणी ललिताम्बिका ।
एवं श्रीललितादेव्या नाम्नां सहस्रकं जगुः ॥

इति श्रीब्रह्माण्डपुराणे उत्तरखण्डे श्रीहयग्रीवागस्त्यसंवादे
श्रीललितासहस्रनामस्तोत्रक नं नाम द्वितीयोध्यायः

## — अथोत्तरभागः —

### – ललितासहस्रनामपठनफलश्रुतिः –

इत्येतन्नामसाहस्रं कथितं ते घटोद्भव ।
रहस्यानां रहस्यं च ललिताप्रीतिदायकम् ॥

अनेन सदृशं स्तोत्रं न भूतं न भविष्यति ।
सर्वरोगप्रशमनं सर्वसम्पत्प्रवर्धनम् ॥

सर्वापमृत्युशमनं कालमृत्युविवारणम् ।
सर्वज्वरार्तिशमनं दीर्घायुष्यप्रदायकम् ॥

पुत्रप्रदमपुत्राणां पुरुषार्थप्रदायकम् ।
इदं विशेषाच्छ्रीदेव्या स्स्तोत्रं प्रीतिदायकम् ॥

जपेन्नित्यं प्रयत्नेन ललितोपास्तितत्परः ।
प्रातस्स्नात्वा विधानेन सन्ध्याकर्म समाप्य च ॥

पूजागृहं ततो गत्वा चक्रराजं समर्चयेत् ।
विद्यां जपेत्सहस्रं वा त्रिशतं शतमेव वा ॥

रहस्यनामसाहस्र मिदं पश्चात्पठे न्नरः ।
जन्ममध्ये सकृच्चापि य एतत्पठते सुधीः ॥

तस्य पुण्यफलं वक्ष्ये श्रुणु त्वं कुम्भसम्भव ।
गङ्गादिसर्वतीर्थेषु यस्स्नायात्कोटिजन्मसु ॥

कोटिलिङ्गप्रतिष्ठा च यः कुर्यादविमुक्तके ।
कुरुक्षेत्रे तु यो दद्यात्कोटिगावोरविग्रहे ॥

कोटी सुवर्णभाराणां श्रोत्रियेषु द्विजन्मसु ।
यः कोटीं हयमेधाना माहरेद्गाङ्गरोधसि ॥

आचरेत्कूपकोटीर्यो निर्जले मरुभूतले ।
दुर्भिक्षेयः प्रतिदिनं कोटिब्राह्मणभोजनम् ॥

श्रद्धया परया कुर्यात्सहस्रं परिवत्सरान् ।
तत्पुण्यकोटीगुणितं भवेत्पुण्यमनुत्तमम् ॥

रहस्यनामसाहस्रे नाम्नोप्येकस्य कीर्तनात् ।
रहस्यनामसाहस्रे नामैकमपि यः पठेत् ॥

तस्य पापानि नश्यन्ति महान्त्यपि न संशयः ।
नित्यकर्माननुष्ठानान्निषिद्धकरणादपि ॥

यत्पापं जायते पुंसां तत्सर्वं नश्यति द्रुतम् ।
बहुनात्र किमुक्तेन श्रुणु त्वं कलशीसुत ॥

अत्रैकनाम्नो या शक्तिः पातकानां निवर्तने ।
तन्निवर्त्यं मघं हर्तुं नालं लोकाश्चतुर्दश ॥

यस्त्यक्त्वा नामसाहस्रं पापहानिमभीप्सति ।
स हि शीतनिवृत्यर्थं हिमशैलं निषेवते ॥

भक्तो यः कीर्तयेन्नित्य मिदं नामसहस्रकम् ।
तस्मै श्रीललितादेवी प्रीताऽभीष्टं प्रयच्छति ॥

अकीर्तयन्निदं-स्तोत्रं कथं भक्तो भविष्यति ।
नित्यं संकीर्तनाऽशक्तः कीर्तयेत्पुण्यवासरे ॥

सन्क्रातौ विषुवे चैव स्वजन्मत्रितयेयने ।
नवम्यां वा चतुर्दश्यां सितायां शुक्रवासरे ॥

कीर्तयेन्नामसाहस्रं पौर्णमास्यां विशेषतः ।
पौर्णमास्यां चन्द्रबिम्बे ध्यात्वा श्रीललिताम्बिकाम् ॥

पञ्चोपचारैः समम्पूज्य पठेन्नामसहस्रकम् ।
सर्वे रोगाः प्रणश्यन्ति दीर्घायुष्यं च विन्दति ॥

अयमायुष्करो नाम प्रयोगः कल्पचोदितः ।
ज्वरार्तं शिरसि स्पृष्ट्वा पठेन्नामसहस्रकम् ॥

तत्क्षणात्प्रशमं याति शिरस्तादो ज्वरोपि च ।
सर्वव्याधिनिवृत्यर्थं स्पृष्ट्वा भस्म पठेदिदम् ॥

तद्भस्मधारणादेव नश्यन्ति व्याधयः क्षणात् ।
जलं सम्मन्त्र्य कुम्भस्थं नामसाहस्रतो मुने ॥

अभिषिञ्चेद्ग्रहग्रस्ता ग्रहा नश्यन्ति तत्क्षणात् ।
सुधासागरमध्यस्थां ध्यात्वा श्रीललिताम्बिकाम् ॥

यः पठेन्नामसाहस्रं विषं तस्य विनश्यति ।
वन्ध्यानां पुत्रलाभाय नामसाहस्रमन्त्रितम् ॥

नवनीतं प्रदद्यात्तु पुत्रलाभो भवेद्ध्रुवम् ।
देव्याः पाशेन सम्बद्धा माकृष्टामंकुशेन च ॥

ध्यात्वाऽभीष्टां स्त्रियं रात्रौ जपेन्नामसहस्रकम् ।
आयाति स्वसमीपं यद्यप्यन्तःपुरं गता ॥

राजाकर्षणकामश्चेद्राजा वस दधिङ्मुखः ।
त्रिरात्रं यः पठेदेतच्छ्रीदेवीध्यानतत्परः ॥

स राजा पारवश्येव तुरङ्गं वामतङ्गजम् ।
आरुह्य याति निकटं दासवत्प्रणिपत्य च ॥

तस्मै राज्यं च कोशं च ददात्येव वशङ्गतः ।
रहस्यनामसाहस्रं यः कीर्तयति नित्यश ॥

तन्मुखालोकमात्रेण मुह्येल्लोकत्रयं मुने ।
यस्त्विदं नामसाहस्रं सकृत्पठति भक्तिमान् ॥

तस्य ये शत्रवस्तेषां निहन्ता शरभेश्वरः ।
यो वाऽभिचारं कुरुते नामसाहस्रपाठके ॥

निवर्त्यं तत्क्रियां हन्यात्तं वै प्रत्यङ्गिरा स्वयम् ।
ये क्रूरदृष्टचा वीक्षन्ते नामसाहस्रपाठकम् ॥

तानन्धान्कुरुते क्षिप्रं स्वयं मार्ताण्डभैरवः ।
धनं यो हरते चोरै र्नामसाहस्रजापिनः ॥

यत्र कुत्र स्थितं वाऽपि क्षेत्रपालो निहन्ति तम् ।
विद्यासु कुरुते वादं यो विद्वान्नामजापिना ॥

तस्य वाक्स्तम्भनं सद्यः करोति वकुळेश्वरी ।
यो राजा कुरुते वैरं नामसाहस्रजापिना ॥

चतुरङ्गबलं तस्य दण्डिनी संहरेत्स्वयम् ।
यः पठेन्नामसाहस्रं षण्मासं भक्तिसंयुतः ॥

लक्ष्मीश्चाञ्चल्यरहिता सदा तिष्ठति तद्गृहे ।
मासमेकं प्रतिदिनं त्रिवारं यः पठेन्नरः ॥

भारती तस्य जिह्वाग्ररङ्गे नृत्यति नित्यशः ।
यस्त्वेकवारं पठति पक्षमात्रमतन्द्रितः ॥

मुह्यन्ति कामवशगा मृगाक्षस्तस्य वीक्षणात् ।
यः पठेन्नामसाहस्रं जन्ममध्ये सकृन्नरः ॥

तद्दृष्टिगोचरा स्सर्वे मुच्यन्ते सर्वकिल्बिषैः ।
यो वेत्ति नामसाहस्रं तस्मै देयं द्विजन्मने ॥

अन्नं वस्त्रं धनं धान्यं नान्येभ्यस्तु कदाचन ।
श्रीमन्त्रराजं यो वेत्ति श्रीचक्रं य स्समर्चति ॥

यः कीर्तयति नामानि तं सत्पात्रं विदुर्बुधाः ।
तस्मै देयं प्रयत्नेन श्रीदेवी प्रीतिमिच्छता ॥

कीर्तयति नामानि मन्त्रराजं न वेत्ति यः ॥
पशुतुल्य स्स विज्ञेयः तस्मै दत्तं निरर्थकम् ॥

परीक्षविद्याविदुष स्तेभ्यो दद्याद्विचक्षणः ।
श्रीमन्त्रराजसदृशो यथा मन्त्रो न विद्यते ॥

देवता ललिता तुल्या यथा नास्ति घटोद्भव ।
रहस्यनामसाहस्रतुल्या नास्ति तथा स्तुतिः ॥

लिखित्वा पुस्तके यस्तु नामसाहस्रमुत्तमम् ।
समर्चयेत्सदा भक्त्या तस्य तुष्यति सुन्दरी ॥

बहुनात्र किमुक्तेन शृणु त्वं कुम्भसम्भव ।
नानेन सदृशं स्तोत्रं सर्वतन्त्रेषु विद्यते ॥

तस्मादुपासको नित्यं कीर्तयेदिदमादरात् ।
एभिर्नामसहस्रैस्तु श्रीचक्रं योऽर्चयेत्सकृत् ॥

पद्मैर्वा तुलसीपुष्पैः कह्लारैर्वा कदम्बकैः ।
चम्पकैर्जातिकुसुमैर्मल्लिकाकरवीरकैः ॥

उत्पलैर्बिल्वपत्रैर्वा कुन्दकेसरपाटलैः ।
अन्यैस्सुगन्धिकुसुमैः केतकीमाधवीमुखैः ॥

तस्य पुण्यफलं वक्तुं न शक्नोति महेश्वरः ।
सा वेत्ति ललितादेवी स्वचक्रार्चनजं फलम् ॥

अन्ये कथं विजानीयु ब्रह्माद्या स्स्वल्पमेधसः ।
प्रतिमासं पौर्णमास्यामेभिर्नामसहस्रकैः ॥

रात्रौ यश्चक्रराजस्थामर्चयेत्परदेवताम् ।
स एव ललितारूपास्तद्रूपा ललितास्वयम् ॥

न तयो विद्यते भेदो भेदकृत्पापकृद्भवेत् ।
महानवम्यां यो भक्तश्श्रीदेवीं चक्रमध्यगाम् ॥

अर्चयेन्नामसाहस्रैस्तस्य मुक्तिः करे स्थिता ।
यस्तु नामसहस्रेण शुक्रवारे समर्चयेत् ॥

चक्रराजे महादेवीं तस्य पुण्यफलं शुणु ।
सर्वान्कामानवाप्येह सर्वसौभाग्यसंयुतः ॥

पुत्रपौत्रादिसंयुक्तो भुक्त्वा भोगान्यथेप्सितम् ।
अन्ते श्रीललितादेव्यास्सायुज्यमतिदुर्लभम् ॥

प्रार्थनीयं शिवाद्यैश्च प्राप्नोत्येव न संशयः ।
यस्सहस्रं ब्राह्मणानामेभिर्नामसहस्रकैः ॥

समर्च्य भोजयेद्भक्त्या पायसापूपषड्रसैः ।
तस्मै प्रीणाति ललिता स्वसाम्राज्यं प्रयच्छति ॥

न तस्य दुर्लभं वस्तु त्रिषु लोकेषु विद्यते ।
निष्कामः कीर्तयेद्यस्तु नामसाहस्रमुत्तमम् ॥

ब्रह्मज्ञानमवाप्नोति येन मुच्येत बन्धनात् ।
धनार्थी धनमाप्नोति यशोर्थी चाप्नुयाद्यशः ॥

विद्यार्थी चाप्नुयाद्विद्यां नामसाहस्रकीर्तनात् ।
नानेन सदृशं स्तोत्रं भोगमोक्षप्रदम्मुने ॥

कीर्तनीयमिदं तस्माद्भोगमोक्षार्थिभिर्नरैः ।
चतुराश्रमनिष्ठैश्च कीर्तनीयमिदं सदा ॥

स्वधर्मसमनुष्ठानवैकल्यपरिपूर्तये ।
कलौ पापैकबहुळे धर्मानुष्ठानवर्जिते ॥

नामसङ्कीर्तनं मुक्त्वा नृणां नान्यत्परायणम् ।
लौकिकाद्वचनान्मुख्यं विष्णुनामानुकीर्तनम् ॥

विष्णुनामसहस्राच्च शिवनामैकमुत्तमम् ।
शिवनामसहस्राच्च देव्यानामैकमुत्तमम् ॥

देवीनामसहस्राणि कोटिशस्सन्ति कुम्भज ।
तेषु मुख्यं दशविधं नामसाहस्रमुच्यते ॥

रहस्यनामसाहस्रमिदं शस्तं दशस्वपि ।
तस्मात्संकीर्तयेन्नित्यं कलिदोषनिवृत्तये ॥

मुख्यं श्रीमातृनामेति न जानन्ति विमोहिताः ।
विष्णुनामपराः केचिच्छिवनामपराः परे ॥

न कश्चिदपि लोकेषु ललितानामतत्परः ।
येनान्यदेवतानाम कीर्तितं जन्मकोटिषु ॥

तस्यैव भवति श्रद्धा श्रीदेवीनामकीर्तने ।
चरमे जन्मनि यथा श्रीविद्योपासको भवेत् ॥

नामसाहस्रापाठश्च तथा चरमजन्मनि ।
यथैव विरळा लोके श्रीविद्याचारवेदिनः ॥

तथैव विरळा गुह्या नामसाहस्रपाठकाः ।
मन्त्रराजजपश्चैव चक्रराजार्चनं तथा ॥

रहस्यनामपाठश्च नाल्पस्य तपसः फलम् ।
अपठन्नामसाहस्रं प्रीणयेद्यो महेश्वरीम् ॥

स चक्षुषा विना रूपं पश्येदेव विमूढधी ।
रहस्यनामसाहस्रं त्यक्त्वा यस्सिद्धिकामुकः ॥

स भोजनं विना नूनं क्षुन्निवृत्तिमभीप्सति ।
यो भक्तो ललितादेव्यास्स नित्यं कीर्तयेदिदम् ॥

नान्यथा प्रीयते देवी कल्पकोटिशतैरपि ।
तस्माद्रहस्यनामानि श्रीमातुः प्रयतः पठेत् ॥

इति ते कथितं स्तोत्रं रहस्यं कुम्भसम्भव ।
नाविद्यावेदिने ब्रूयान्नाभक्ताय कदाचन ॥

यथैव गोप्या श्रीविद्या तथा गोप्यमिदम्मुने ।
पशुतुल्येषु न ब्रूयाज्जनेषु स्तोत्रमुत्तमम् ॥

यो ददाति विमूढात्मा श्रीविद्यारहिताय च ।
तस्मै कुप्यन्ति योगिन्यस्सोनर्थस्सुमहान् स्मृतः ॥

रहस्यनामसाहस्रं तस्मात्संगोपयेदिदम् ।
स्वतन्त्रेण मयानोक्तं तवापि कलशीसुत ॥

ललिताप्रेरणेनैव मयोक्तं स्तोत्रमुत्तमम् ।
कीर्तय त्वमिदं भक्त्या कुम्भयोने निरन्तरम् ॥

तेन तुष्टा महादेवी तवाऽभीष्टं प्रदास्यति ।

सूत उवाच —

इत्युक्त्वा श्रीहयग्रीवो ध्यात्वा श्रीललिताम्बिकाम् ॥

आनन्दमग्न हृदयस्सद्यः पुलकितोऽभवत् ।

इति श्रीब्रह्माण्डपुराणे उत्तरखण्डे हयग्रीवागस्त्यसंवादे
श्रीललितानामसाहस्रफलनिरूपणं नाम तृतीयोध्यायः ।



श्रीरस्तु

## — श्रीललितात्रिशतीस्तोत्रप्रारम्भः —

स कुंकुमविलेपनामळिकचुम्बिकस्तूरिकाम्
समन्दहसितेक्षणां सचरचापपाशांकुशाम् ।

अशेषजनमोहिनीमरुणमाल्यभूषाम्बराम्
जपाकुसुमभासुरां जपविधौ स्मरेदम्बिकाम् ॥

अगस्त्य उवाच —

हयग्रीव दयासिन्धो भगवन्भक्तवत्सल ।
त्वत्तश्श्रुतमशेषेण श्रोतव्यं यद्यदस्ति तत् ॥

रहस्यनामसाहस्रमपि तत्संश्रुतं मया ।
इतः परं च मे नास्ति श्रोतव्यमिति निश्चयः ॥

तथापि मम चित्तस्य पर्याप्तिर्नैव जायते ।
कात्स्न्यार्थःप्राप्य इत्येव शोचयिष्याम्यहं प्रभो ॥

किमिदं कारणं ब्रूहि ज्ञातव्यांशोपि वा पुनः ।
अस्ति चेन्मम तं ब्रूहि ब्रूहीत्युक्त्वा प्रणम्य तम् ॥

सूत उवाच —

समाललम्बे तत्पादयुगळं कलशोद्भवः ।
हयाननो भीतभीतः किमिदं किमिदंत्विति ॥

मुञ्च मुञ्चेति तं चोक्त्वा चिन्ताक्रान्तो बभूव सः ।
चिरं विचार्य निश्चिन्वन्वक्तव्यं न मयेत्यसौ ॥

तूष्णीं स्थितः स्मरन्नाज्ञां ललिताम्बाकृतां पुरा ।
तं प्रणम्यैव स मुनिस्तत्पादावत्यजं स्थितः ॥

वर्षत्रयावधि तथा गुरुशिष्यौ तथास्थितौ ।
तच्छृण्वन्तश्च पश्यन्त स्सर्वे लोकास्सुविस्मिताः ॥

तत्र श्रीललितादेवी कामेश्वरसमन्विता ।
प्रादुर्भूता रहस्येवं हयग्रीवमवोचत ॥

श्रीदेव्युवाच –

अश्वान नावयोः प्रीतिस्शास्त्रविश्वासिनी त्वया ।
राज्यं देयं शिरो देयं न देया षोडशाक्षरी ॥

स्वमातृजारवद्गोप्या विद्यैषे त्यागमा जगुः ।
ततोऽतिगोपनीया मे सर्वपूर्तिकरी स्तुतिः ॥

मया कामेश्वरेणापि कृता सा गोपिता भृशम् ।
मदाज्ञया वचो देव्य श्चक्रु र्नामसहस्रकम् ॥

आवाभ्यां कथितं मुख्यं सर्वपूर्तिकरं स्तवम् ।
सर्वक्रियाणां वैकल्यपूर्ति र्यज्जपतो भवेत् ॥

सर्वपूर्तिकरं तस्मादिदं वामकृतं मया ।
तद् ब्रूहि त्व मगस्त्याय पात्रभूतो न संशयः ॥

पत्न्यस्य लोपामुद्राख्या मामुपास्तेति भक्तितः ।
अयं च नितरां भक्तस्तस्मादस्य वदस्व तत् ॥

अमुं च मानस्त्वत्पादौ वर्षत्रयमसौ स्थितः ।
एतद्ज्ञातु मतो भक्त्या हीदमेव निदर्शनम् ॥

चित्तपर्याप्तिरेतस्य नान्यथा सम्भविष्यति ।
सर्वपूर्तिकरं तस्मादनुज्ञातो यथा वद ॥

सूत उवाच –

इत्युक्त्वान्तर्दधात्रम्बा कामेश्वरसमन्विता ।
अथोत्थाप्य हयग्रीवः पाणिभ्यां कुम्भसम्भवम् ॥

संस्थाप्य निकटे वाच मुवाच भृशविस्मितः ।

हयग्रीव उवाच –

कृतार्थोऽसि कृतार्थोऽसि कृतार्थोऽसि घटोद्भव ॥

त्वत्समो ललिताभक्तो नास्ति नास्ति जगत्त्रये ।
येनागस्त्य स्स्वयं देवी तव वक्तव्य मन्वशात् ॥

सच्छिष्येण त्वयाहं च द्रष्टवानस्मि तां शिवाम् ।
यतन्ते यद्दर्शनाय ब्रह्मविष्णवीशपूर्वकाः ॥

अतः परं ते वक्ष्यामि सर्वपूर्तिकरं स्तवम् ।
यस्य स्मरणमात्रेण पर्याप्ति स्ते भवेद् हृदि ॥

रहस्यनामसाहस्रादतिगुह्यतमं मुने ।
आवश्यकं ततो ह्येतल्ललितां समुपासताम् ॥

तदहं ते प्रवक्ष्यामि ललिताम्बानुशासनात् ।
श्रीमत्पञ्चदशाक्षर्याः कादिवर्णान्क्रमान्मुने ॥

पृथग्विंशति नामानि कथितानि घटोद्भव ।
आहृत्य नाम्नां त्रिशती सर्वसम्पूर्तिकारिणी ॥

रहस्याऽतिरहस्येषा गोपनीया प्रयत्नतः ।
तां श्रुणुष्व महाभाग सावधानेन चेतसा ॥

केवलं नाम बुद्धि स्ते न कार्या तेषु कुम्भज ।
मन्त्रात्मकत्वमेतेषां नाम्नां नामात्मतापि च ॥

तस्मादेकाग्रमनसा श्रोतव्यं भवता मुने ।

सूत उवाच –

इत्युक्त्वा तु हयग्रीवः प्रोचे नामशतत्रयम् ।

अस्यश्री ललितात्रिशतीस्तोत्रमहामन्त्रस्य भगवान् हयग्रीवऋषिः अनुष्टुप्छन्दः श्रीललिता महाभट्टारिका देवता ऐं बीजं सौः शक्तिः क्लीं कीलकम् मम चतुर्विधपुरुषार्थफलसिध्यर्थे जपे विनियोगः । ऐमित्यादि षडङ्गन्यासः ॥

ध्यानम् – अतिमधुरचापहस्ता मपरिमितामोदबाणसौभाग्याम् ।
अरुणा मतिशयकरुणा मभिनवकुळसुन्दरीं वन्दे ॥

लमित्यादि पञ्चपूजां कृत्वा ।

हयग्रीव उवाच –

ककाररूपा कल्याणी कल्याणगुणशालिनी ।
कल्याणशैलनिलया कमनीया कलावती ॥

कमलाक्षी कल्मषघ्नी करुणामृतसागरा ।
कदम्बकाननावासा कदम्बकुसुमप्रिया ॥

कन्दर्पविद्या कन्दर्पजनकापाङ्गवीक्षणा ।
कर्पूरवीटीसौरभ्य कल्लोलितककुप्तटा ॥

कलिदोषहरा कञ्जलोचना कम्रविग्रहा ।
कर्मादिसाक्षिणी कारयित्री कर्मफलप्रदा ॥

एकाररूपा चैकाक्षर्येकानेकाक्षराकृतिः ।
एतत्तदित्यनिर्देश्या चैकानन्दचिदाकृतिः ॥

एवमित्यागमाबोध्या चैकभक्तिमदर्चिता ।
एकाग्रचित्तनिर्ध्याता चैषणा रहितादृता ॥

एलासुगन्धिचिकुरा चैनःकूटविनाशिनी ।
एकभोगा चैकरसा चैकैश्वर्यप्रदायिनी ॥

एकातपत्रसाम्राज्यप्रदा चैकान्तपूजिता ।
एधमानप्रभा चैजदनेजज्जगदीश्वरी ॥

एकवीरादिसंसेव्या चैकप्राभवशालिनी ।
ईकाररूपिणीशित्री चेप्सितार्थप्रदायिनी ॥

ईदृगित्यविनिर्देश्या चेश्वरत्वविधायिनी ।
ईशानादि ब्रह्ममयी चेशित्वाद्यष्टसिद्धिदा ॥

ईक्षित्रीक्षणसृष्टाण्डकोटिरीश्वरवल्लभा ।
ईडिता चेश्वरार्धाङ्गशरीरेशाधिदेवता ॥

ईश्वरप्रेरणकरी चेशताण्डवसाक्षिणी ।
ईश्वरोत्सङ्गनिलया चेतिबाधाविनाशिनी ॥

ईहाविरहिता चेशशक्तिरीषत्स्मितानना ।
लकाररूपा ललिता लक्ष्मीवाणीनिषेविता ॥

लाकिनी ललनारूपा लसद्दाडिमपाटला ।
ललन्तिका लसत्फाला ललाटनयनार्चिता ॥

लक्षणोज्वलदिव्याङ्गी लक्षकोटचण्डनायिका ।
लक्ष्यार्था लक्षणा गम्या लब्धकामा लता तनुः ॥

ललामराजदळिका लम्बमुक्तालताञ्चिता ।
लम्बोदरप्रसूर्लभ्या लज्जाढ्या लयवर्जिता ॥

ह्लींकाररूपा ह्लींकारनिलया ह्लींपदप्रिया ।
ह्लींकारबीजा ह्लींकारमन्त्रा ह्लींकारलक्षणा ॥

ह्लींकारजपसुप्रीता ह्लींमतिर्ह्लींविभूषणा ।
ह्लींशीला ह्लींपदाराध्या ह्लींगर्भा ह्लींपदाभिधा ॥

ह्लींकारवाच्या ह्लींकारपूज्या ह्लींकारपीठिका ।
ह्लींकारवेद्या ह्लींकारचिन्त्या ह्लीं ह्लीं शरीरिणी ॥

हकाररूपा हलधृक्पूजिता हरिणेक्षणा ।
हरप्रिया हराराध्या हरिब्रह्मेन्द्रसेविता ॥

हयारूढा सेविताङ्घ्रिर्हयमेधसमर्चिता ।
हर्यक्षवाहना हंसवाहना हतदानवा ॥

हत्यादिपापशमनी हरिदश्वादिसेविता ।
हस्तिकुम्भोत्तुङ्गकुचा हस्तिकृत्तिप्रियाङ्गना ॥

हरिद्राकुंकुमादिग्धा हर्यश्वाद्यमरार्चिता ।
हरिकेशसखी हादिविद्या हाला मदालसा ॥

सकाररूपा सर्वज्ञा सर्वेशी सर्वमङ्गळा ।
सर्वकर्त्री सर्वधात्री सर्वहन्त्री सनातनी ॥

सर्वानवद्या सर्वाङ्गसुन्दरी सर्वसाक्षिणी ।
सर्वात्मिका सर्वसौख्यदात्री सर्वविमोहिनी ॥

सर्वाधारा सर्वगता सर्वावगुणवर्जिता ।
सर्वारुणा सर्वमाता सर्वाभरणभूषिता ॥

ककारार्था कालहन्त्री कामेशी कामितार्थदा ।
कामसञ्जीविनी कल्या कठिनस्तनमण्डला ॥

करभोरूः कलानाथमुखी कचजिताम्बुदा ।
कटाक्षस्यन्दिकरुणा कपालिप्राणनायिका ॥

कारुण्यविग्रहा कान्ता कान्तिधूतजपावळिः ।
कलालापा कम्बुकण्ठी करनिर्जितपल्लवा ॥

कल्पवल्ली समभुजा कस्तूरीतिलकोज्वला ।
हकारार्था हंसगतिर्हाटकाभरणोज्वला ॥

हारहारि कुचाभोगा हाकिनी हल्यवर्जिता ।
हरित्पतिसमाराध्या हठात्कारहतासुरा ॥

हर्षप्रदा हविर्भोक्त्री हार्दसन्तमसापहा ।
हल्लीहालास्यसन्तुष्टा हंसमन्त्रार्थरूपिणी ॥

हानोपादाननिर्मुक्ता हर्षिणी हरिसोदरी ।
हाहाहूहूमुखस्तुत्या हानिवृद्धिविवर्जिता ॥

हय्यङ्गवीनहृदया हरिकोपारुणांशुका ।
लकारार्था लतापूज्या लयस्थित्युद्भवेश्वरी ॥

लास्यदर्शनसन्तुष्टा लाभालाभविवर्जिता ।
लङ्घ्येतराज्ञा लावण्यशालिनी लघुसिद्धिदा ॥

लाक्षारससवर्णाभा लक्ष्मणाग्रजपूजिता ।
लभ्येतरा लब्धभक्तिसुलभा लाङ्गलायुधा ॥

लग्नचामरहस्तश्रीशारदापरिवीजिता ।
लज्जापदसमाराध्या लम्पटा लकुळेश्वरी ॥

लब्धमाना लब्धरसा लब्धसम्पत्समुन्नतिः ।
ह्रींकारिणी ह्रींकारादि ह्रींमध्या ह्रींशिखामणिः ॥

ह्रींकारकुण्डाग्निशिखा ह्रींकारशशिचन्द्रिका ।
ह्रींकारभास्कररुचिर्ह्रीङ्काराम्भोदचञ्चला ॥

ह्रींकारकन्दांकुरिका ह्रींकारैकपरायणा ।
ह्रींकारदीर्घिका हंसी ह्रींकारोद्यानकेकिनी ॥

ह्रींकारारण्यहरिणी ह्रींकारावालवल्लरी ।
ह्रींकारपञ्जरशुकी ह्रींकाराङ्गणदीपिका ॥

ह्रींकारकन्दरासिंही ह्रींकाराम्बुजभृङ्गिका ।
ह्रींकारसुमनोमाध्वी ह्रींकारतरुमञ्जरी ॥

सकाराख्या समरसा सकलागमसंस्तुता ।
सर्ववेदान्ततात्पर्यभूमिस्सदसदाश्रया ॥

सकला सच्चिदानन्दा साध्वी सद्गतिदायिनी ।
सनकादिमुनिध्येया सदाशिवकुटुम्बिनी ॥

सकलाधिष्ठानरूपा सत्वरूपा समाकृतिः ।
सर्वप्रपञ्चनिर्मात्री समातानिकवर्जिता ॥

सर्वोत्तुङ्गा सङ्गहीना सद्गुणा सकलेष्टदा ।
ककरिणी काव्यलोला कामेश्वरमनोहरा ॥

कामेश्वरप्राणनाडी कामेशोत्सङ्गवासिनी ।
कामेश्वरलिङ्गिताङ्गी कामेश्वरसुखप्रदा ॥

कामेश्वरप्रणयिनी कामेश्वरविलासिनी ।
कामेश्वरतपस्सिद्धिः कामेश्वरमनःप्रिया ॥

कामेश्वरप्राणनाथा कामेश्वरविमोहिनी ।
कामेश्वरब्रह्मविद्या कामेश्वरगृहेश्वरी ॥

कामेश्वराह्लादकरी कामेश्वर महेश्वरी ।
कामेश्वरी कामकोटिनिलया कांक्षितार्थदा ॥

लकारिणी लब्धरूपा लब्धधीर्लब्धवाञ्छिता ।
लब्धपापमनोदूरा लब्धाहङ्कारदुर्गमा ॥

लब्धशक्तिर्लब्धदेहा लब्धैश्वर्यसमुन्नतिः ।
लब्धबुद्धिर्लब्धलीला लब्धयौवनशालिनी ॥

लब्धातिशयसर्वाङ्गसौन्दर्या लब्धविभ्रमा ।
लब्धरागा लब्धगतिर्लब्धानङ्गागमस्थिता ॥

लब्धभोगा लब्धसुखा लब्धहर्षाभिपूजिता ।
ह्रींकारमूर्तिर्ह्रीङ्कारसौधशृङ्गकपोतिका ॥

ह्रींकारदुग्धाब्धिसुधा ह्रींकारकमलेन्दिरा ।
ह्रींकारमणिदीपार्चिर्ह्रीङ्कारतरुशारिका ॥

ह्रींकारपेटिकमणिः ह्रींकारादर्शबिम्बिका ।
ह्रींकारकोशासिलता ह्रींकारास्थाननर्तकी ॥

ह्रींकारशुक्तिकामुक्तामणिर्ह्रीङ्कारबोधिता ।
ह्रींकारमयसौवर्णस्तम्भविद्रुमपुत्रिका ॥

ह्रींकारवेदोपनिषद्ध्रीङ्काराध्वरदक्षिणा ।
ह्रींकारनन्दनाराम नवकल्पकवल्लरी ॥

ह्रींकारहिमवद्गङ्गा ह्रींकारार्णवकौस्तुभा ।
ह्रींकारमन्त्रसर्वस्वा ह्रींकारपरसौख्यदा ॥

हयग्रीवः —

इतीदं ते मयाख्यातं दिव्यं नाम्नां शतत्रयम् ।
रहस्यातिरहस्यत्वाद् गोपनीयं महामुने ॥

शिववर्णानि नामानि श्रीदेवीकथितानि वै ।
शक्त्यक्षराणि नामानि कामेशकथितानि हि ॥

उभयाक्षरनामानि ह्युभाभ्यां कथितानि वै ।
तदन्यैर्ग्रथितं स्तोत्रमेतस्य सदृशं किमु ॥

नानेन सदृशं स्तोत्रं श्रीदेवीप्रीतिदायकम् ।
लोकत्रयेपि कल्याणं सम्भवेन्नात्र संशयः ॥

सूतः —

इति हयमुखगीतं स्तोत्रराजं निशम्य ।
प्रगळितकलुषो भूच्छित्तपर्याप्तिमेत्य ॥

निजगुरुमथ नत्वा कुम्भजन्मा तदुक्तेः ।
पुनरधिकरहस्यं ज्ञातुमेवं जगाद ॥

अगस्त्यः —

अश्वानन महाभाग रहस्य मपि मे वद ।
शिववर्णानि कान्यत्र शक्तिवर्णानि कानि हि ॥

शिवयोरपि वर्णानि कानि मे वद देशिक ।

श्री हयग्रीवः —

इति पृष्टः कुम्भजेन हयग्रीवोऽवदत्पुनः ॥

तव गोप्यं किमस्तीह साक्षादम्बाकटाक्षतः ।
इदं त्वतिरहस्यं ते वक्ष्यामि श्रुणु कुम्भज ॥

एतद्विज्ञानमात्रेण श्रीविद्या सिद्धिदा भवेत् ।
कत्रयं हद्वयं चैव शैवोभागः प्रकीर्तितः ॥

शक्त्यक्षराणि शेषाणि ह्रींकारउभयात्मकः ।
एवं विभागमज्ञात्वा श्रीविद्याजपशीलिनः ॥

न तेषां सिद्धिदा विद्या कल्पकोटिशतैरपि ।
चतुर्भिश्शिवचक्रैश्च शक्तिचक्रैश्च पञ्चभिः ॥

नवचक्रैश्च संसिद्धं श्रीचक्रं शिवयोर्वपुः ।
त्रिकोणमष्टकोणं च दशकोणद्वयं तथा ॥

चतुर्दशारं चैतानि शक्तिचक्राणि पञ्च वै ।
बिन्दुश्चाष्टदळं पद्मं पद्मं षोडशपत्रकम् ॥

चतुरश्रं च चत्वारि शिवचक्राण्यनुक्रमात् ।
त्रिकोणे बैन्दवं श्लिष्टमष्टारेष्टदळाम्बुजम् ॥

दशारयोष्षोडशारं भूपुरं भुवनाश्रके ।
शैवानामपि शाक्तानां चक्राणां च परस्परम् ॥

अविनाभावसंबन्धं यो जानाति स चक्रवित् ।
त्रिकोणरूपिणीशक्तिः बिन्दुरूपः परश्शिवः ॥

अविनाभावसंबन्धः तस्माबिन्दुत्रिकोणयोः ।
एवं विभगमज्ञात्वा श्रीचक्रं य स्समर्चयेत् ॥

न तत्फल मवाप्नोति ललिताम्बा न तुष्यति ।
ये च जानन्ति लोकेस्मिन् श्रीविद्यां चक्रवेदिनः ॥

सामान्यवेदिनस्ते वै विशेषज्ञोतिदुर्लभः ।
स्वयं विद्या विशेषज्ञो विशेषज्ञं समर्चयेत् ॥

तस्मै देया ततो ग्राह्यं श्रीविद्या चक्रवेदिना ।
अन्धं तमः प्रविशन्ति ये अविद्यामुपासते ॥

इति श्रुतिरपाहैता न विद्योपासकान् पुनः ।
विद्यानुपासकानेव निन्दत्याऽऽरुणिकी श्रुतिः ॥

अश्रुता सश्रुतासश्च यज्वानो येप्ययज्वनः ।
सर्वन्तो नापेक्षन्त इन्द्रमग्निं च ये विदुः ॥

सिकता इव संयन्ति रश्मिभिस्समुदीरिताः ।
अस्माल्लोकादमुष्माच्चेत्याह चारुणिकी श्रुतिः ॥

यः प्राप्तः पृश्निभावं वा यदि वा शङ्करस्स्वयम् ।
तेनैव लभ्यते विद्या श्रीमत्पञ्चदशाक्षरी ॥

इति तन्त्रेषु बहुधा विद्याया महिमोच्यते ।
मोक्षैकहेतुविद्यातु श्रीविद्यैव न संशयः ॥

तस्माद्विद्याविदे दद्यात् ख्यापयेत् तद्गुणान्सुधीः ।
स्वयं विद्या विशेषज्ञो विद्यामहात्म्यवेद्यपि ॥

विद्याविदं नार्चयेच्चेत् को वा तं पूजयेज्जनः ।
प्रसंगादेतदुक्तं ते प्रकृतं श्रुणु कुंभज ॥

यः कीर्तयेत्सकृद्भक्त्या दिव्यं नाम्नां शतत्रयम् ।
तस्य पुण्यफलं वक्ष्ये विस्तरेण घटोद्भव ॥

रहस्यनामसाहस्रपाठे यत्फलमीरितम् ।
तत्कोटिकोटिगुणितमेकनाम जपाद्भवेत् ॥

कामेश्वराभ्यां तदिदं कृतं नामशतत्रयम् ।
नान्येव तुलयेदेतत्स्तोत्रेणान्यकृतेन तु ॥

श्रियःपरंपरा यस्य भाविनीतूत्तरोत्तरम् ।
तेनैव लभ्यते नाम्नां त्रिशती सर्वकामदा ॥

अस्या नाम्नां त्रिशत्यास्तु महिमा केन वर्ण्यते ।
या स्वयं शिवयोर्वक्त्रपद्माभ्यां परिनिस्सृता ॥

वित्या षोडशिकारूपान्विप्रानादौ तु भोजयेत् ।
अभ्यक्तान्गन्धतैलेन स्नातानुष्णेन वारिणा ॥

अभ्यर्च्य वस्त्रगन्धाद्यैः कामेश्वर्यादि नामभिः ।
अपूपैश्शर्कराज्यैश्च फलैः पुष्पैस्सुगन्धिभिः ॥

विद्याविदो विशेषेण भोजयेत्षोडशद्विजान् ।
एवं नित्यबलिं कुर्यादादौ ब्राह्मणभोजने ॥

पश्चात्त्रिशत्या नाम्नां तु ब्राह्मणान्क्रमशोऽर्चयेत् ।
तैलाभ्यङ्गादिकं दद्याद्विभवे सति भक्तितः ॥

शुक्लप्रतिपदारभ्य पौर्णमास्यवधिक्रमात् ।
दिवसे दिवसे विप्रा भोज्या विंशतिसङ्ख्यया ॥

दशभिः पञ्चभिर्वापि त्रिभिरेकेन वा दिनैः ।
त्रिंशत्षष्टिश्शतं विप्रान्भोजयेत्त्रिशतं क्रमात् ॥

एवं यः कुरुते भक्त्या जन्ममध्ये सकृन्नरः ।
तस्यैव सफलं जन्म मुक्तिस्तस्य करे स्थिता ॥

रहस्यनामसाहस्रैर्र्चनेप्येव मेव हि ।
आदौ नित्यबलिं कुर्यात्पश्चाद्ब्राह्मणभोजनम् ॥

रहस्यनामसाहस्रमहिमा यो मयोदितः ।
स शीकराणुरत्रैकनाम्नो महिमवारिधेः ॥

वाग्देवी रचिते नामसाहस्रे यद्यदीरितम् ।
तत्फलमवाप्नोति नाम्नोप्येकस्य कीर्तनात् ॥

एतदन्यैर्जपैः स्तोत्रैरर्चनैर्यत्फलं लभेत् ।
तत्फलं कोटिगुणितं भवेन्नामशतत्रयात् ॥

रहस्यनामसाहस्रकोट्यावृत्यास्तु यत्फलम् ।
तद्भवेत् कोटिगुणितं नामत्रिशतकीर्तनात् ॥

वाग्देवी रचिते स्तोत्रे तादृशो महिमा यदि ।
साक्षात्कामेशकामेशी कृतेस्मिन् गृह्यतामिति ॥

सकृत्संकीर्तनादेव नाम्नामस्मिन् शतत्रये ।
भवेच्चित्तस्य पर्याप्तिः नूनमन्यानपेक्षिणी ॥

न ज्ञातव्यमितस्त्वन्यत् जगत्सर्वं च कुंभज ।
यद्यत्साध्यतमं कार्यं तत्तदर्थमिदं जपेत् ॥

तत्तत्सिद्धिमवाप्नोति पश्चात्कार्यं परीक्षयेत् ।
ये ये प्रयोगाः तन्त्रेषु तैस्तैर्यत्साध्यते ध्रुवम् ॥

तत्सर्वं सिद्ध्यति क्षिप्रं नामत्रिशतकीर्तनात् ।
आयुष्करं पुष्टिकरं पुत्रदं वश्यकारकम् ॥

विद्याप्रदं कीर्तिकरं सुकवित्वप्रदायकम् ।
सर्वसंपत्प्रदं सर्वभोगदं सर्वसौख्यदम् ॥

सर्वाभीष्टप्रदञ्चैव देवीनामशतत्रयम् ।
एतज्जपपरो भूयान्नान्यदिच्छेत् कदाचन ॥

एतत्कीर्तनसन्तुष्टा श्रीदेवीललिताम्बिका ।
भक्तस्य यद्यदिष्टं स्यात् तत्तत्पूरयते ध्रुवम् ॥

तस्मात् कुंभोद्भवमुने कीर्तय्यत्वमिदं सदा ।
अपरं किञ्चिदपि ते बोद्धव्यं नावशिष्यते ॥

इति ते कथितं स्तोत्रं ललिताप्रीतिदायकम् ।
नाविद्यावेदिने ब्रूयान्नाभक्ताय कदाचन ॥

न शठाय न दुष्टाय नाविश्वासाय कर्हिचित् ।
यो ब्रूयात् त्रिशतीं नाम्नां तस्यानर्थो महान् भवेत् ॥

इत्याज्ञा शाङ्करी प्रोक्ता तस्माद्गोप्यमिदं त्वया ।
ललिताप्रेरितेनैव मयोक्तं स्तोत्रमुत्तमम् ॥

रहस्यनामसाहस्रादतिगोप्यमिदं मुने ।
एवमुक्त्वा हयग्रीवः कुम्भजं तापसोत्तमम् ॥

स्तोत्रेणानेन ललितां स्तुत्वा त्रिपुरसुन्दरीम् ।
आनन्दलहरीमग्नमानसस्समवर्तत ॥

इति श्रीब्रह्माण्डपुराणे उत्तरखण्डे हयग्रीवागस्त्यसंवादे ललितोपाख्याने स्तोत्रखण्डे ललितात्रिशतीस्तोत्ररत्नं संपूर्णम् ।



## — श्रीदेवीवंभवाश्चर्याष्टोत्तरशतदिव्यनामस्तोत्रम् —

पार्वत्युवाच —

सर्वज्ञ करुणासिन्धो सर्वभूतमहेश्वर ।
करुणाकर गम्भीर कटाक्षपदवीं सकृत् ॥

मयि प्रेरय मन्नाथ मन्दहासप्रभासिताम् ।
लभ्यते वर्णराड्व्यक्तं तव सौमुख्यसुन्दरम् ॥

वर्तते हृदि किञ्चिन्मे ज्ञातव्यं चिरसंभृतम् ।
कीदृशी वा तव कृपा चापलं मम हास्यदम् ॥

भुक्तिमुक्त्याश्रयं नित्यं साधकं त्वद्वचोमृतम् ।
इच्छा ममैव महती सर्वसारातिलङ्घिनी ॥

ध्यानं स्तुतिं जपं कर्म विना सर्वार्थसिद्धिदम् ।
उपायं वद मे शम्भो दीनलोकोपकारकम् ॥

असूयाक्रान्तमनसस्त्वन्माहात्म्यैकलोलुपाः ।
दुर्जनास्सज्जना दीना मूर्खाणाञ्च कदाचन ॥

सुतत्वमुपदेष्टुं वा दातुं वा वाञ्छितं फलम् ।
भयं वारयितुं वापि न समर्था न तत्पराः ॥

तस्माद्दीनोपकाराय स्वल्पायासं महाफलम् ।
उपायं वदमन्नाथ सर्वजीवदयापर ॥

ईश्वरः —

देवि तुष्टोस्मि भद्रं ते दीनावनदुरंधरे ।
साधु पृष्टं महाभागे साधयिष्यामि ते प्रियम् ॥

विनायासं फलं नास्ति स्वल्पायासं तु दुर्लभम् ।
साधनं दुर्लभं लोके कर्तव्यञ्च तव प्रियम् ॥

अस्ति गुह्यतमं किञ्चत् चिन्तेयं त्यजतो त्वया ।
त्वदीयवैभवाश्चर्यनाम्नामष्टोत्तरं शतम् ॥

आश्चर्यनामाष्टशतं ब्रह्मविष्णवादि दुर्लभम् ।
दक्षिणामूर्तिरूपेण ध्याननिष्ठे पुरा मयि ॥

उपदिष्टं त्वया देवि मया सम्यक् धृतं हि तत् ।
तत्फलं च तदेतन्मे पतिप्रियासि परायणि ॥

वामनाय मया प्रोक्तं बलिवञ्चनकामिने ।
तथा परशुरामाय जगद्विजयकामिने ॥

सीतावियोगखिन्नाय रामायारिवधार्थिने ।
षोडशस्त्रीसहस्रेच्छाप्रदानोद्युक्तचेतसे ॥

कृष्णाय वेदव्यासाय वेदव्यसनकामिने ।
सुभद्रासक्तचित्ताय पार्थायारिविजिष्णवे ॥

अद्यापि सिद्धिकामेभ्यो महर्षिभ्यश्च बोधितम् ।
तदेतदद्भुतं गोप्यं न मृषा शिवभाषणम् ॥

तव स्नेहात् प्रवक्ष्यामि त्वत्प्रियं मम च प्रियम् ।
नामाष्टशतकस्यास्य ऋषिश्चानन्दभैरवः ॥

छन्दोनुष्टप्तथादेवी देवतानन्दभैरवी ।
मूलखण्डे त्रिभिः प्रोक्तं बीजशक्त्यादिकं तथा ॥

मूलाङ्गैरङ्गक्लुप्तिस्यात् तथा शेषं तु मूलवत् ।

अस्यश्री आश्चर्याष्टोत्तरशतदिव्यनामस्तोत्रमहामन्त्रस्य आनन्दभैरवऋषिः अनुष्टुप्छन्दः - आनन्दभैरवी महात्रिपुरसुन्दरी देवता वाग्भवखण्डं बीजं कामराजखण्डं शक्तिः तार्तियीकखण्डं कीलकम महात्रिपुरसुन्दरीप्रीत्यर्थे सान्निध्यसिद्ध्यर्थे जपे विनियोगः ॥ मूलखण्डत्रयेण षडङ्गन्यासः । लोकत्रयेण दिग्बन्धः ॥

ध्यानम् —

अथ ध्यानं प्रवक्ष्यामि तत्तद्वाञ्छितसिद्धये ॥

प्रसादाय महादेव्या समाहितमनाश्शृणु ।
ध्यायेदपारगम्भीरममृताम्भोधिमद्भुतम् ॥

कल्लोलजाळविक्रीडप्रोच्छलद्घूर्णदुर्गमम् ।
चतुरश्रमणिद्वीपं सुरद्रुमसहोज्वलम् ॥

तन्मध्ये तत्र रङ्गाळिशोभितान्तमनुस्मरेत् ।
प्राकरगोपुराश्चर्यतोरणश्रीविराजिताम् ॥

भूप्रस्तारमहाचक्र रूपां तत्र स्मरेत्पुरीम् ।
तत्पुर्यान्तु यथा स्थाने महामेरुं विचिन्तयेत ॥

तत्रापि पूर्ववद्ध्यायेत्सर्वावरणदेवताः ।
तन्मध्ये बैन्दवस्थाने महामेरुं विचिन्तयेत् ।

तत्रापि पूर्ववद्ध्यायेत्सर्वावरणदेवताः ।
तद्बिन्दौ सुन्दरं ध्यायेद्दिव्यमाणिक्यमण्टपम् ॥

अर्थमेवात्मकं तत्र रत्नसिंहासनं स्मरेत् ।
रत्नपर्यङ्कमाश्चर्यं पञ्चब्रह्ममयं स्मरेत् ॥

आमोदबन्धुराश्चर्याम्लानपुष्पसुमालिकम् ।
तद्विन्दौ विपुलं ध्यायेत्तत्र विद्यासनं महत् ॥

तत्र पद्मासनासीनकामेशाङ्कनिवासिनीम् ।
विद्रवच्चन्द्रकलिकास्थानविज्ञाननन्दिताम् ॥

अतित्वरदृढाश्लिष्टतत्पुरोभागसङ्गताम् ।
स्वाधाराद्वादि षट्चक्रमध्यभागविराजिताम् ॥

यथोचित शिवोन्नीतवेणीचुबुकमोहिताम् ।
कामतन्त्ररहस्यज्ञां ज्ञातानुगुणचेष्टिताम् ॥

कर्मसिद्धैस्सदा ध्येयामानन्दोल्लाससुन्दरीम् ।
निजपादांबुजध्यानतत्पराभीष्टसिद्धिदाम् ॥

ब्रह्मविष्ण्वादिभिर्ध्येयां महावीरसमर्चिताम् ।
सिद्धसङ्घैर्नतपदां योगिनीगणसेविताम् ॥

मुक्तोपगीतचरितां प्राकृतप्राणिदूरगाम् ।
प्रतिक्षणमणिस्वर्णवर्षकल्पद्रुमूलकाम ॥

चक्रलम्बिमहारत्नमालाचुम्बितमौळिकाम् ।
चामरान्दोळनोत्पन्नवातांकूरहृतश्रमाम् ॥

गणेशस्कन्दशास्त्रादि बाललालनहर्षिताम् ।
दासीकुलसमुन्नीतैरुपचारैः प्रसादिताम् ॥

मेरुमन्दर सैधान्तरावाससुखगर्विताम् ।
श्रीवीरकटकोद्भासिवामपादप्रसारिणीम् ॥

नामोरुन्यस्तमञ्जीरलसद्दक्षपदाम्बुजाम् ।
मेरुचक्रात्मिकानर्घ्यमाणिक्यमकुटोज्वलाम् ॥

कोटीर कोटि युक्चन्द्रकलामयकलोज्वलाम् ।
पाशांकुशेक्षुकोदण्डपञ्चबाणलसत्कराम् ॥

मञ्जुरोमलतानाभिवलि संमोहिताऽखिलाम् ।
मध्यमेन महारम्यप्रकटोग्रकटीतटाम् ॥

अच्छवस्त्रान्तरोद्दीप्यज्जघनातिरहस्यकाम् ।
समोरुजानुजंघान्तां वीराधीनमहेश्वराम् ॥

प्रतिक्षणोन्मिषद्बिन्दुकण्डूतिस्मरमन्दिराम् ।
बिन्दूदयैककालेन बहिर्भावस्वलिङ्गनीम् ॥

लिङ्गोदयैककालेन सीत्कारविशदस्मिताम् ।
स्वर्गापवर्गदपदां महाभयनिवारिणीम् ॥

सर्वावयवसौन्दर्यां सौभाग्यहृदयङ्गमाम् ।
त्रैलोक्यमोहनाकारवशीकृतचराचराम् ॥

भाग्यवन्मानसावासलालसां मदलालसाम् ।
भुक्तिमुक्तिप्रसादेन भक्तचित्तप्रसादिनीम् ॥

भक्ताभिलाषानुगुणवेषाद्भुततराकृतिम् ।
मुख्याभरणरम्याङ्गी मङ्गरागस्रगुज्वलाम् ॥

पारिजातमिलद्गन्धहरिद्राकुंकुमोल्बणाम् ।
ताम्पूलपूरितमुखीं कज्जलानीललोचनाम् ॥

सर्वस्यातिशयामेकां देवताजीवनायिकाम् ।
मन्दहासमुखालोकसम्मानितसदाशिवाम् ॥

सौमङ्गल्यमहासूत्रमहात्म्यस्थिरशङ्कराम् ।
मकारपञ्चकव्यक्तपरमानन्दतुन्दिलाम् ॥

जननीं जगदाराध्यां राजराजेश्वरेश्वरीम् ।
सर्वेश्वरीं सदानन्दां सर्वाधिष्ठानरूपिणीम् ॥

ज्योतिस्वरूपां चिद्रूपां सर्ववेदान्तपारगाम् ।
ब्रह्मविष्ण्वादिदेवानामपि दुर्गमवैभवाम् ॥

एवं ध्यात्वा महादेवीमुपचारान् प्रकल्पयेत् ।
जपेदनन्यमनसा नाम्नामष्टोत्तरं शतम् ॥

ओं ऐं ह्रीं श्रीं

ओं परमानन्दलहरी परचैतन्यदीपिका ।
स्वयंप्रकाशकिरणा नित्यवैभवशालिनी ॥

विशुद्धकेवलाखण्ड सत्यकालात्मरूपिणी ।
आदिमध्यान्तरहिता महामायाविलासिनी ॥

गुणत्रयपरिच्छेत्री सर्वतत्वप्रकाशिनी ।
स्त्रीपुंसभावरसिका जगत्सर्गादिलम्पटा ॥

अशेषनामरूपादि भेदच्छेदरविप्रभा ।
अनादिवासनारूपा वासनोद्यत्प्रपञ्चिका ॥

प्रपञ्चोपशमप्रौढा चराचरजगन्मयी ।
समस्तजगदाधारा सर्वसञ्जीवनोत्सुका ॥

भक्तचेतोमयानन्त स्वार्थवैभवविभ्रमा ।
सर्वाकर्षणवश्यादि सर्वकर्मदुरंधरा ॥

विज्ञानपरमानन्द विद्यानन्तानसिद्धिदा ।
आयुरारोग्यसौभाग्यबल श्रीकीर्तिभाग्यदा ॥

धनधान्यमणीवस्त्रभूषालेपनमाल्यदा ।
गृहग्राममहाराज्यसाम्राज्यसुखदायिनी ॥

सप्ता सकलसम्पूर्ण सार्वभौमफलप्रदा ।
ब्रह्मविष्णुशिवेन्द्रादि पदविश्राणनक्षमा ॥

भुक्तिमुक्तिमहाभक्तिविरक्त्यद्वैतदायिनी ।
निग्रहानुग्रहाध्यक्षा ज्ञाननिर्णतदायिनी ॥

परकायप्रवेशादि योगसिद्धिप्रदायिनी ।
शिष्टसञ्जीवनप्रौढा दुष्टसंहारसिद्धिदा ॥

लीलाविनिर्मितानेककोटिब्रह्माण्डमण्डला ।
एकानेकात्मिका नानारूपिण्यर्धाङ्गनेश्वरी ॥

शिवशक्तिमयी नित्यश्रृङ्गारैकरसप्रिया ।
तुष्टा पुष्टा परिच्छिन्ना नित्ययौवनमोहिनी ॥

समस्तदेवतारूपा सर्वदेवाधिदेवता ।
देवार्षिपितृसिद्धादि योगिनी भैरवात्मिका ॥

निधिसिद्धिमणीमुद्रा शस्त्रास्त्रायुधभासुरा ।
छत्रचामरवादित्रपताकव्यजनाञ्चिता ॥

हस्त्यश्वरथपादातामात्यसेना सुसेविता ।
पुरोहितकुलाचार्य गुरुशिष्यादि सेविता ॥

सुधासमुद्रमध्योद्यत्सुरद्रुमनिवासिनी ।
मणिद्वीपान्तरप्रोद्यत्कदम्बवनवासिनी ॥

चिन्तामणिगृहान्तस्था मणिमण्टपमध्यगा ।
रत्नसिंहासनप्रोद्यत् शिवमञ्चाधिशायिनी ॥

सदाशिव महालिङ्ग मूलसंघट्टयोनिका ।
अन्योन्यालिङ्गसंघर्षकण्डूसंक्षुब्धमानसा ॥

कलोद्यद्बिन्दुकालिन्या तुर्यनादपरंपरा ।
नादान्ताऽऽनन्दसन्दोह स्वयं व्यक्तवचोमृता ॥

कामराजमहातन्त्र रहस्याचारदक्षिणा ।
मकारपञ्चकोद्भूतप्रौढान्तोल्लाससुन्दरी ॥

श्रीचक्रराजनिलया श्रीविद्या मन्त्रविग्रहा ।
अखण्डसच्चिदानन्द शिवशक्त्यैक्यरूपिणी ॥

त्रिपुरा त्रिपुरेशानी महात्रिपुरसुन्दरी ।
त्रिपुरावासरसिका त्रिपुराश्री स्वरूपिणी ॥

महापद्मवनान्तस्था श्रीमत्त्रिपुरमालिनी ।
महात्रिपुरसिद्धाम्बा श्रीमहात्रिपुराम्बिका ॥

नवचक्रक्रमादेवी महात्रिपुरभैरवी ।
श्रीमाता ललिता बाला राजराजेश्वरी शिवा ॥

उत्पत्तिस्थितिसंहारक्रमचक्रनिवासिनी ।
अर्धमेर्वात्मचक्रस्था सर्वलोकमहेश्वरी ॥

वल्मीकपुरमध्यस्था जंबूवननिवासिनी ।
अरुणाचलशृङ्गस्था व्याघ्रालयनिवासिनी ॥

श्रीकाळहस्तिनिलया काशीपुरनिवासिनी ।
श्रीमत्कैलासनिलया द्वादशान्ता महेश्वरी ॥

श्रीषोडशान्तमध्यस्था सर्ववेदान्तलक्षिता ।
श्रुतिस्मृतिपुराणेतिहासागमकळेश्वरी ॥

भूतभौतिकतन्मात्रदेवताप्राणहृन्मयी ।
जीवेश्वरब्रह्मरूपा श्रीगुणाढ्या गुणात्मिका ॥

अवस्थात्रयनिर्मुक्ता वाग्रमोमा महीमयी ।
गायत्री भुवनेशानी दुर्गा काळ्यादिरूपिणी ॥

मत्स्यकूर्मवराहादि नानारूपविलासिनी ।
महायोगीश्वराराध्या महावीरवरप्रदा ॥

सिद्धेश्वरकुलाराध्या श्रीमच्चरणवैभवा ।
— ओं ऐं ह्रीं श्रीं —
एवं नामाष्टशतकमेतद् गोप्यतरं शिवे ॥

नास्तिकम्लेच्छपाषण्डबौद्धपञ्चमदुर्गमम् ।
आवयोर्यत्र करुणा तस्यैव सुलभं भुवि ॥

पतिता योग्यसम्मूढाः पशुबुद्धिप्रबोधकाः ।
आवयोश्शापसम्पन्ना व्रजेयुर्दुर्गतिं ध्रुवम् ॥

इदं नामाष्टशतकमुपदिश्य महेश्वरी ।
उपादिश फलं चास्य समाधावेव सादरम् ॥

श्रीदेव्युवाच —

एतन्नामाष्टशतकं महानन्दप्रदायकम् ।
योग्यस्तमेव विज्ञाने नान्योस्ति भुवनत्रये ॥

अपेक्ष्य यां यां सिद्धिं त्वं नामानि स्मर्तुमर्हसि ।
तदैव सुप्रसन्नाहं तां तां दास्यामि ते प्रिया ॥

स्वेच्छानुरूपां मां ध्यात्वा सद्यः काममबाप्स्यसि ।
दिव्याभरणसंपूर्णां दिव्यसिंहासने स्थिताम् ॥

आनन्दमग्नमनसं सर्वैश्वर्यसमन्विताम् ।
शुद्धिद्रव्यसमास्वादमदान्दोलितलोचनाम् ॥

विद्रवच्चन्द्रकलिकां नादनादान्तनायिकाम् ।
दिव्यवस्त्रान्तरद्योतगूढावयवमोहिनीम् ॥

कामराजमहातन्त्रसारचिन्तनतत्पराम् ।
कण्डूभरोन्मिषद्योनिस्रवदिन्दुपरंपराम् ॥

बिन्दुसिक्तदृढोच्छूनदीर्घकन्दर्पवल्लरीम् ।
नटद्वलित्रयीहर्षरोमरेखाङ्कितोदरीम् ॥

जृंभमाणस्तनोन्नम्रां संदष्टाधरपल्लवाम् ।
शास्तदव्यक्तहुंकारशतोद्भासितसीत्कृतिम् ॥

पर्यङ्कविलसत्केशां शिवालिङ्गमहोत्सवाम् ।
कामराजलताकृष्टशिवोष्ठपुटकामिनीम् ॥

निगूढगुणसम्पन्नां शंभुवामाङ्कसंस्थिताम् ।
अथ स्थितशिवस्कन्धपादाग्रन्यासदक्षिणाम् ॥

शिवार्पितनखक्रीडा सदोन्नतनितम्बिनीम् ।
वामहस्तगृहीताग्रजटाजूटप्रियंवदाम् ॥

दक्षहस्तनखक्रीडावशीभूतेशकन्धराम् ।
उच्चालनोन्मिषन्नादविशेषश्रवणोन्मदाम् ॥

परिचुम्बनकालोद्यद्बिन्दुशुद्धशिवाननाम् ।
बिनुलेहनमत्तेश सादरालीढलिङ्गिनीम् ॥

अन्यत्र बिन्दुपतनतत्क्षणोद्विग्नवत्सलाम् ।
ईशप्रार्थनयत्नाम्बुकरणोचितनैपुणाम् ॥

चिरं नवनवक्रीडां शिवकामेशचेष्टिताम् ।
आत्माम्बुनैकनिर्धूतशिवश्रमविनाशिनीम् ॥

अक्षय्यमन्त्रसंपूर्णसुधासेवनतुन्दिलाम् ।
सदाशिवमहालिङ्गलालनात्यन्तवैभवाम् ॥

तल्लिङ्गघर्षणोदञ्चद्बिन्दुसन्दोहनन्दिताम् ।
तल्लिङ्गरोहणव्यग्रां स्वेच्छादिगुणविभ्रमाम् ।

आज्ञा विनिसृतानन्दबिन्दूद्यद्योनिमार्दवाम् ।
शिववक्षस्थलाश्लेषलुब्धान्तदधराधिनीम् ॥

मञ्जीरमेखलानाद सम्मोहितसदाशिवाम् ।
अखण्डात्मानुसंधानप्रचण्डानन्दताण्डवाम् ॥

प्रेरीकृतशिवाकारं स्वेच्छाधीनाखिलक्रियाम् ।
शिवचैतन्यनादाढ्यां जगज्जीवनलालसाम् ॥

ध्यात्वेदन्तु जगत्स्तोत्रं नामाष्टशतमद्भुतम् ।
मामेवैष्यति मन्नाथ सर्वाभीष्टार्थसिद्धिदम् ॥

इदानीं मामुपास्तेहि हिमवान् पुण्यभूधरः ।
सहानुकूलया पत्न्या तद्भविष्यामि तत्सुता ॥

मन्नामस्मरणात्सिद्धिमवास्यसि यथा पुरा ।
बहुजन्मार्जितैः पुण्यैः धूतपापकुलाशयः ॥

धर्मसंस्थापनव्यग्रो जगत्पालनतत्परः ।
दुर्जनोच्चाटनाकांक्षी सज्जनावनकामुकः ॥

यो भविष्यति मन्नाथ सत्यसन्धो जितेन्द्रियः ।
तस्मै प्रियमिदं स्तोत्रं भक्ताय चिरजीविने ॥

मन्त्रतन्त्रविदो लोके बहवस्सन्ति शङ्कर ।
त्वां विनाऽन्यं न पश्यामि स्तोत्रेऽस्मिन्नाधिकारिणम् ॥

तस्मात्परीक्ष्य बहुधा स्तोत्रं बोध्यं विवेकिने ।
मन्मन्त्रमिश्रमन्त्राद्यान् ध्यात्वा मद्रूपदेवताः ॥

आश्चर्यनाम परमाः सद्यः काममवाप्नुयुः ।
दुस्सङ्गो दोषनिर्मुक्तो रहस्ये तज्जपेत्सुधीः ॥

वंशजां वैश्यजां वा पुष्पिणीं गर्भिणीं तु वा ।
तरुणीं कन्यकां वापि शुभलीलां सुमङ्गलीम् ॥

अलाभे कालधर्मोढां वर्णजां वाप्यवर्णजाम् ।
गम्यां वा यदि वाऽगम्यां पूजनार्थं निमन्त्रयेत् ॥

आवाह्य तद्वराङ्गे नामेभिर्नामभिरर्चयेत् ।
अगम्यां योगिनीं दद्यात् स्वयं गम्यान्तु नार्चयेत् ॥

तदिच्छाकारणं तत्र स्वेच्छां नात्र प्रकाशयेत् ।
मातरं भगिनीं पुत्रीं स्नुषां वा गुरुवल्लभाम् ॥

राजपत्नीं व्रतधरां रोगार्तां विधवामपि ।
विवस्त्रां नैव कुर्वीत पादयोरेव पूजयेत् ॥

तासामनन्यस्वजुषा स्वेच्छया सर्वमाचरेत् ।
पूजयित्वा जपेत् स्तोत्रं यावद्विन्दूदयावधि ॥

एवं यः कुरुते नित्यं विशेषदिवसेषु वा ।
तस्मै कामान्प्रदास्यामि योजयिष्यामि तं त्वयि ॥

तत्पादस्मृतिमात्रेण सिद्धार्था इतरे जनाः ।
आश्चर्यनामाष्टशतमेवं प्रीतिर्भवेन्मम ॥

स त्रिः प्रणवमालान्ते नामोच्चार्य ततः परम् ।
देवी श्रीपादुके द्वे तु पूजयामीति पूजयेत् ॥

तर्पयेत्तर्पयामीति देव्यं स्वाहेति होमकृत् ।
नमस्कारे जपेच्चैव नमोन्तं परिकल्पयेत् ॥

इति श्रीमद्गर्भकुलार्णवे रहस्यजीवतन्त्रे पार्वतीश्वरसंवादे
श्रीदेवीवैभवाश्चर्याष्टोत्तरशतदिव्यनामस्तोत्रकथनं
नाम द्वितीयोध्यायः ॥ ओं तत्सत् ॥



## — त्रिपुरास्तवराजः —

श्रीनाथादिगुरुत्रयं गणपतिं पीठत्रयं भैरवम् ।
सिद्धौघं वटुकत्रयं पदयुगं दूतीक्रमं मण्डलम् ॥

वीराद्व्यष्टचतुष्कषष्टिनवकं वीरावळीपञ्चकम् ।
श्रीमन्मालिनि मन्त्रराजसहितं वन्दे गुरोर्मण्डलम् ॥

सेवे सिन्दूरसन्दोहसुन्दरस्वांगभासुराम् ।
करुणापूरपीयूषकटाक्षां कुलनायिकाम् ॥

द्विनेत्रं द्विभुजं शान्तं गुरुं पद्मासनस्थितम् ।
योगपीठे समासीनं नमामि शिरसि स्थितम् ॥

नमामि सद्गुरुं शान्तं प्रत्यक्षशिवरूपिणम् ।
शिरसा योगपीठस्थं मुक्तिकामार्थसिद्धये ॥

या नित्या परमा शक्तिर्जगच्चैतन्यकारिणी ।
तां नमामि महादेवीं पञ्चमीं मातृरूपिणीम् ॥

यस्यास्सर्वं समुत्पन्नं यस्यामद्यापि तिष्ठति ।
लयमेष्यति यस्यां तां पञ्चमीं प्रणमाम्यहम् ॥

भूगृहं गुणरेखाढ्यं वेदद्वारोपशोभितम ।
त्रिवृत्तं षोडशदलं तथाष्टदलकर्णिकम् ॥

मनुकोणं द्विदिक्कोणं वसुकोणं त्रिकोणकम् ।
मध्ये बिन्दुमहाचक्रं नित्यं श्रीत्रिपुरामयम् ॥

अधः कल्पतरोर्मूले भवान्या रत्नमन्दिरे ।
रत्नसिंहासने देव्याः श्रीचक्रं प्रणमाम्यहम् ॥

ब्रह्मण्डाधारशक्तिश्च कलास्मरपुरन्दराः ।
एताः संयोज्य पुरतः ईश्वरीं योजयेच्छिवे ॥

चन्द्रबीजं बिन्दुसंस्थं शिवबीजं नियोजयेत् ।
मादनं शक्रबीजस्थं योजयेत् भुवनेश्वरीम् ॥

शिवबीजं मादनस्थं शक्रषष्टिसमन्वितम् ।
सप्तमं तच्च शक्रस्थं मायाबीजं समुद्धरेत् ॥

तुङ्गाक्षरं शिवादिस्थं मरुदिन्द्रसमन्वितम् ।
धरधरसुता बीजमेकत्रापि नियोजयेत् ॥

बगलातुरीय बीजाधः षोडशं च नियोजयेत् ।
वाक्स्थं तुरीयकं बीजं शक्रबीजं नियोजयेत् ॥

पिनाकेशं चन्द्रसंस्थमाकाशं रससंस्थितम् ।
चतुर्थस्वरसंयुक्तं नादबिन्दुसमन्वितम् ॥

सर्वमेकत्र संयोज्य पञ्चपञ्चाक्षरी भवेत् ।
पञ्चकूटात्मिका विद्या सर्वतन्त्रेषु गोपिता ॥

विद्या चूडामणि र्देवि प्रोक्ता सर्वोत्तमोत्तमा ।
तव स्नेहान्मयाख्याता नाख्येया यस्य कस्यचित् ॥

इन्द्रो मां रक्षयेत्पूर्वे ह्याग्नेय्या मग्निदेवता ।
याम्ये यमस्सदा पातु नैऋत्यां निऋ ऋतिश्च माम् ॥

पश्चिमे वरुणः पातु वायव्यां वायुदेवता ।
धनदश्चोत्तरे पातु ईशान्या मीश्वरो विभुः ॥

ऊर्ध्वं प्रजापतिः पातुत्वधश्चानन्तदेवता ।
एवं दशदिशो रक्षां कुर्वन्त्याशाधिदेवताः ॥

गणेशस्सर्वदा पातु क्षेत्रेशो रक्षयेत्सदा ।
द्वारश्रीस्सर्वदा पातु देहळी पातु सर्वदा ॥

गणनाथस्सदा पातु दुर्गा मां परिरक्षतु ।
वटुको भैरवश्चान्ते क्षेत्रपालोभि रक्षतु ॥

सहरत्या सपत्न्या च कामदेवश्च सर्वदा ।
प्रीत्या सह वसन्तोपि पातु मां नन्दने वने ॥

चक्रस्य पश्चिमद्वारे भवान्या रत्नमन्दिरे ।
शङ्खपद्मनिधीरक्षां कुरुतां कामसिद्धये ॥

पातु मां रत्नसोपानं परमैश्वर्यशोभितम् ।
रक्षयेत्पश्चिमद्वारे भवान्या रत्नमन्दिरे ॥

सरस्वती महालक्ष्मी मायादुर्गा विभूतये ।
भद्रकाळी तथा स्वस्ति स्वाहा चैव शुभङ्करी ॥

गौरी च लोकधात्री च वागीश्वर्यादयो मम ।
एताश्चात्र स्थितास्सर्वा रक्षां कुर्वन्तु सर्वदा ॥

पाषण्डाचारिणो भूता भूमौ ये चान्तरिक्षगाः ।
दिवि लोके स्थिता ये च ते नश्यन्तु शिवाज्ञया ॥

शिवं कुर्वन्तु तास्सर्वा आसने पञ्चदेवताः ।
वास्तुनामधिपो ब्रह्मा स्रष्टा रक्षतु सर्वदा ॥

चक्रस्य दक्षिणे भागे श्रीमत्पात्रस्य मण्डले ।
पञ्चरत्नानि मे पान्तु पूजकानाञ्च सिद्धये ॥

तत्र पात्रासने पूज्ये सर्वदा वह्निमण्डले ।
वह्नेश्च मण्डलं पातु कुदेव्याश्च पूजने ॥

धूम्रार्चिरूष्मा ज्वलिनी ज्वालिनी विस्फुलिङ्गिनी ।
सुश्रीस्सुरूपा कपिला हव्यकव्यवहेदश ॥

वह्नेर्दशकळा ज्ञेया स्सर्वधर्मफलप्रदाः ।
एताभिस्सहितो रक्षां कुर्याद्वैश्वानरो मम ॥

तत्र पात्रवरे दिव्ये श्रीमदादित्यमण्डले ।
सूर्यस्य मण्डलं पातु मम सर्वार्थसिद्धये ॥

तपिनी तापिनी धूम्रा मरीचिर्ज्वालिनीरुचिः ।
सुषुम्ना भोगदा विश्वा बोधिनी धारुणी क्षमा ॥

कभाद्यर्णयुता भानोष्ठडान्ता द्वादशेरिताः ।
एताः कलास्तु सूर्यस्य सूर्यमण्डलसंस्थिताः ॥

एताभिः सहितो रक्षामादित्यः प्रकरोतु मे ।
सवितुर्मण्डलं तत्र सोमस्यामृतमण्डलम् ॥

अमृतं मां सदा पातु भैरवानन्दहेतुकम् ।
अमृता मानदा पुषा तुष्टिः पुष्टी रति र्धृतिः ॥

शशिनी चन्द्रिकाकान्तिः ज्योत्स्ना श्रीः प्रीतिरङ्गदा ।
पूर्णा पूर्णामृता कामदायिन्य स्स्वरजाः कलाः ॥

सोममण्डलमध्यस्था रक्षां कुर्वन्तु सर्वदा ।
रविवेदकलापूर्णे सुधासंपूर्णमण्डले ॥

नक्षत्राधिपती रक्षां करोतु मम भूतये ।
सूर्याग्निमण्डले देवस्संपूर्णे शशिमंडले ॥

आनन्दभैरवो रक्षां करोतु मम सर्वदा ।
तत्र पूर्णामृते पुण्ये शक्तिर्या वारुणी कला ॥

आनन्दरूपिणी रक्षां करोतु मम सर्वदा ।
सर्वाधोऽमृतमाधारे रुद्रः कालानलो विभुः ॥

रक्षां करोतु मे नित्यं या मूला प्रकृतिस्सदा ।
ततश्चाधारशक्तिः या मम रक्षां करोतु सा ॥

कूर्मस्तु सततं पातु अनन्तो रक्षयेत् सदा।
तस्य मूर्ध्निस्थितश्श्वेतवराहः परिरक्षतु ॥

दन्ते तस्य स्थिता पृथ्वी पातु नित्यं वसुन्धरा ।
समुद्रः सर्वदा पातु सुरत्नैरमृतोज्वलैः ॥

रत्नद्वीपं च मे रक्षां करोतु स्वर्णपर्वतः ।
पातु मां नन्दनोद्यानं पातु मां कल्पशाखिनः ॥

अधस्तेषां सदा पातु विचित्रा रत्नभूमिका ।
वालुकाः पञ्च मां पान्तु पान्तु देवमहोरुहाः ॥

नवरत्नमयाः पान्तु प्राकाराः पान्तु मां नव ।
श्रीरत्नमन्दिरं पातु सततं रत्नवेदिका ॥

श्वेतछत्रं सदा पातु रत्नसिंहासनं सदा ।
सिंहासनस्य पार्श्वस्थं धर्मं ज्ञानं च रक्षतु ॥

वैराग्यं रक्षयेन्नित्यमैश्वर्यं रक्षयेत्सदा ।
अधर्मो रक्षयेन्नित्यमज्ञानं परिरक्षतु ॥

अवैराग्यं तु मां पातु अनैश्वर्यं तु सर्वदा ।
सिंहासनस्य मध्यस्था माया मां परिरक्षतु ॥

श्रीविद्या शुद्धविद्या च मातङ्गी भुवनेश्वरी ।
वाराहीति समाख्याताः पञ्चविद्याश्च पातु माम् ॥

विद्या मां पातु तत्रैव पद्मनाळं च सर्वदा ।
ऊर्ध्वञ्चाधस्थिता पातु तत्वरूपा च कर्णिका ॥

सूर्यस्य मण्डलं पातु पातु मां सोममण्डलम् ।
वह्नेश्च मण्डलं पातु सत्वं रक्षतु मां सदा ॥

रजस्तु पातु मां नित्यं पातु नित्यं तमोगुणः
आत्मतत्वं शक्तितत्वं विद्यातत्वं तथैव च ॥

सदाशिवस्य यत्तत्वं तत्सर्वं पातु मां सदा ।
ज्ञानमाया कळाविद्या तत्वात्मानो विभूतयः ॥

रत्नसिंहासने देव्या रक्षां कुर्वन्तु सर्वदा ।
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ॥

एते पञ्चमहाप्रेता रक्षां कुर्वन्तु सर्वदा ।
सुधार्णवासनं पातु पातु पोताम्बुजासनम् ॥

देव्यासनं सदा पातु पातु चक्रासनं सदा ।
सर्वमन्त्रासनं पातु साध्यसिद्धासनं तथा ॥

तत्रैव संस्थिता देव्यो रक्षा कुर्वन्तु सर्वदा ।
दिव्यौघं सिद्धवर्गं च मानवौघं त्रिधा स्थितम् ॥

मुनिवेद नागसंख्या रक्षां कुर्वन्तु सर्वदा ।
ईश्वरी सुन्दरी चैव वासिनी श्रीश्च मालिनी ॥

सिद्धाम्बा भैरवीत्येता स्त्रिपुराद्याश्च पान्तु माम् ।
समस्ता प्रकटा गुप्ता स्तथा गुप्ततराश्च याः ॥

सम्प्रदायाः कुळाः कौळाः गर्भाश्च रहस्यकाः ।
तथैवातिरहस्याश्च परापररहस्यकाः ॥

नवधा पूजसङ्केतो योगिनीनां विधीयते ।
एतास्तु सततं रक्षां कुर्वन्तु योगिनीगणाः ॥

त्रैलोक्यमोहनं चक्रं सर्वाशापरिपूरकम् ।
सर्वसंक्षोभणं चक्रं सर्वसौभाग्यदायकम् ॥

सर्वार्थसाधकं चक्रं सर्वरक्षाकरं परम् ।
सर्वरोगहरं चक्रं सर्वसिद्धिप्रदायकम् ॥

सर्वानन्दमयं मध्ये नवमं चक्रनायकम् ।
नवधा चक्रसङ्केतं यो जनाति स पूजकः ॥

अणिमा पश्चिमे पातु लघिमा चोत्तरे तथा ।
पूर्वद्वारे च महिमा ईशित्वं पातु दक्षिणे ॥

वशित्वं मारुते पातु पातु प्राकाम्यमीशके ।
भुक्तिसिद्धिः तथाग्नेय्यामिच्छा रक्षतु नैऋतौ ॥

अधः पातु सदा प्राप्तिः सर्वकामप्रदायिनी ।
सर्वकामा सदा पातु चोर्ध्वे चोर्ध्वनिवासिनी ॥

भैरवश्चासितांगो यः कामरूपस्य पीठके ।
ब्रह्माणी सहितः पूर्वद्वारे मां परिरक्षतु ॥

मलये चाग्निदिग्भागे संस्थितो रुरुभैरवः ।
माहेशीसहितः पातु कुलाचारस्य सिद्धये ॥

चण्डः कोलगिरौ रक्षां कौमारी सहितो यमे ।
करोतु भैरवो नित्यं पूजकानां च सिद्धये ॥

वैष्णवीसहितः क्रोधः कुलान्ते पीठराजके ।
नैऋत्यां सर्वदा पातु भोगकामार्थसिद्धये ॥

संहारे पश्चिमे पीठे वाराही सहितस्सदा ।
उन्मत्तभैरवः पातु मां कुलाचारसिद्धिदः ॥

जालन्धरे च वायव्ये इन्द्राणी सहितस्सदा ।
कपालभैरवः पातु सर्वकामार्थसिद्धये ॥

ओड्याणे चोत्तरे पीठे चामुण्डासहितस्सदा ।
भीषणो भैरवः पातु साधकानां च सिद्धये ॥

संहारभैरवो देवी कोटिपीठे च मां सदा ।
महालक्ष्मीयुतः पातु ईशान्यं चक्रपूजने ॥

सर्वसंक्षोभिणी मुद्रा पश्चिमे पातु सर्वदा ।
द्राविणी चोत्तरे पातु पूर्वे चाकर्षिणी तथा ॥

याम्ये वश्या सदा पातु उन्मदा मारुतेसदा ।
ईशे महांकुशा पातु त्रिखण्डा पातुचानले ॥

नैरृत्यां बीजमुद्रा च ऊर्ध्वे रक्षतु खेचरी ।
महामुद्रा त्वधः पातु योगिनी योनिरूपिणी ॥

सुसिद्धयो मुद्रिकाश्च भैरवास्सहमातृभिः ।
एताश्चक्रे स्थिता नित्या देवतास्सर्वकामदाः ॥

चतुरश्रे त्रिरेखासुरक्षां कुर्वन्तु सर्वदा ।
कामाकर्षणरूपा च बुद्ध्याकर्षणरूपिणी ॥

अहङ्काराकर्षणी च शब्दाकर्षणरूपिणी ।
स्पर्शाकर्षणरूपा च रूपाकर्षणरूपिणी ॥

रसाकर्षणरूपा च गन्धाकर्षणरूपिणी ।
चित्ताकर्षणरूपा च धैर्याकर्षणरूपिणी ॥

स्मृत्याकर्षणरूपा च नामाकर्षणरूपिणी ।
बीजाकर्षणरूपा च आत्माकर्षणरूपिणी ॥

अमृताकर्षिणी देवी शरीराकर्षिणी तथा ।
एताश्चक्रस्थिता नित्या स्वरजाष्षोडशे दळे ॥

सर्वाभीष्टप्रदा देव्यो रक्षां कुर्वन्तु सर्वदा ।
अनङ्गकुसुमा पूर्वे दक्षिणेऽनङ्गमेखला ॥

पश्चिमेऽनङ्गमदना उत्तरे मदनातुरा ।
अनङ्गरेखा चाग्नेयां नैरृतेऽनङ्गवेगिनी ॥

वातेऽनङ्गांकुशाचैव ईशेचानङ्गमालिनी ।
कवर्गाद्यष्टवर्गस्था अष्टाचानङ्गशक्तयः ॥

रक्षां कुर्वन्तु तास्सर्वा देव्यश्चाष्टदळे स्थिताः ।
सर्वसंक्षोभिणी शक्तिस्सर्वविद्राविणी तथा ॥

सर्वाकर्षणशक्तिश्च सर्वाह्लादस्वरूपिणी ।
सर्वसंमोहिनीशक्तिः सर्वस्तंभनकारिणी ॥

सर्वजृंभणशक्तिश्च सर्वतो वशकारिणी ।
सर्वरञ्जनशक्तिश्च सर्वोन्मादस्वरूपिणी ॥

सर्वार्थसाधनी शक्तिस्सर्वसंपत्तिपूरणी ।
सर्वमन्त्रमयी शक्तिस्सर्वद्वन्द्वक्षयङ्करी ॥

चतुर्दशारचक्रस्था रक्षां कुर्वन्तु मे सदा ।
सर्वसिद्धिप्रदा देवी सर्वसंपत्प्रदायिनी ॥

सर्वप्रियङ्करी शक्तिस्सर्वमङ्गलकारिणी ।
सर्वकामप्रदा देवी सर्वदुःखविमोचनी ॥

सर्वमृत्युप्रशमनी सर्वविघ्ननिवारिणी ।
सर्वाङ्गसुन्दरी देवी सर्वसौभाग्यदायिनी ॥

बहिर्दशारचक्रस्था रक्षां कुर्वन्तु सर्वदा ।
सर्वज्ञा सर्वशक्तिश्च सर्वैश्वर्यप्रदायिनी ॥

सर्वज्ञानमयी देवी सर्वव्याधिविनाशिनी ।
सर्वाधारस्वरूपा च सर्वपापहरा तथा ।

सर्वानन्दमयी देवी सर्वरक्षास्वरूपिणी ॥
सदैव हि महादेवी सर्वेप्सितफलप्रदा ॥

अन्तर्दशारचक्रस्था रक्षां कुर्वन्तु सर्वदा ।
वाग्देवी वशिनी पातु पातु कामेश्वरीच माम् ॥

मोदिनी विमला पातु अरुणा जयिनी च माम् ।
सर्वेश्वरी च मे रक्षां करोतु कौलिनी तथा ॥

अष्टकोणान्तरे देव्यो रक्षां कुर्वन्तु सर्वदा ।
पाशांकुशौ शराश्चापो नित्यं चायुधदेवताः ॥

देव्या श्रीचक्रमध्यस्था रक्षां कुर्वन्तु सर्वदा ।
षडङ्गयुवतिः पातु अङ्गस्था चाङ्गरूपिणी ॥

महादेव्याश्चक्रसंस्था रक्षां कुर्वन्तु सर्वदा ।
श्रीमत्त्रिकोणमध्ये तु तत्रकोणत्रयेषु च ॥

मध्ये च सर्वदा पान्तु चतस्रः पीठदेवताः ।
कामे कामेश्वरी पातु पूर्णे वज्रेश्वरी सदा ॥

जालन्धरे महापीठे पातु मां भगमालिनी ।
ओड्याणके महापीठे महात्रिपुरसुन्दरी ॥

सूर्येन्दुवह्निपीठेषु बिन्दुचक्रनिवासिनी ।
ब्रह्मस्वरूपिणी पातु श्रीमत्त्रिपुरसुन्दरी ॥

त्रैलोक्यमोहने चक्रे चतुरश्रे सुशोभने ।
पातु मामनिशंदेवी त्रिपुरा परमेश्वरी ॥

सर्वाशापूरके चक्रे षोडशारे मनोहरे ।
तत्र चक्रेश्वरी नित्यं पातु मां त्रिपुरेश्वरी ॥

तथाष्टदळचक्रे तु सर्वसंक्षोभकारके ।
तत्र चक्रेश्वरी नित्यं पायात्त्रिपुरसुन्दरी ॥

चतुर्दशारचक्रे तु शुभे सौभाग्यदायके ।
तत्र चक्रेश्वरी नित्यं पायात्त्रिपुरवासिनी ॥

बहिर्दशारचक्रे तु सर्वार्थसाधके परे ।
त्रिपुराश्रीस्सदा पातु मम कळ्याणहेतवे ॥

अन्तर्दशारचक्रे तु सर्वरक्षाकरे परे ।
नित्यं चक्रेश्वरी देवी पायात्त्रिपुरमालिनी ॥

अथाष्टकोणचक्रे तु सर्वरोगहरे परे ।
पातु मां त्रिपुरा सिद्धा देवी चक्रेश्वरी सदा ।।

सर्वसिद्धिप्रदे चक्रे अष्टकोणान्तरे सदा ।
चक्रेश्वरी च मे रक्षां करोतु त्रिपुराम्बिका ।।

सर्वानन्दमये चक्रे श्रीमत्र्यै कोणमध्यमे ।
महाचक्रेश्वरी पातु श्रीमत्त्रिपुरसुन्दरी ।।

नित्या कामेश्वरी पातु पातु मां भगमालिनी ।
विलन्ना मां सर्वदा पातु भेरुण्डा पातु मां सदा ।।

मां वह्निवासिनी पातु महावज्रेश्वरी तथा ।
पातु मां शिवदूती च त्वरिता रक्षयेत्सदा ।।

कुळसुन्दरी मां पातु नित्यं नित्या च पातु माम् ।
नित्या नीलपताका च विजया पातु मां सदा ।।

श्रीसर्वमङ्गळा पातु नित्या ज्वालांशुमालिनी ।
विचित्रा सर्वदा पातु षोडशी पातु सुन्दरी ।।

महाविद्या तुरीया तु पातु मां बहुरूपिणी ।
महासप्तदशी नित्या नित्यमानन्दरूपिणी ।।

पूर्वं दक्षिणपश्चाश्च उत्तरोर्ध्वमनुत्तराः ।
बौद्धवैदिकशैवाश्च सौरवैष्णवशाक्तकाः ।।

सृष्टिस्थितिलयाख्यानां वासो रक्षतु सर्वदा ।
चतस्रः स मया देवा व्योयोगिन्यः पान्तु सर्वदा ।।

डाकिनी राकिनी पातु लाकिनी काकिनी तथा ।
साकिनी हाकिनी पातु चक्रस्था योगिनी गणाः ॥

वर्गस्था मातृकाः स्सर्वा रक्षां कुर्वन्तु सर्वदा ।
चतुरश्रे महाचक्रे बुद्धो मां परिरक्षतु ॥

पातुमामनिशं देवष्षोडशारे प्रजापतिः ।
तथाष्टदलचक्रे च शिवो मां परिरक्षतु ॥

चतुर्दशारचक्रे तु भास्करो रक्षयेत्सदा ।
द्विदशारे तथा पातु प्रभुर्नारायणो हरिः ॥

अष्टारे मध्यचक्रे तु पातु मां परमेश्वरी ।
नवचक्रेश्वरी नित्या या नित्या परमा कला ॥

पातु मा मनिशं देवि श्रीमत्त्रिपुरसुन्दरी ।
महात्रिपुरसुन्दर्या श्चिन्तनीया च या परा ॥

ब्रह्मस्वरूपिणी पातु पञ्चमी परदेवता ।
पञ्चतत्वं तथा पञ्च यत्किंचित्पञ्चमं स्मृतम् ॥

नित्यं पञ्चगुणैः पातु पञ्चमी परदेवता ।
पञ्चपञ्चाक्षरै र्मन्त्रैः पञ्चकूटैश्च पञ्चभिः ॥

पञ्चमी पातु सततं नित्यं रक्षतु पञ्चमी ।
श्रीविद्या च तथा लक्ष्मीर्महालक्ष्मीस्तथैव च ॥

त्रिशक्ति सर्वसाम्राज्यलक्ष्मीः पञ्चप्रकीर्तिताः ।
श्रीविद्या च परंज्योतिः परा निष्कलशांभवी ॥

अजपा मातृकाचेति पञ्चकोशाः प्रकीर्तिताः।
श्रीविद्या त्वरिता चैव पारिजातेश्वरी तथा ॥

त्रिपुटा पञ्चबाणेशी पञ्चकल्पलता स्मृताः।
श्रीविद्या मृतपीठेशी सुधासूर मृतेश्वरी ॥

अन्नपूर्णेति विख्याता पञ्चका मदुघा स्मृताः ।
श्रीविद्या सिद्धलक्ष्मीश्च मातङ्गी भुवनेश्वरी ॥

वाराही पञ्चरत्नानामीश्वर्यश्च प्रकीर्तिताः ।
शान्ति करोतु मे नित्यं पाञ्चमी परदेवताः ॥

ईशान्यां सर्वदा पातु नित्यं निर्माल्यवासिनी ।
शेषिका सुन्दरी पातु बिन्दुचक्रनिवासिनी ॥

नित्यं कामकळा पातु मुद्रा मां पातु खेचरी ।
शक्तिर्मां सर्वदा पातु या मूलधारवासिनी ॥

इमं त्रिपुरसुन्दर्या रक्षामन्त्रं च पुण्यदम् ।
पूजाक्रमेण कथितं साधकानां सुखावहम् ॥

क्रमेणानेन विधिना श्रीमत्त्रिपुरसुन्दरीम् ।
सम्पूज्य साधकश्रेष्ठो रक्षामन्त्रं सदा पठेत् ॥

प्रातःकाले शुचिर्भूत्वा निशायामर्धरात्रके ।
अथवा सङ्कटे प्राप्ते राजस्थाने सुदुर्गमे ॥

जले वाथ स्थलेवापि स्मशाने दुर्गमे गिरौ ।
यत्र यत्र भये प्राप्ते स तत्रैव पठेन्नरः ॥

सर्वावयवभावेन देवीं सञ्चिन्त्यसाधकः ।
रक्षां कुर्वीत यत्नेन सर्वाशुभविनाशिनीम् ॥

स्तोत्रं चाद्भुतमेवेदं त्रैलोक्ये चापि दुर्लभम् ।
गोपनीयं प्रयत्नेन यदिच्छेदात्मनो हितम् ।

यस्मै कस्मै न दातव्यं न वक्तव्यं कदाचन ।
शिष्याय भक्तियुक्ताय साधकाय प्रकाशयेत् ॥

भ्रष्टेभ्यस्साधकेभ्योपि छान्दसेभ्यो न दर्शयेत् ।
दत्तेचैसिद्धिहानिस्यादित्याज्ञा शङ्करैः कृता ॥

मन्त्राः पराङ्मुखा यान्ति क्रुद्धा भवति सुन्दरी ।
अशुभं च भवेत्तस्य तस्माद्यत्नेन गोपयेत् ॥

यद्गेहे विद्यते ग्रन्धं लिखितं स्तोत्रमुत्तमम् ।
चञ्चलापि स्थिरा भूत्वा कमला तत्र तिष्ठति ॥

तस्माद्यत्वादिमं ग्रन्धं पूजयेद्गन्धपुष्पकैः ।
पूजाफलं लभेन्नित्यं सुन्दरी सन्निधिर्भवेत् ॥

स्तवराजमिमंपुण्यं यः पठेत्सुसमाहितः ।
यत्फलं लभते तस्माच्छ्रुणुध्वं साधकोत्तमाः ॥

वारमेकं तु योऽधीयात्स पूजाफलमश्नुते ।
भक्त्या च धारयेद्यस्तु लिखित्वा स्तोत्रमुत्तमम् ॥

शिखायामथवाकण्ठे बाहौ वा भक्तिसंयुतः ।
स भवेत्साधकश्रेष्ठो मातृणां च सदाप्रियः ॥

लभते सर्वकामान्वै परं स्वस्त्यनं भवेत् ।
तस्मादिदं प्रयत्नेन धारयेद्विधिना तथा ॥

पठित्वा पूजयित्वा च त्रैलोक्यं वशमानयेत् ।
ब्रह्मराक्षसबेताळ कूश्माण्डाश्शाकिनी गणाः ॥

स्तवराजश्रवणतः पलायन्ते न संशयः ।
अपुत्रो लभते पुत्रं दरिद्रो लभते धनम् ॥

यं यं वापि स्मरेन्नित्यं तंतमाप्नोति निश्चितम् ।
अतिदुःखालये कष्टे भीमे निगळबन्धने ॥

सकृत्पाठे कृतेनित्यं निगळान्मुच्यतेध्रुवम् ।
दुष्कृतैरभिचारैश्च रोगैर्यक्ष्मादिभिश्च यः ॥

परप्रयुक्तैर्ग्रस्तोऽपि पठनान्मुच्यते नरः ।
इमं त्रिपुरसुन्दर्यास्तवराजं मनोहरम् ॥

रक्षामन्त्रं च शुभदं शिवेन परिकीर्तितम् ।
यः पठेत्प्रयतो भक्त्या सद्यो रोगात् स मुच्यते ॥

आयुरारोग्यमैश्वर्यं भुक्ति मुक्ति च विन्दति ।
सर्वान् कामानवाप्नोति देवेन्द्रस्यापि दुर्लभान् ॥

इति श्रीरुद्रयामळे श्रीमत्त्रिपुरसुन्दरीस्तवराजस्संपूर्णः
श्रीसद्गुरुपरदेवतार्पणमस्तु ।



श्रीरस्तु

## — लघुपूजाक्रमप्रारम्भः —

आचम्य - प्राणानायम्य - देशकालौ सङ्कीर्त्य —

समीपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं श्रीचण्डिका परमेश्वरी-मुद्दिश्य श्रीचण्डिकापरमेश्वरीप्रीत्यर्थं चण्डीमन्त्रजपपूर्वकसप्तशतीमन्त्रपारयणं करिष्ये । तदङ्गपुस्तकपूजां करिष्ये ।

सुरेन्द्रसंहितायाम् —

प्रतिमायां घटे वापि यन्त्रे वाऽमलदर्पणे ।
कन्या मूर्तौ तथा दुर्गां स्त्रीवराङ्गे च पुस्तके ॥
आवाह्य पूजयेद्देवीं नित्यं साधक पुङ्गवः ॥

इति पुस्तके मूलेन ॥

मन्त्राक्षरमयीं लक्ष्मीं मातॄणां रूपधारिणीम् ।
नवदुर्गात्मिकां साक्षात्कन्यामावाहयाम्यहम् ॥

इति मन्त्रेण वा आवाह्य ।

जयन्ति मङ्गळे काळि भद्रकाळी कपालिनि ।
दुर्गे क्षमे शिवे धात्रि स्वधे स्वाहा नमोस्तुते ॥

इति मन्त्रेण ध्यानावाहनादिषोडशोपचारपूजां कृत्वा मूलमत्रं ऋष्यादिन्यासध्यानांतं विधाय यथाशक्ति जप्त्वा ततः अर्गळकीलककवचहृदयध्वजाद्यां सूक्तत्रयरहस्यत्रयान्तां सप्तशतीं पठित्वा पुनर्मूलं यथाशक्ति जप्त्वा देवीं ध्यात्वा जपं देव्यै समर्प्य पञ्चोपचारैः पुस्तकपूजां कृत्वा उत्तरनीराजनं दत्वा आवाहितदेवीमात्मन्युद्वास्य यथासुखं विहरेदिति लघुपूजाक्रमः ॥ पुस्तकवाचने-नियमः — आसनादिविधाय, आधारेऽन्यहस्तलिखितपुस्तकं स्थापयित्वा नारायणं

नमस्कृत्येति वचनात् - नारायणाय नमः। नाराय नरोत्तमाय नमः। देव्यै सरस्वत्यै नमः। व्यासाय नमः। इति नमस्कृत्य प्रणवमुच्चार्य सर्वपाठान्ते प्रणवं पठेत्। हस्ते पुस्तकं न धारयेत्।

स्वयं ब्राह्मणभिन्नेन लिखितं विफलं भवेत्
अध्यायं प्राप्य विरमेन्नतु मध्ये कदाचन।
कृते विरामे मध्ये तु अध्यायादि पठेत्पुनः
एकेन वा मध्यमेन नैकेनेतरयोरिह ॥

चरितार्थंतु न जपेज्जपच्छिद्रमवाप्नुयादिति वचनात् ग्रन्थार्थं बुध्यमानः स्पष्टाक्षरं नातिशीघ्रं नातिमन्दं रसभावस्वरयुतं वाचयेत्। त्रिवर्गफलकामेन चण्डीपाठस्सदैव कर्तव्यः। तस्मान्ममैतन्माहात्म्यं पठितव्यं समाहितैः। श्रोतव्यं च सदाभक्त्या इत्यादिवचनात् एवं पठनीयम् ॥



ॐ नमश्चण्डिकायै

श्रीमहालक्ष्म्यै नमः

## — श्रीचण्डिकानवार्णमन्त्रः —

अस्य चण्डिकापरमेश्वरी नवाक्षरी महामन्त्रस्य दक्षिणामूर्तिऋषिः अनुष्टुप्छन्दः श्रीचण्डिकापरमेश्वरीदेवता ऐं बीजं ह्रीं शक्तिः क्लीं कीलकं मम श्रीचण्डिकापरमेश्वरी प्रसादसिध्यर्थे नवाक्षरमहामन्त्रजपे विनियोगः — ऐं ह्रीं क्लीं अंगुष्टाभ्यां नमः चामुण्डाये तर्जनीयाभ्यां नमः विच्चे मध्यमाभ्यां वषट्। ऐं ह्रीं क्लीं अनामिकाभ्यां हुं चामुण्डायै कनिष्ठिकाभ्यां वौषट् विच्चे करतल करपृष्टाभ्यां फट् ऐं ह्रीं क्लीं हृदयाय नमः। चामुण्डायै शिरसे स्वाहा विच्चे शिखायै वौषट् ऐं ह्रीं क्लीं कवचाय हुम्। चामुण्डायै नेत्रत्रयाय वौषट् विच्चे अस्त्राय फट् भूर्भुवस्सुवरोमिति दिग्बन्धः ॥

ध्यानम् – या देवी मधुकैटभ प्रशमनी या माहिषोन्मूलिनी
या धूम्रेक्षणचण्डमुण्डदमनी या रक्तबीजाशनी ।
या शुम्भादि निशुंभदैत्यदमनी या सिद्धलक्ष्मीः परा
सा चण्डी नवकोटिशक्तिसहिता मां पातु विश्वेश्वरी ॥

मातर्मे मधुकैटभघ्नि महिषप्राणापहारोद्यमे
हेलानिर्मितधूम्रलोचनवधे हेचण्डमुण्डादिनि ।
निश्शेषीकृतरक्तबीजदनुजे नित्ये निशुम्भापहे
शुंभध्वंसिनि संहराशु दुरितं दुर्गे नमस्तेऽम्बिके ॥

एवं ध्यात्वा पञ्चोपचारैः सम्पूजयेत् । लं पृथिवी तत्वात्मने चण्डिकायै नमः । गन्धं परिकल्पयामि । हं आकाशतत्वात्मने चण्डिकायै नमः - पुष्पं परिकल्पयामि। यं वायुतत्वात्मने चण्डिकायै नमः - धूपं परिकल्पयामि। रं तेजस्तत्वात्मने चण्डिकायै नमः - दीपं परिकल्पयामि। वं अमृततत्वात्मने चण्डिकायै नमः - अमृतनैवेद्यं परिकल्पयामि। सं सर्वतत्वात्मने चण्डिकायै नमः सर्वोपचारान्परिकल्पयामि । ततो जपमालां प्रार्थयेत् ।

माले महामाये सर्वशक्तिस्वरूपिणि ।
चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव ॥

अविघ्नं कुरु मातेस्त्वमिति संप्रार्थ्य वै जपेत् । अथ मनुः । ऐं ह्रीं क्लीं चामुण्डायै विच्चे । एवं यथाशक्ति जप्त्वा । जपान्ते मालां शिरसि निधाय सम्प्रार्थ्य। हृदयादि षडङ्गन्यासं कुर्यात् ॥

इति चण्डिकानवार्णमन्त्रः ।



— श्रीगुरुभ्यो नमः —

## देव्यर्गळस्तुति प्रारम्भः

अस्य श्री अर्गलस्तोत्रमहामन्त्रस्य सर्वाकर्षणभैरवऋषिः अनुष्टुप्छन्दः दशकर्णिका देवता। अं बीजं वं शक्तिः सः कीलकं मम देवी प्रसादसिद्ध्यर्थे जपे विनियोगः। आं अंगुष्टाभ्यां नमः। ईं तर्जनीभ्यां नमः। ऊं मध्यमाभ्यां नमः। ऐं अनामिकाभ्यां नमः। औं कनिष्टिकाभ्यां नमः। अः करतलकरपृष्ठाभ्यां नमः। एवं हृदयादिन्यासः। भूर्भुवस्सुवरोमिति दिग्बन्धः।

ध्यानम् – प्रकाशमध्यस्थित चित्स्वरूपाम् वराभये संदधतीं त्रिनेत्राम्।
सिन्दूरवर्णा मतिकोमलाङ्गीं मायामयीं तत्वमयीं नमामि॥

— लमित्यादि पञ्चपूजा —

ओं अर्गलं कीलकञ्चादौ पठित्वा कवचं पठेत्।
जपेत् सप्तशतीं पश्चात् क्रम एष शिवोदितः॥

अर्गलं दुरितं हन्ति कीलकं फलदं तथा।
कवचं रक्षते नित्यं चण्डिकात्रितयं जपेत्॥

अर्गलं हृदये यस्य तथाऽनर्गलवागसौ।
भविष्यतीति निश्चित्य शिवेन रचितं पुरा॥

कीलकं हृदये यस्य स कीलितमनोरथः।
भविष्यति न सन्देहो नान्यथा शिवभाषितम्॥

कवचं हृदये यस्य स वज्रकवची खलु।
ब्रह्मणा निर्मितं पूर्वमिति निश्चित्य चेतसा॥

—: ओं नमः चण्डिकायै :—

ऋषिरुवाच —

जयत्वं देवि चामुण्डे जय भूतापहारिणि ।
जय सर्वगते देवि कालरात्रि नमोस्तु ते ॥

जयन्ति मङ्गले कालि भद्र काळी कपालिनि ।
दुर्गे क्षमे शिवे धात्रि स्वधे स्वाहे नमोस्तु ते ॥

मधुकैटभविद्रावविधात्रिवरदे नमः ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥

महिषासुरसैन्यां ते महिषासुरमर्दनि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥

धूम्रलोचन चण्डमुण्डरक्त भीजविनाशिनि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥

निशुंभमर्दने देवि शुंभराक्षसमर्दिनि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥

वन्दितांघ्रियुगेदेवैर्देवि सौभाग्यदायिनि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥

अचिन्त्यरूपचरिते सर्वशत्रुविनाशिनि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥

न तेभ्यस्सर्वदा भक्त्या चण्डिके दुरितापहे ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥

स्तुवद्भ्यो भक्तिपूर्वं त्वां चण्डिके व्याधिनाशिनि ।
रूपं देहि जयं देहि यशो देहि द्विषो ॥

चण्डिके सततं येत्वामर्चयन्तीह भक्तितः ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥

देहि सौभाग्यमारोग्यं देहि देवि परंशुभं ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥

विधेहि द्विषतां नाशं विधेहि बलमुच्चकैः ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥

विधेहि देवि कल्याणं विधेहि विपुलां श्रियः ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥

सुरासुरशिरोरत्ननिघृष्टचरणाम्बुजे ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥

विद्यावन्तं यशस्वन्तं लक्ष्मीवन्तं च मां कुरु ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥

प्रचण्डदैत्यदर्पघ्नि चण्डिके प्रणताय मे ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥

चतुर्भुजे चतुर्वक्त्रसंस्तुते परमेश्वरि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥

कृष्णेन संस्तुते देवि शश्वद्भक्त्यात्वमम्बिके ।
रूपंदेहि जयंदेहि यशोदेहि द्विषोजहि ॥

इन्द्राणीपतिसद्भावपूजिते परमेश्वरि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥

देवि भक्तजनोद्दामपूजिते परमेश्वरि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥

हिमालयसुतानाथसंस्तुते परमेश्वरि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥

देविप्रचण्डदोर्दण्डदैत्यदर्पविनाशिनि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥

पत्नीं मनोरमां देहि मनोवृत्तानुसारिणीम् ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥

तारिणीं दुर्गसंसारसागरस्य कुलोद्भवाम् ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥

इदं स्तोत्रं पठित्वा तु महास्तोत्रं पठेन्नरः ।
स तु सप्तशती संख्या वरमाप्नोति संपदः ॥

॥ इति देव्यर्गलस्तुतिस्समाप्ता ॥



श्रीमहादेव्यै नमः

— अथ कीलकस्तुतिप्रारम्भः —

अस्यश्री कीलकस्तोत्रमहामन्त्रस्य विशुद्धज्ञानरुद्रऋषिः अनुष्टुप्छन्दः दशकर्णिका देवता । कं बीजं लं शक्तिः ईं कीलकं मम देवी प्रसाद-सिद्धयर्थे जपे विनियोगः । क्लां अंगुष्टाभ्यां नमः । क्लीं तर्जनीभ्यां नमः । क्लूं मध्यमाभ्यां नमः । क्लैं अनामिकाभ्यां नमः । क्लौं कनिष्टिकाभ्यां नमः । क्लः करतलकरपृष्टाभ्यां नमः। एवं हृदयादिन्यासः । भूर्भुवस्सुवरो मिति दिग्बन्धः ॥

ध्यानम् – हेमप्रभं सोमकळावतंसं पाणिस्फुरत्पञ्चशरेषु चापम् ।
प्राणप्रियं नौमि पिनाकपाणेः कोणत्रयस्थं कुलदैवतं सः ॥

— लमित्यादि पञ्चपूजां कुर्यात् —

ऋषिरुवाच —

विशुद्धज्ञानदेहाय त्रिवेदी दिव्यचक्षुषे ।
श्रेयः प्राप्तिनिमित्ताय नमस्सोमार्थधारिणे ॥

सर्वमेतत्पठेद्यस्तु मन्त्राणां मम कीलकम् ।
सोपि क्षेम मवाप्नोति सततं जपतत्परः ॥

सिध्यन्त्युच्चाटनादीनि वस्तूनि सकलान्यपि ।
एते न स्तुवतां देवीं स्तोत्रबृन्दं हि सिध्यति ॥

न मन्त्रं नौषधं तत्र न किञ्चिदपि विद्यते ।
विना जप्येन सिध्येत सर्वमुच्चाटनादिकम् ॥

समस्तान्यपि सिध्यन्ति लोकशङ्कामिमां हरः ।
कृत्वा निमन्त्रयामास सर्वमेवमिदं शुभम् ॥

स्तोत्रं वै चण्डिकायास्तु तच्च गुह्यं चकार सः ।
समाप्नोति च पुण्येन तां यथावन्निमन्त्रणाम् ॥

सोपि क्षेममवाप्नोति सर्वमेव न संशयः ।
कृष्णायां वां चतुर्दश्यामष्टम्यां वा समाहितः ॥

ददाति प्रतगृह्णाति नान्यथैषा प्रसिध्यति ।
इत्थं रूपेण कीलेन महादेवेन कीलितम् ॥

यो निष्कीलां विधायैनां नित्यं जपति संस्फुटम् ।
स सिद्धस्सगणस्सोपि गन्धर्वो जायते वने ॥

न चैवाप्यटतस्तस्य भयं क्वापि हि जायते ।
नापमृत्युवशं याति मृतो मोक्षमवाप्नुयात् ॥

ज्ञात्वा प्रारभ्य कुर्वीत ह्यकुर्वाणो विनश्यति ।
ततो ज्ञात्वैव संपन्नमिदं प्रारभ्यते बुधैः ॥

सौभाग्यादि च यत्किञ्चिद् दृश्यते ललना जनैः ।
तत्सर्वं तत्प्रसादेन तेन जाप्यमिदं शुभम् ॥

शनैस्तु जप्यमानेस्मिन् स्तोत्रे संपत्तिरुच्चकैः ।
भवत्येव समग्रापि ततः प्रारभ्यमेव तत् ॥

ऐश्वर्यं यत्प्रसादेन सौभाग्यारोग्यसंपदः ।
शत्रुहानिः परोमोक्ष स्तूयते सा न किं जनैः ॥

इति देवी कीलकस्तुतिस्समाप्ता ।

—:०:—

ओं नमश्चण्डिकायै

## — अथ देवीकवचस्तोत्रम् —

अस्य श्रीदेवी कवचस्तोत्र महामन्त्रस्य मार्कण्डेयभगवान् ऋषिः अनुष्टुप् छन्दः शक्तित्रयस्वरूपिणी श्रीमहालक्ष्मीर्देवता श्रीं बीजं ह्रीं शक्तिः ह्रां कीलकं मम श्रीचण्डिकादेवीप्रसादसिद्ध्यर्थे जपे विनियोगः। श्रां अंगुष्टाभ्यां नमः। श्रीं तर्जनीभ्यां नमः। श्रूं मध्यमाभ्यां नमः। श्रैं आनामिकाभ्यां नमः। शौं कनिष्ठिकाभ्यां नमः। श्रः करतलकरपृष्ठाभ्यां नमः। एवं हृदयादिन्यासः। भूर्भुवस्सुवरोमिति दिग्बन्धः॥

ध्यानम् – शङ्खं पाशशरासने च दधतीं विभ्रामितां तर्जनीम्
सव्यैश्चक्रमसिं महेषुमितिरैस्तिर्यक्त्रिशूलं भुजैः।
सन्नद्धां विविधायुधैः परिवृतां मन्त्रीकुमारी जनैर्ध्यायि
दिष्टवरप्रदां त्रिणयनां सिंहाधिरूढां शिवाम्॥

## — लमित्यादि पञ्चपूजा —

अस्य पादयोः - वाराह्यै नमः। नितम्बे - नारसिंह्यै नमः। कण्ठे - माहेन्द्र्यै नमः। पृष्ठे - ब्राह्म्यै नमः। दक्षिणभुजे - वैष्णव्यै नमः। वाम-भुजे - माहेश्वर्यै नमः। शिरसि - शिवदूत्यै नमः। हृदये - शिवायै नमः। कुक्षौ - महाकाळ्यै नमः। दृग्द्वये - शताक्ष्यै नमः। अन्तरिक्षे - कौशिक्यै नमः। भूमौ - शाकंभर्यै नमः। मुखे - कात्यायन्यै नमः। सर्वाङ्गेषु श्रियै नमः।

## — ॐ नमः चण्डिकायै —

मार्कण्डेय उवाच —

यद्गुह्यं परमं लोके सर्वरक्षाकरं नृणाम्।
यन्नकस्यचिदाख्यातं तन्मे ब्रूहि पितामह॥

ब्रह्मोवाच – अस्ति गुह्यतमं विप्र सर्वभूतोपकारकम् ।
देव्यास्तु कवचं पुण्यं तच्छृणुष्व महामुने ॥

प्रथमं शैलपुत्री द्वितीयं ब्रह्मचारिणी ।
तृतीयं चन्द्रघण्टेति कूश्माण्डेति चतुर्थकम् ॥

पञ्चमं स्कन्धमातेति षष्ठं कात्यायनीति च ।
सप्तमं कालरात्रीति महागौरीति चाष्टमम् ॥

नवमं सिद्धिदा प्रोक्ता नवदुर्गाः प्रकीर्तिताः ।
उक्तान्येतानि नामानि ब्रह्मणैव महात्मना ॥

अग्निना दह्यमानास्तु शत्रुमध्यगतारणे ।
विषमे दुर्गमेचैव भयार्ता श्शरणं गताः ॥

न तेषां जायते किञ्चदशुभं रणसङ्कटे ।
नापदं तस्य पश्यमि शोकदुःखभयेन हि ॥

यैस्तु भक्त्या स्मृता नूनं तेषां सिद्धिः प्रजायते ।
प्रेतसंस्थातु चामुण्डा वाराही महिषासना ॥

ऐन्द्रीगजसमारूढा वैष्णवी गरुडासना ।
माहेश्वरी वृषारूढा कौमारी शिखिवाहना ॥

ब्राह्मी हंससमारूढा सर्वाभरणभूषिता ।
लक्ष्मीः पद्मासना देवी पद्महस्ता हरिप्रिया ॥

श्वेतरूपधरा देवी ईश्वरी वृषवाहना ।
इत्येता मातरस्सर्वास्सर्वयोगसमन्विताः ॥

नानाभरणशोभाढया नानारत्नोपशोभिताः ।
श्रेष्ठैश्च मौक्तिकै सर्वैं दिव्यहारप्रलंबिभिः ॥

इन्द्रनीलै महानीलैः पद्मरागैस्सुशोभनैः ।
दृश्यन्ते रथमारूढा देव्यः क्रोधसमाकुलाः ॥

शङ्खं चक्रं गदां शक्ति हलञ्च मुसलायुधम् ।
खेटकं तोमरं चैव परशुं पाशमेव च ॥

कुन्तायुधं त्रिशूलञ्च शार्ङ्गमायुधमुत्तमम् ।
दैत्यानां देहनाशाय भक्तानामभयाय च ॥

धारयन्त्यायुधानीत्थं देवानां च हिताय वै ।
नमस्तेस्तु महारौद्रे महाघोरपराक्रमे ॥

महाबले महोत्साहे महाभयविनाशिनि ।
त्राहि मां देवि दुष्प्रेक्ष्ये शत्रूणां भयवर्धिनि ॥

प्राच्यां रक्षतु मामैन्द्री चाग्नेय्या मग्निदेवता ।
वाराहि दक्षिणे रक्षे नैरृत्यां खड्गधारिणि ॥

प्रतीच्यां वारुणी रक्षेद्वायव्यां मृगवाहिनी ।
उदीच्यां दिशि कैबेरी ईशान्या शूलधारिणी ॥

ब्रह्माण्यूर्ध्वंतु मे रक्षे दधस्ताद्वैष्णवी तथा ।
एवं दशदिशो रक्षेत् चामुण्डा शवबाहना ॥

जया मे चाग्रत। पातु विजया पातु पृष्ठतः ।
अजिता वामप्राश्वे तु दक्षिणे चापराजिता ॥ २

शिखामुद्योतिनी रक्षेदुमा मूर्ध्नि व्यवस्थिता ।
मालाधरी ललाटे च भ्रुवौ रक्षेद्यशस्विनी ॥

त्रिनेत्रा च भ्रुवोर्मध्ये यमघण्टा च नासिके ।
शङ्खिनी चक्षुषोर्मध्ये श्रोत्रयो द्वारवासिनी ॥

कपोलौ कालिका रक्षेत्कर्णमूले तु शाङ्करी ।
नासिकायां सुगन्धा च उत्तरोष्ठे तु चर्चिका ॥

अधरे चामृतकळा जिह्वायां च सरस्वती ।
दन्तान रक्षतु कौमारी कण्ठमध्ये तु चण्डिका ॥

घण्टिकां चित्रघण्टा च महामाया च तालुके ।
कामाक्षी चुबुकं रक्षेद्वाचं मे सर्वमङ्गळा ॥

ग्रीवायां भद्रकाली च पृष्ठवंशे धनुर्धरा ।
नीलग्रीवा बहिः कंठे नलिकान्नलकूबरी ॥

खड्गधारिण्युभौ स्कन्धे बाहू मे वज्रधारिणी ।
हस्तयोर्दण्डिनी रक्षेदम्बिका चांगुलीषु च ॥

नखान् शूलेश्वरी रक्षेत्कुक्षौ रक्षेन्नलेश्वरी ।
स्तनौ रक्षेन्महादेवी मनश्शोकविनाशिनी ॥

हृदये ललितादेवी उदरे शूलधारिणी ।
नाभौ च कामिनी रक्षेत् गुह्यं गुह्येश्वरी तथा ॥

कट्यां भगवती रक्षेत् नितम्बौ बिन्दुमालिनी ।
भूतनाथाऽत्र मेढ्रं मे ऊरू मे मेघवाहना ॥

जंघे महाबला प्रोक्ता जानुमध्यं पिनाकिनी।
गुल्भयोर्नारसिंही च पादपृष्ठे यशस्विनी ॥

पादाङ्गुलीश्श्रीधरी मे पादाधस्थलवासिनी।
दंष्ट्राः कराळिनी रक्षेत् केशांश्चैवोर्ध्वकेशिनी ॥

रोमकूपेषु कौबेरी त्वचं च वागीश्वरी तथा।
रक्तमज्जावसामांसान्यस्थिमेदांसि पार्वती ॥

आन्त्राणि कालरात्री च पित्तं च मकुटेश्वरी।
पद्मावती पद्मकोशे कफे चूडामणिस्तथा ॥

ज्वालामुखी नखज्वालामभेद्या सर्वसन्धिषु।
शुक्लं ममादचाद्ब्रह्माणी छायां छत्रेश्वरी तथा ॥

अहङ्कारं मनोबुद्धिं रक्षेन्मे धर्मचारिणी।
प्राणापानौ तथा व्यानमुदानञ्च समानकम् ॥

वज्रहस्ता च मे रक्षेत् प्राणान् कल्याणशोभना।
रसं रूपञ्च गन्धञ्च शब्दं स्पर्शं च योगिनी ॥

सत्वं रजस्तमश्चैव रक्षेन्नारायणी सदा।
आयू रक्षतु वाराहि धर्मं रक्षतु वैष्णवी ॥

यशः कीर्तिं बलं लक्ष्मीं सदा रक्षन्तु मातरः।
गोत्रमिन्द्राणि मे रक्ष पशून्मे रक्ष चण्डिके ॥

पुत्रान् रक्षेन्महालक्ष्मी भार्यां रक्षतु भैरवी।
धनेश्वरी धनं रक्षेत् कौमारी कन्यकास्तथा ॥

मार्गं क्षेमकरी रक्षेद्विजया सर्वतस्स्थिता ।
रक्षाहीनं तु यत्स्थानं वर्जितं कवचेन तु ॥

तत्सर्वं रक्ष मे देवी जयन्ती पापनाशिनी ।
रक्ष मे सर्वगात्राणि दुर्गे दुर्गापहारिणी ॥

सर्वरक्षाकरं पुण्यं कवचं सर्वदा जपेत् ।
इदं रहस्यं विप्रर्षे भक्त्या तव मयोदितम् ॥

देव्यास्तु कवचेनानेन रक्षिततनुस्सुधीः ।
पदमेक न गच्छेत्तु यदिच्छेच्छुभमात्मनः ॥

कवचेनावृतो नित्यं यत्र यत्रैव तिष्ठति ।
तत्र तत्रार्थलाभश्च विजयस्सार्वकामिकः ॥

यं यं चिन्तयते कामं तं तं प्राप्नोति निश्चितम् ।
परमैश्वर्यमतुलं प्राप्नोति विपुलं पुमान् ॥

निर्भयो जायते मर्त्यस्संग्रामेष्वपराजितः ।
त्रैलोक्ये तु भवेत्पूज्यः कवचेनावृतः पुमान् ॥

इदं तु देव्याः कवचं देवानामपि दुर्लभम् ।
यः पठेत्प्रयतो नित्यं त्रिसंध्यं श्रद्धयान्वितः ॥

दैवीकळा भवेत्तस्य त्रैलोक्ये चापराजितः ।
जीवेद्वर्षशतं साग्रमपमृत्युविवर्जितः ॥

नश्यन्ति व्याधयस्सर्वे लूताविस्फोटकादयः ।
स्थावरं जङ्गमं वाऽपि कृत्रिमं चापि यद्विषम् ॥

अभिचाराणि सर्वाणि मन्त्रयन्त्राणि भूतले ।
भूचराः खेचराश्चैव कुलजाश्चोपदेशिकाः ॥

सहजा कुलजा माला डाकिनी शाकिनी तथा ।
अन्तरिक्षचरा घोरा लाकिन्यश्च महाबलाः ॥

ग्रहभूतपिशाचाश्च यक्षगन्धर्वराक्षसाः ।
ब्रह्मराक्षसभेताळाः कूश्माण्डा भैरवादयः ॥

नश्यन्ति दर्शनात्तस्य कवचे हृदि संस्थिते ।
मानोन्नतिर्भवेद्राज्ञो तेजोवृद्धिकरं परम् ॥

यशसा वर्धते सोऽपि कीर्तिमण्डितभूतले ।
तस्माज्जपेत्सदा भक्त्या कवचं कामदं मुने ॥

जपेत्सप्तशतीं चण्डीं कृत्वा तु कवचं पुरा ।
निर्विघ्नेन भवेत्सिद्धिश्चण्डीजपसमुद्भवा ॥

यावद्भूमण्डलं धत्ते सशैलवनकाननम् ।
तावत्तिष्ठति मेदिन्यां सन्ततिः पुत्रपौत्रिकी ॥

देहान्ते परमं स्थानं यत्सुरै रपि दुर्लभम् ।
प्राप्नोति पुरुषो नित्यं महामायाप्रसादतः ॥
मनसा चिन्तितं कार्यं तत्सर्वं सफलं भवेत् ।
॥ इति हरिहरब्रह्मविरचितं देव्याः कवचं संपूर्णम् ॥

अर्गले उवाच १ ॥ श्लोकाः ४ ॥ अर्धश्लोकाः १ ॥ एवं २५ कीलके उवाच १ ॥ श्लोकाः १४ ॥ एवं १५ ॥ कवचे उवाच २ श्लोकाः ५८ ॥ एवं ६० ॥ एवमादितः १०० ॥

## — चण्डिकाहृदयप्रारंभः —

अस्यश्री चण्डिका हृदयमहामन्त्रस्य ब्रह्मा ऋषिः गायत्री छन्दः श्रीमहाकाली श्री महालक्ष्मी श्रीमहासरस्वत्यो देवताः ऐं बीजं ह्रीं शक्तिः क्लीं कीलकम् श्री देवतात्रयप्रसादसिध्यर्थे जपे विनियोगः।

आं ह्रां अंगुष्ठाभ्यां नमः ईं ह्रीं तर्जनीभ्यां नमः ऊं ह्रूं मध्यमाभ्यां नमः ऐं ह्रैं अनामिकाभ्यां नमः औं ह्रौं कनिष्ठिभ्यां नमः आः ह्रः करतलकरपृष्ठाभ्यां नमः। एवं हृदयादिन्यासः॥ भूर्भुवस्सुवरोमिति दिग्बन्धः

ध्यानम् – महिषमस्तकनृत्तविनोदिनी स्फुटरणन्मणिनूपुरमेखला।
जननरक्षणमोक्षविधायिनी जयति शुंभनिशुंभनिषूदिनी॥

लमित्यादि पञ्चपूजा —

अथ ध्यानं प्रवक्ष्यामि श्रुणुष्वैकाग्रमानसः।
चण्डिकाहृदयं गुह्यं विस्तरेण यथातथम्॥

ओं श्रीं ह्रीं क्लीं जय जय चामुण्डे चण्डिके त्रिदशमकुटकोटि संघट्टित चरणारविन्दे गायत्री सावित्रि सरस्वति महाहिकृताभरणे भैरवरूपधारिणि प्रकटितदंष्ट्रे घोरे घोरानलज्वालामालासहस्रपरिवृते महाट्टहासधवळितदिगन्तरे दिवाकरसमप्रभे कामरूपस्वरूपे महामणिद्योतितप्रभासंपूर्णसकलदिगन्तरे सर्वायुधपरिपूर्णे कपालहस्ते गजाजीनोत्तरीये भूतभेताळबृन्दपरिवृते मधुकैटभ महिषासुरसेवा महिषासुरधूम्रलोचनचण्डमुण्डरक्तबीजनिशुम्भशुम्भदैत्यकण्टके काळरात्रिमहामाये शिवे नित्ये इन्द्राग्नियमनिऋऋतिवरुणवायुकुबेरेशान-ब्रह्मविष्णुशिवस्तुत्ये त्रिभुवनधराधरे वामे ज्येष्ठे रौद्रयम्बिके ब्राह्मी माहेश्वरी कौमारी वैष्णवी वाराही नारसिंह्मीन्द्राणी चामुण्डा शिवदूतीस्वरूपे महाकाळी

महालक्ष्मी महासरस्वतीतिस्थिते महोग्रविषोरगफणामणिमकुटरत्नमहाज्वाला विराजितोत्तमाङ्गे अमरपादपकल्पे नवरत्ननिधिकोशे तत्वस्वरूपे वाक्पाणिपादपायूपस्थशब्दस्पर्शरूपरसगन्धश्रोत्रत्वक्चक्षुजिह्वाघ्राणमध्यस्थिते महाज्वाला महाविषोपविषघ्नि गन्धर्वविद्याधराधिते ऐंकार ह्रींकार श्रींकारहस्ते आं क्रों अनश्नपात्रे प्रवेशय प्रवेशय द्रां शोषय शोषय द्रीं सुकुमारय सुकुमारय श्रियं सर्वं प्रवेशय सर्वं प्रवेशय त्रैलोक्योदप्रवर्तिनीमेकाग्रचित्तां वशीकुरु वशीकुरु ऐं आं ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः ह्स्रां ह्स्रीं ह्स्रूं ह्स्रैं ह्स्रौं ह्स्रः मम सर्वकार्याणि साधय साधय हुं फट् स्वाहा ॥ इदमेकं विंशतिवारं त्रिवारं वा जपेत् ।

राजद्वारे श्मशाने च विवादे शत्रुसङ्कटे ।
द्यूते च रणमध्ये च सर्वकार्यजयी भवेत् ॥

चण्डिकाहृदयं गुह्यं त्रिसन्ध्यं कीर्तयेद्द्विजः ।
सर्वकामप्रदं नृणां भुक्तिं मुक्तिं च विंदति ॥

उत्तरकरषडङ्गन्यासपूर्वकं दिग्विमोकं कृत्वा ध्यात्वा पञ्चोपचारान् कुर्यात् । अर्गळकीलककवचपारायणानन्तरं एतच्चण्डिकाहृदयं जपेत् । ततश्चण्डीस्तवजपारायणं कुर्यात् ॥

॥ इति चण्डिकाहृदयं सम्पूर्णम् ॥



## — चण्डीध्वजस्तुतिः —

अस्यश्री चण्डीध्वजस्तोत्रमहामन्त्रस्य मार्कण्डेयऋषिः अनुष्टुप्छन्दः महालक्ष्मी देवता श्रां बीजं श्रीं शक्तिः श्रूं कीलकं मम वाञ्छितार्थफल सिद्ध्यर्थे जपे विनियोगः। श्रामित्यादि करषडङ्गन्यासः।

ध्यानम् – श्रीं नमोजगत्प्रतिष्ठायै देव्यै भूत्यै नमो नमः।
परमानन्दरूपिण्यै नित्यायै सततं नमः॥

नमस्तेस्तु महादेवि परब्रह्मस्वरूपिणि।
राज्यं देहि धनं देहि साम्राज्यं देहि मे सदा॥

रक्ष मां शरणे देवि धनधान्यप्रदायिनि।
राज्यं देहि धनं देहि साम्राज्यं देहि मे सदा॥

नमस्तेस्तु महाकाळि परब्रह्मस्वरूपिणि।
राज्यं देहि धनं देहि साम्राज्यं देहि मे सदा॥

नमस्तेस्तु महालक्ष्मी परब्रह्मस्वरूपिणि।
राज देहि धनं देहि साम्राज्यं देहि मे सदा॥

महसरस्वतीदेवि परब्रह्मस्वरूपिणि।
राज्यं देहि धनं देहि साम्राज्यं देहि मे सदा॥

नमो ब्राह्मि नमस्तेस्तु परब्रह्मस्वरूपिणि।
राज्यं देहि धनं देहि साम्राज्यं देहि मे सदा॥

नमो माहेश्वरीदेवि परब्रह्मस्वरूपिणि।
राज्यं देहि धनं देहि साम्राज्यं देहि मे सदा॥

नमस्तेस्तु च कौमारि परब्रह्मस्वरूपिणि ।
राज्यं देहि धनं देहि साम्राज्यं देहि मे सदा ॥

नमस्ते वैष्णवीदेवि परब्रह्मस्वरूपिणि ।
राज्यं देहि धनं देहि साम्राज्यं देहि मे सदा ॥

नमस्तेस्तु च वाराहि परब्रह्मस्वरूपिणि ।
राज्यं देहि धनं देहि साम्राज्यं देहि मे सदा ॥

नारसिंहि नमस्तेस्तु परब्रह्मस्वरूपिणि ।
राज्यं देहि धनं देहि साम्राज्यं देहि मे सदा ॥

नमो नमस्ते इन्द्राणि परब्रह्मस्वरूपिणि ।
राज्यं देहि धनं देहि साम्राज्यं देहि मे सदा ॥

नमो नमस्ते चामुण्डे परब्रह्मस्वरूपिणि ।
राज्यं देहि धनं देहि साम्राज्यं देहि मे सदा ॥

नमो नमस्ते नन्दायै परब्रह्मस्वरूपिणि ।
राज्यं देहि धनं देहि साम्राज्यं देहि मे सदा ॥

रक्तदन्ते नमस्तेतु परब्रह्मस्वरूपिणि ।
राज्यं देहि धनं देहि साम्राज्यं देहि मे सदा ॥

नमस्तेस्तु महादुर्गे परब्रह्मस्वरूपिणि ।
राज्यं देहि धनं देहि साम्राज्यं देहि मे सदा ॥

शाकंभरि नमस्तेस्तु परब्रह्मस्वरूपिणि ।
राज्यं देहि धनं देहि साम्राज्यं देहि मे सदा ॥

शिवदूति नमस्तेस्तु परब्रह्मस्वरूपिणि ।
राज्यं देहि धनं देहि साम्राज्यं देहि मे सदा ।।

नमस्ते भ्रामरीदेवि परब्रह्मस्वरूपिणि ।
राज्यं देहि धनं देहि साम्राज्यं देहि मे सदा ।।

नमो नवग्रहे देवि परब्रह्मस्वरूपिणि ।
राज्यं देहि धनं देहि साम्राज्यं देहि मे सदा ।।

नवकूटमहादेवि परब्रह्मस्वरूपिणि ।
राज्यं देहि धनं देहि साम्राज्यं देहि मे सदा ।।

स्वर्णपूर्णे नमस्तेस्तु परब्रह्मस्वरूपिणि ।
राज्यं देहि धनं देहि साम्राज्यं देहि मे सदा ।।

श्रीसुन्दरि नमस्तेतु परब्रह्मस्वरूपिणि ।
राज्यं देहि धनं देहि साम्राज्यं देहि मे सदा ।।

नमो भगवतीदेवि परब्रह्मस्वरूपिणि ।
राज्यं देहि धनं देहि साम्राज्यं देहि मे सदा ।।

दिव्ययोगि नमस्तेस्तु परब्रह्मस्वरूपिणि ।
राज्यं देहि धनं देहि साम्राज्यं देहि मे सदा ।।

नमस्तेस्तु महादेवि परब्रह्मस्वरूपिणि ।
राज्यं देहि धनं देहि साम्राज्यं देहि मे सदा ।।

नमो नमस्ते सावित्रि परब्रह्मस्वरूपिणि ।
राज्यं देहि धनं देहि साम्राज्यं देहि मे सदा ।।

जयलक्ष्मी नमस्तेऽस्तु परब्रह्मस्वरूपिणि ।
राज्यं देहि धनं देहि साम्राज्यं देहि मे सदा ॥

मोक्षलक्ष्मी नमस्तेऽस्तु परब्रह्मस्वरूपिणि ।
राज्यं देहि धनं देहि साम्राज्यं देहि मे सदा ॥

रक्ष मां शरणे देवि धनधान्यप्रदायिनि ।
राज्यं देहि धनं देहि साम्राज्यं देहि मे सदा ॥

चण्डीध्वजमिदं स्तोत्रं सर्वकामफलप्रदम् ।
राजते सर्वजन्तूनां वशीकरणसाधनम् ॥

॥ इति श्रीमार्कण्डेयपुराणे परब्रह्मप्रोक्ते राजसन्धाने
चण्डीध्वजस्तोत्रं संपूर्णम् ॥

---

श्रीगुरुभ्यो नमः
श्रीनमश्चण्डिकायै

## — सप्तशतीपारायणक्रमः —

अस्य श्रीदेवीमाहात्म्यसप्तशतीस्तोत्रमहामन्त्रस्य ब्रह्माविष्णुरुद्रा ऋषयः । गायत्र्युष्णिगनुष्टुभश्छन्दांसि । महाकाळी महालक्ष्मी महासरस्वत्यो देवताः । नन्दा शाकम्भरी भीमाश्शक्तयः ॥ रक्तदन्तिका दुर्गा भ्रामर्यो बीजानि । अग्निवायुसूर्यास्तत्वानि । कृष्णरक्तश्वेता वर्णाः । अनुदात्तोदात्तस्वरितास्स्वराः । दक्षिणाग्निगार्हपत्याहवनीयास्स्थानानि । महाकाळी महालक्ष्मी महासरस्वती प्रसादसिध्यर्थे जपे विनियोगः । ओं शंभुतेजो हरिहरब्रह्मेन्द्रादि सर्वतेजोज्वल ज्वालामालिनी पावके - ह्रां नन्दायै अंगुष्टाभ्यां नमः। ओं शंभु तेजो हरिहर ब्रह्मेन्द्रादि सर्वतेजो ज्वल ज्वालामालिनि पावके ह्रीं रक्त-

दन्तिकायै ओं तर्जनीभ्यां नमः। ओं शंभुतेजो हरिहरब्रह्मेन्द्रादि सर्वतेजो ज्वलज्वालामालिनि पावके ह्रूं शाकभर्यै मध्यमाभ्यां नमः। ओं शंभुतेजो हरिहरब्रह्मेन्द्रादि सर्वतेजो ज्वलज्वालामालिनि पावके ह्रैं भीमायै अनामिकाभ्यां नमः। ओं शंभुतेजो हरिहरब्रह्मेन्द्रादि सर्वतेजो ज्वल ज्वालामालिनि पावके ह्रौं भ्रामर्यै कनिष्टिकाभ्यां नमः। ओं शंभुतेजो हरिहरब्रह्मेन्द्रादि सर्वतेजो ज्वल ज्वालामालिनि पावके ह्रः शिवदूत्यै करतलकरपृष्ठाभ्यां नमः। एवं हृदयादिन्यासः। भूर्भुवस्सुवरोमिति दिग्बन्धः॥

ध्यानम् – या देवी मधुकैटभप्रशमनी या माहिषोन्मूलिनी
या धूम्रेक्षणचण्डमुण्डदमनी या रक्तबीजाशनी।
या शुंभादिनिशुंभदैत्यदमनी या सिद्धलक्ष्मीः परा
सा चण्डी नवकोटिशक्तिसहिता मां पातु विश्वेश्वरी॥

विद्युद्दामसमप्रभां मृगपति स्कन्धस्थितां भीषणम्
कन्याभिः करवालखेटविलसद्धस्ताभिरासेविताम्।
हस्तैश्चक्रधराळिखेटविशिखां श्चापं गुणं तर्जनीम्
बिभ्राणामनलात्मिकां शशिधरां दुर्गां त्रिनेत्रां भजे॥

त्रिगुणा तामसी देवी सात्त्विकी या त्रिधोदिता।
सा शर्वा चण्डिका भद्रा दुर्गा भगवतीर्यते॥

योगनिद्रा हरेरुक्ता महाकाळी तमोगुणा।
मधुकैटभनाशार्थं यां तुष्टा वांबुजासनः॥

दशवक्त्रा दशभुजा दशपादाञ्जनप्रभा।
विशालया राजमाना त्रिशल्लोचनमालया॥

स्फुरद्दशनदंष्ट्रा सा भीयरूपापि भूमिप ।
रूपसौभाग्यकान्तीनां सा प्रतिष्ठा महाश्रियाम् ॥

खड्गबाणगदाशूलशंखचक्रभुसुण्डिभृत् ।
परिघं कार्मुकं शीर्षं निश्च्योत द्रुधिरं दधौ ॥

एषा सा वैष्णवी माया महाकाळी दुरत्यया ।
आराधिता वशी कुर्यात् पूजाकर्तुश्चराचरम् ॥

सर्वदेवशरीरेभ्यो याविर्भूताऽमितप्रभा ।
त्रिगुणा सा महालक्ष्मी साक्षान्महिषमर्दनी ॥

श्वेतानना नीलभुजा सुश्वेतस्तनमण्डला ।
रक्तमध्या रक्तपादा नीलजंघोरुरुन्मदा ॥

सुचित्रजघना चित्रमाल्याम्बरा विभूषणा ।
चित्रानुलेपना कान्तिरूपसौभाग्यशालिनी ॥

अष्टादशभुजा पूज्या सा सहस्रभुजा सती ।
आयुधान्यत्र वक्ष्यन्ते दक्षिणाधकरः क्रमात् ॥

अक्षमाला च अमलं बाणोसिः कुलिशं गदा ।
चक्रं त्रिशूलं परशुश्शंखो घण्टा च पाशकः ॥

शक्तिर्दण्डश्चर्मचापः पानपात्रं कमण्डलुः ।
अलंकृतभुजामेभिरायुधैः कमलासनाम् ॥

सर्वदेवमयी मीशां महालक्ष्मीमिमां नृप ।
पूजयेत् सर्वलोकानां स देवानां प्रभुर्भवेत् ॥

गौरी देहात्समुद्भूता या सत्वैकगुणाश्रया ।
साक्षात्सरस्वती प्रोक्ता शुंभासुरनिर्बर्हिणी ॥

दधौ चाष्टभुजाबाणान्मुसलं शूलचक्रभृत् ।
शंखं च लाङ्गलं घंटां कार्मुकं वसुधाधिप ॥

एषा संपूजिता भक्त्या सर्वज्ञत्वं प्रयच्छति ।
निशुंभमर्दनी देवी शुंभासुरनिर्बर्हिणी ॥

एवं ध्यात्वा पञ्चोपचारान् कृत्वा । सप्तशती मन्त्रोन्मीलनं कुर्यात् –

ओं ह्सीं ह्लीं ह्सीं क्षमलवरक्षीं डमलवरक्षीं भगवती स्वाहा महाकुरुकुळायै नमः - मूर्ध्नि । सेतवे नमः - हृदये। ओं क्षां क्षीं क्षूं क्षैं क्षौं क्षः उत्कीलयोत्कीलय स्वाहा महासेतवे नमः - कण्ठे । ओं ऐं ह्लीं क्लीं चामुण्डायै विच्चे स्वाहा निर्वाणाय नमः - नाभौ । ओं ह्लीं नमः - आधारे । एवं सप्तशतीमन्त्रोत्कीलनं अर्गळोत्कीलनं जयन्ति मङ्गळे काळि भद्रकाळि कपाळिनि । दुर्गे क्षमेशि वेधा त्रिस्वधे स्वाहा नमोस्तु ते । ओं ह्सैं ह्लीं ह्सौः ओं क्षमलवरप्रीं-डमल वरप्रीं ओं क्षां क्षीं क्षूं क्षैं क्षौं क्षः उत्कीलयोत्कीलय स्वाहा । ओं ऐं ह्लीं श्रीं ऐं ह्लीं क्लीं चामुण्डायै विच्चे स्वाहा । विशुद्धज्ञानदेहाय त्रिवेदी दिव्यचक्षुषे । श्रेयःप्राप्तिनिमित्ताय नमस्सोमार्धधारिणे । त्रैलोक्यं वशीकुरु वशीकुरु समलवरप्रीं ओं ऐं ह्लीं क्लीं चामुण्डायै विच्चे स्वाहा । इत्युत्कीलनं जप्त्वा ततस्सप्तशतीं पठेत् ॥



श्रीरस्तु

— अथ सप्तशतीप्रारंभः —

अस्य श्रीमहाकळी प्रथमचरित्रस्य ब्रह्मा ऋषिः गायत्रीछन्दः महाकाळी-देवतानन्दाशक्तिः रक्तदन्तिका बीजं अग्निस्तत्वं श्रीमहाकाळीप्रीत्यर्थे प्रथम-चरित्रजपे विनियोगः ।।

ध्यानम् – खड्गं चक्रगदेषु चापपरिघाञ्छूलं भुसुण्डीं शिर -
श्शंखं संदधतीं करैस्त्रिणयनां सर्वाङ्गभूषावृताम् ।
नीलाश्मद्युतिमास्यपाददशकां सेवे महाकाळिकाम्
यामस्तौत्स्वपिते हरौ कमलजो हन्तुं मधुं कैटभम् ।।

— क्रोष्टुकिः —

मार्कण्डेय महाप्राज्ञ सर्वलोकनमस्कृत ।
श्रोतुमिच्छाम्यशेषेण मनोर्माहात्यमुत्तमम् ।।

मार्कण्डेय उवाच —

सावर्णिस्सूर्यतनयो यो मनुः कथ्यतेऽष्टमः ।
निशामय तदुत्पत्तिं विस्तरानदतो मनु ।।

महामायानुभावेन यथा मन्वन्तराधिपः ।
स भभूव महाभागस्सावर्णिस्तनयो रवेः ।।

स्वारोचिषेन्तरे पूर्वं चैत्रवंशसमुद्भवः ।
सुरथो नाम राजाभूत्समस्ते क्षितिमण्डले ।।

तस्य पालयतस्सम्यक्प्रजाः पुत्रानिवौरसान् ।
बभूवुश्शत्रवो भूपाः कोळा विध्वंसिनस्तथा ।।

तस्य तैरभवद्युद्धमतिप्रबलदण्डिनः ।
न्यूनैरपि स तैर्युद्धे कोला विध्वंसिभिर्जितः ॥

ततस्स्वपुरमायातो निजदेशाधिपोऽभवत् ।
आक्रान्तस्सहहाभागस्तै स्तदा प्रबलारिभिः ॥

अमात्यैर्बलिभिर्दुष्टैर्दुर्बलस्य दुरात्मभिः ।
कोशो बलं चापहृतं तत्रापि स्वपुरे स्थितः ॥

ततो मृगयाव्याजेन हृतस्वाम्यस्स भूपतिः ।
एकाकी हयमारुह्य जगाम गहनं वनम् ॥

दृतत्राश्रम मद्राक्षीद् द्विजवर्यस्य मे धनः ।
प्रशान्तश्वापदाकीर्णं मुनिशिष्योपशोभितम् ॥

तस्थौ कंचित्स कालञ्च मुनिना तेन सत्कृतः ।
इतश्चेतश्च विचरन्तस्मिन्मुनिवराश्रमे ॥

सोऽचिन्तयत्तदा तत्र ममत्वाकृष्टचेतनः ।
मत्पूर्वैः पालितं पूर्वं मया हीनं पुरं हि तत् ॥

मद्भृत्यैस्तै रसद्वृतैर्धर्मतः पाल्यते न वा ।
न जाने न प्रधानो मे शूरहस्ती सदा मदः ॥

मम वैरिवशं यातः कान्भोगानुपलप्स्यते ।
ये ममानुगता नित्यं प्रसादधनभोजनैः ॥

आनुवृत्तिं ध्रुवं तेऽद्य कुर्वन्त्यन्यमहीभृताम् ।
असम्यग्व्ययशीलैस्तैः कुर्वद्भिस्सततं व्ययम् ॥

सञ्चितस्सोतिदुःखेन क्षयं कोशो गमिष्यति ।
एतच्चान्यच्च सततं चिन्तयामास पार्थिवः ॥

— सुरसमाधिनामक नृपवैश्यसमागमः —

तत्र विप्राश्रमाभ्याशे वैश्यमेकं ददर्श सः ।
स पृष्टस्तेन कस्त्वं भो हेतुश्चागमनेत्रकः ॥

सशोक इव कस्मात्त्वं दुर्मना इव लक्ष्यसे ।
इत्याकर्ण्य वचस्तस्य भूपतेः प्रणयोदितम् ॥

प्रत्युवाच स तं वैश्यः प्रश्नयावनतो नृपम् ।

वैश्य उवाच —

समाधिर्नाम वैश्योह मुत्पन्नो धनिनां कुले ॥

पुत्रदारैर्निरस्तश्च धनलोभादसाधुभिः ।
विहीनस्स्वजनै दारैः पुत्रैरादाय मे धनम् ॥

वनमभ्यागतो दुःखी निरस्तश्चाप्तबन्धुभिः ।
सोहं न वेद्मि पुत्राणां कुशला कुशलात्मिकाम् ॥

प्रवृत्तिं स्वजनानां च दाराणां चात्र संस्थितः ।
किन्नु तेषां गृहे क्षेममक्षेमं किन्नु सांप्रतम् ॥

कथं ते किन्नु सद्वृत्ता दुर्वृत्ताः किन्नु मे सुताः ।

राजोवाच —

यैर्निरस्तो भवाल्लुब्धैः पुत्रदारादिभिर्धनैः ॥

तेषु किं भवतस्स्वेह मनुबध्नाति मानसम् ।

वैश्य उवाच —

एवमेतद्यथा प्राह भवानस्मद्गतं वचः ॥

किंकरोमिव बध्नाति मम निष्ठुरतां मनः ।
यैस्संत्यज्य पितृस्नेहं धनलुब्धै निराकृतः ॥

प्रीतिस्वजन हार्दञ्च हार्दितेष्वेव मे मनः ।
किमेतन्नाभिजानामि जानन्नपि महामते ॥

यत्प्रेमप्रवणं चित्तं विगुणेष्वपि बन्धुषु ।
तेषां कृतेमे निश्श्वासो दौर्मनस्यं च जायते ॥

करोमि किं यन्नमनस्तेष्वप्रीतिषु निष्ठुरम् ।

**मार्कण्डेय उवाच —**

ततस्तौ सहितो विप्र तं मुनिं समुपस्थितौ ॥

समाधिर्नाम वैश्योसौ स च पार्थिवसत्तमः ।
कृत्वा तु तौ यथा न्यायं यथार्हन्तेन संविदम् ॥

उपविष्टौ कथाः काश्चित् चक्रतुर्वैश्यपार्थिवौ ।

**राजोवाच —**

भगवंस्त्वामहं प्रष्टुमिच्छाम्येकं वदस्व तत् ॥

दुःखाय यन्मे मनस स्स्वचित्तायत्ततां विना ।
ममत्वंगतराज्यस्य राज्याङ्गेष्वखिलेष्वपि ॥

जानतोपि यथाज्ञस्य किमेतन्मुनिसत्तम ।
अयं च निकृतः पुत्रै दरिैर्भृत्यै तथोज्झितः ॥

स्वजनेन च संत्यक्तस्तेषु हार्दी तथाप्यति ।
एवमेष तथाऽहं च द्वावप्यत्यन्तदुःखितौ ॥

दृष्टदोषेऽपि विषये ममत्वाकृष्टमानसौ ।
तत्किमेतन्महाभाग यन्मोहो ज्ञानिनोरपि ।।

ममास्य च भवत्येषा विवेकान्धस्य मूढता ।

ऋषिरुवाच —

ज्ञानमस्ति समस्तस्य जन्तोर्विषयगोचरे ।।

विषयश्च महाभाग याति चैवं पृथक्पृथक् ।
दिवान्धाः प्राणिनः केचिद्रात्रावन्धास्तथाऽपरे ।।

केचिद्दिवा तथा रात्रौ प्राणिनस्तुल्यदृष्टयः ।
ज्ञानिनो मनुजास्सत्यं किन्तु ते नहि केवलम् ।।

यतो हि ज्ञानिनस्सर्वे पशुपक्षिमृगादयः ।
ज्ञानं च तन्मनुष्याणां यत्तेषां मृगपक्षिणाम् ।।

मनुष्याणां च यत्तेषां तुल्यमन्यत्तथोभयोः ।
ज्ञानेऽपि सति पश्यैतान्पतङ्गान् शाबचञ्चुषु ।।

— सुरथसमाधिभ्यां मेधःप्रोक्तमहामायाप्रभावः —

कणमोक्षादृतान्मोहात्पीडयमानानपि क्षुधा ।
मानुषा मनुजव्याघ्रसाभिलाषास्सुतान्प्रति ।।

लोभात्प्रत्युपकाराय नन्वेते किन्नपश्यसि ।
तथापि ममता वर्ते मोहगर्ते निपातिताः ।।

महामायाप्रभावेन संसारस्थितिकारिणा ।
तन्नात्र विस्मयः कार्यो योगनिद्रा जगत्पतेः ।।

महामाया हरेश्चैषा तया संमोह्यते जगत् ।
ज्ञानिनामपि चेतांसि देवी भगवती हि सा ॥

बलादाकृष्य मोहाय महामाया प्रयच्छति ।
तया हि सृज्यते विश्वं जगदेतच्चराचरम् ॥

सैषा प्रपन्ना वरदा नृणां भवति मुक्तये ।
सा विद्या परमा मुक्तेर्हेतुभूता सनातनी ॥

संसारबन्धहेतुश्च सैव सर्वेश्वरेश्वरी ॥

राजोवाच —

भगवन्का हि सा देवी महामायेति यां भवान् ।

ब्रवीति कथमुत्पन्ना सा कर्मास्याश्च किं द्विज ॥
यत्प्रभावा च सा देवी यत्स्वरूपा यदुद्भवा ॥

तत्सर्वं श्रोतुमिच्छामि त्वत्तो ब्रह्मविदां वर ।

ऋषिरुवाच —

नित्यैव सा जगन्मूर्तिस्तया सर्वमिदं ततम् ॥

तथापि तत्समुत्पत्तिर्बहुधा श्रूयतां मम ।
देवानां कार्यसिद्ध्यर्थमाविर्भवति सा यदा ॥

उत्पन्नेति तदा लोके सा नित्याप्यभिधीयते ।
योगनिद्रां यदा विष्णुर्जगत्येकार्णवी कृते ॥

आस्तीर्य शेषमभजत्कल्पान्ते भगवान्प्रभुः ।
तदा द्वावसुरौ घोरौ विख्यातौ मधुकैटभौ ॥

विष्णुकर्णमलोद्भूतौ हन्तुं ब्रह्माणमुद्यतौ ।
स नाभिकमले विष्णोस्थितो ब्रह्मा प्रजापतिः ॥

दृष्ट्वा ता वसुरौ चोग्रौ प्रसुप्तं च जनार्दनम् ।
तुष्टाव योगनिद्रान्तामेकाग्रहृदयस्स्थितः ॥

विबोधनार्थाय हरेर्हरिनेत्रकृतालयाम् ।
विश्वेश्वरीं जगद्धात्रीं स्थितिसंहारकारिणीम् ॥

निद्रा भगवतीं विष्णोरतुलां तेजसप्रभुः ।

— मधुकैटभभयाद्ब्रह्मकृतयोगनिद्रास्तुतिः —

ब्रह्मोवाच —

त्वं स्वाहा त्वं स्वधा त्वं हि वषट्कारस्स्वरात्मिका ॥

सुधा त्वमक्षरे नित्ये त्रिधा मात्रात्मिका स्थिता ।
अर्धमात्रा स्थिता नित्या यानुच्चार्याऽविशेषतः ॥

त्वमेव सन्ध्या सावित्री त्वं देवि जननी परा ।
त्वयैतद्धार्यते विश्वं त्वयैतत् सृज्यते जगत् ॥

त्वयैतत्पाल्यते देवि त्वमत्स्यस्ते च सर्वदा ।
विसृष्टौ सृष्टिरूपा त्वं स्थितिरूपा च पालने ॥

तथा संहृतिरूपान्ते जगतोऽस्य जगन्मये ।
महाविद्या महामाया महामेधा महास्मृतिः ॥

महामोहा भगवती महादेवी महासुरी ।
प्रकृतिस्त्वं च सर्वस्य गुणत्रयविभाविनी ॥

कालरात्रिर्महारात्रिः मोहरात्रिश्च दारुणा ।
त्वं श्रीस्त्वमीश्वरी त्वं ह्रीस्त्वं बुद्धिर्बोधलक्षणा ॥

लज्जा पुष्टिस्तथा तुष्टिस्त्व शान्तिः क्षान्तिरेव च ।
खड्गिनी शूलिनी घोरा गदिनी चक्रिणी तथा ॥

शंखिनी चापिनी बाणभुसुण्डी परिघायुधा ।
सौम्या सौम्यतराशेष सौम्येभ्यस्त्वतिसुन्दरी ॥

परापराणां परमा त्वमेव परमेश्वरी ।
यच्च किञ्चित्क्वचिद्वस्तु सदसद्वाखिलात्मिके ॥

तस्य सर्वस्य या शक्तिः सा त्वं किं स्तूयसे तदा ।
यया त्वया जगत्स्रष्टा जगत्पात्यत्ति यो जगत् ॥

सोऽपि निद्रावशं नीतः कस्त्वां स्तोतुम्महेश्वरः ।
विष्णुश्शरीरग्रहणमहमीशान एव च ॥

कारितास्ते यतोऽतस्त्वां कस्तोतुं शक्तिमान्भवेत् ।
सा त्वमित्थं प्रभावैस्वै रुदारैर्देवि संस्तुता ॥

मोहयैतौ दुराधर्षावसुरौ मधुकैटभौ ।
प्रबोधं च जगत्स्वामी नीयता मच्युतो लघु ॥

बोधश्च क्रियतामस्य हन्तुमेतौ महासुरौ ।

ऋषिरुवाच —

एवं स्तुता तदा देवी तामसी तत्र वेधसा ।
विष्णोः प्रबोधनार्थाय निहन्तुं मधुकैटभौ ॥

नेत्रास्य नासिका बाहुहृदयेभ्यस्तथो रसः ।
निर्गम्य दर्शने तस्थौ ब्रह्मणोऽव्यक्तजन्मनः ॥

उत्तस्थौ च जगन्नाथस्तया मुक्तो जनार्दनः ।
एकार्णवे हि शयनात्ततस्स ददृशे च तौ ।
मधुकैटभौ दुरात्मानौ अतिवीर्यपराक्रमौ ॥

क्रोधरक्तेक्षणावत्तुं ब्रह्माणं जनितोद्यमौ ।
समुत्थाय ततस्ताभ्यां युयुधे भगवान्हरिः ॥

— विष्णुमधुकैटभानां युद्धम् —

पञ्चवर्षसहस्राणि बाहुप्रहरणो विभुः ।
तावप्यतिबलोन्मत्तौ महामायाविमोहितौ ॥

उक्तवन्तौ वरोऽस्मत्तो व्रियतामिति केशवम् ॥

भगवानुवाच —

भवेतामद्य मे तुष्टौ मम वध्यावुभावपि ॥

किमन्येन वरेणाऽत्र एतावद्धि वृतं मया ।

ऋषिरुवाच —

वञ्चिताभ्यामिति तदा सर्वमापोमयं जगत् ॥

विलोक्य ताभ्यां गदितो भगवान्कमलेक्षणः ।
आवां जहीव यत्रोर्वी सलिलेन परिप्लुता ॥

ऋषिरुवाच —

तथेत्युक्त्वा भगवता शङ्खचक्रगदाभृता ।
कृत्वा चक्रेण वै च्छिन्ने जघने शिरसी तयोः ॥

एवमेषा समुत्पन्ना ब्रह्मणा संस्तुता स्वयम् ।
प्रभाव मस्या देव्यास्तु भूयश्शृणु वदामि ते ।।

।। इति श्रीमार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये
मधुकैटभवधो नाम प्रथमोध्यायः ।।

उवाच १४ अर्धश्लोकाः २४ श्लोकाः ६६ एवं १०४ ।

प्रथमचरित्रं संपूर्णम् ।



अस्य श्रीमहालक्ष्मीमध्यमचरित्रस्य विष्णुऋषिः उष्णिक्छन्दः महालक्ष्मी· देवता शाकंभरी शक्तिः दुर्गा बीजं वायुस्तत्वं महालक्ष्मीप्रीत्यर्थे मध्यमचरित्र जपे विनियोगः ।।

ध्यानम् – अक्षस्त्रक्परशून् गदेषु कुलिशान्पद्मं धनुः कुण्डिकां
दंडं शक्तिमसिं च चर्मजलजं घण्टां सुराभाजनम् ।
शूलं पाशसुदर्शने च धरतीं हस्तैः प्रवाळप्रभां
सेवे सैरिभमर्दिनीमिह महालक्ष्मीं सरोजस्थिताम् ।।

— सुरनिकरकथितमहिषासुरदौर्जन्याकर्णनाच्छिन्नकेशवकोपः —

ऋषिरुवाच —

देवासुरमभूद्युद्धं पूर्णमब्दशतं पुरा ।
महिषे सुराणामधिपे देवानां च पुरन्दरे ।।

तत्राऽसुरैर्महावीर्यैर्देवसैन्यं पराजितम् ।
जित्वा च सकलान्देवानिन्द्रोभून्महिषासुरः ।।

ततः पराजिता देवाः पद्मयोनिं प्रजापतिम् ।
पुरस्कृत्य गतास्तत्र यत्रेशगरुडध्वजौ ॥

यथावृत्तं तयोस्तद्वन्महिषासुरचेष्टितम् ।
त्रिदशाः कथयामासुर्देवाभिभवविस्तरम् ॥

सूर्येन्द्राग्न्यनिलेन्दूनां यमस्य वरुणस्य च ।
अन्येषां चाधिकारान् स स्वयमेवाधितिष्ठति ॥

स्वर्गान्निराकृतास्सर्वे देवगणा भुवि ।
विचरन्ति यथा मर्त्या महिषेण दुरात्मना ॥

एतद्वः कथितं सर्वममरारिविचेष्टितम् ।
शरणं वः प्रपन्नास्मो वधस्तस्य विचिन्त्यताम् ॥

इत्थं निशम्य देवानां वचांसि मधुसूदनः ।
चकार कोपं शंभुश्च भ्रुकुटीकुटिलाननौ ॥

— हरादितेजःपुञ्जाविर्भूतदेव्यै तत्तद्देवदत्तयुद्धोपकरणानि —

ततोऽतिकोपपूर्णस्य चक्रिणो वदनात्ततः ।
निश्चक्राम महत्तेजो ब्रह्मणः शङ्करस्य च ॥

अन्येषां चैव देवानां शक्रादीनां शरीरतः ।
निर्गतं सुमहत्तेज स्तच्चैक्यं समगच्छत ॥

अतीव तेजसः कूटं ज्वलन्तमिव पर्वतम् ।
ददृशुस्ते सुरास्तत्र ज्वाला व्याप्ता दिगन्तरम् ॥

अतुलं तत्र तत्तेजः सर्वदेवशरीरजम् ।
एकस्थं तदभून्नारिव्याप्तलोकत्रयं त्विषा ॥

यदभूच्छांभवं तेजस्तेनाजायत तन्मुखम् ।
याम्येन चाभवन्केशा बाहवो विष्णुतेजसा ॥

सौम्येन स्तनयोर्युग्मं मध्यं चैन्द्रेण चाभवत् ।
वारुणेन च जंघोरू नितम्बस्तेजसा भुवः ॥

ब्रह्मणस्तेजसा पादौ तदंगुल्योऽर्कतेजसा ।
वसूनां च करांगुल्यः कौबेरेण च नासिका ॥

तस्यास्तु दन्तास्संभूताः प्राजापत्येन तेजसा ।
नयनत्रितयं जज्ञे तथा पावकतेजसा ॥

भ्रुवौ च सन्ध्ययोर्धाम्ना श्रवणावनिलस्य च ।
अन्येषां चैव देवानां संभवस्तेजसां शिवा ॥

ततस्समस्तदेवानां तेजोराशिसमुद्भवाम् ।
तां विलोक्य मुदं प्रापुरमरा महिषार्दिताः ॥

शूलं शूलाद्विनिष्कृष्य ददौ तस्यै पिनाकधृत् ।
चक्रं च दत्तवान्कृष्ण स्समुत्पाट्य स्वचक्रतः ॥

शंखं च वरुणश्शक्तिं ददौ तस्यै हुताशनः ।
मारुतो दत्तवांश्चापं बाणपूर्णे तथेषुधी ॥

वज्रमिन्द्रस्समुत्पाट्य कुलिशादमराधिपः ।
ददौ तस्यै सहस्राक्षो घंटामैरावताद् गजात् ॥

कालदण्डा द्यमो दण्डं पाशं चाम्बुपति र्ददौ ।
प्रजापतिश्चाक्षमालां ददौ ब्रह्मा कमण्डलम् ॥

समस्तरोमकूपेषु निजरश्मीन् दिवाकरः ।
कालश्च दत्तवान् खड्गं तस्यै चर्म च निर्मलम् ॥

क्षीरोदश्चामलं हारमजरे च तथाम्बरे ।
चूडामणिं तथा दिव्यं कुण्डले कटकानि च ॥

अर्धचन्द्रं तथा शुभ्रं केयूरान् सर्वबाहुषु ।
नूपुरौ विमलौ तद्वत्ग्रैवेयकमनुत्तमम् ॥

अंगुळीयकरत्नानि समस्तास्वंगुलीषु च ।
विश्वकर्मा ददौ तस्यै परशुं चातिनिर्मलम् ॥

अस्त्राण्यनेकरूपाणि तथा भेद्यं च दंशनम् ।
अम्लानपङ्कजां मालां शिरस्युरसि चापराम् ॥

अददज्जलधि स्तस्यै पङ्कजं चातिशोभनम् ।
हिमवान्वाहनं सिंह रत्नानि विविधानि च ॥

ददावशून्यं सुरया पानपात्रं धनाधिपः ।
शेषश्च सर्वनागेशो महामणिविभूषितम् ॥

नागहारं ददौ धत्ते यः पृथिवीमिमाम् ।
अन्यैरपि सुरैर्देवी भूषणै रायुधैस्तथा ॥

सम्मानिता ननादोच्चैः साट्टहासं मुहुर्मुहुः ।
तस्या नादेन घोरेण कृत्स्नमापूरितं नभः ॥

अमायतातिमहता प्रतिशब्दो महानभूत् ।
चक्षुभुः सकला लोकास्समुद्राश्च चकंपिरे ॥

चचाल वसुधा चेलुः सकलाश्च महीधराः ।
जयेति च मुदा देवास्तामूचुस्सिंहवाहिनीम् ॥

तुष्टुवुः मुनयश्चैनां भक्तिनम्रात्ममूर्तयः ।
दृष्ट्वा समस्तं संक्षुब्धं त्रैलोक्यममरादयः ॥

सन्नद्धाखिलसैन्यास्ते समुत्तस्थुरुदायुधाः ।
आः किमेतदिति क्रोधादाभाष्य महिषासुरः ॥

अभ्याधावत तं शब्दमशेषैरसुरैर्वृतः ।
स ददर्श ततो देवं व्याप्तलोकत्रयां त्विषा ॥

पादाक्रान्त्या नतभुवं किरीटोल्लिखिताम्बराम् ।
क्षोभिताशेषपातालां धनुर्ज्यानिस्वनेन ताम् ॥

दिशो भुजसहस्रेण समन्ताद्व्याप्य संस्थिताम् ।
ततः प्रववृते युद्धं तया देव्यासुरद्विषाम् ॥

— महिषासुरसेनानीनां चिक्षुरादीनां देव्याश्च युद्धम् —

शस्त्रास्त्रैर्बहुधा मुक्तैरादीपितदिगन्तरम् ।
महिषासुरसेनानीश्चिक्षुराख्यो महासुरः ॥

युयुधे चामरश्चान्यैश्चतुरङ्गबलान्वितः ।
रथानामयुतैष्षड्भिरुदग्राख्यो महासुरः ॥

अयध्यतायुतानां च सहस्रेण महाहनुः ।
पञ्चाशद्भिश्च नियुतैरसिलोमा महासुरः ॥

अयुतानां शतैष्षड्भिर्बाष्कलो युयुधे रणे ।
गजवाजिसहस्रौघैरनेकैः परिवारितः ॥

वृतो रथानां कोटचा च युद्धे तस्मिन्नयुध्यत ।
बिडालाख्यो महादैत्यः पञ्चाशद्भिरथायुतैः ॥

युयुधे संयुगे तत्र रथानां परिवारितः ।
अन्ये च तत्रायुतशो रथनागहयैर्वृताः ॥

युयुधुस्संयुगे देव्या सह तत्र महासुराः ।
कोटिकोटिसहस्रैस्तु रथानां दन्तिनां तथा ॥

हयानां च वृतो युद्धे तत्राभून्महिषासुरः ।
तोमरैर्भिण्डिवालैश्च शक्तिभिर्मुसलैस्तथा ॥

युयुधुस्संयुगे देव्या खड्गैः परशुपट्टसैः ।
केचिच्च चिक्षिपुश्शक्तीः केचित्पाशांस्तथापरे ॥

देवीं खड्गप्रहारैस्तु ते तां हन्तुं प्रचक्रमुः ।
साऽपि देवी ततस्तानि शस्त्राण्यस्त्राणि चण्डिका ॥

लीलयैव प्रचिच्छेद निजशस्त्रास्त्रवर्षिणी ।
अनायस्तानना देवी स्तूयमाना सुरर्षिभिः ॥

मुमोचासुरदेहेषु शस्त्राण्यस्त्राणि चेश्वरी ।
सोऽपि क्रुद्धो धुतसटो देव्या वाहनकेसरी ॥

चचाराऽसुरसैन्येषु वनेष्विव हुताशनः ।
विश्वासान्मुमुचे यांश्च युध्यमाना रणेम्बिका ॥

त एव सद्यस्संभूता गणाश्शतसहस्रशः ।
युयुधुस्ते परशुभिर्भिण्डिवालासिपट्टसैः ॥

नाशयन्तो सुरगणन् देवी शक्त्युपबृंहिताः ।
अवादयन्त पटहान् गणाश्शंखांस्तथापरे ॥

मृदङ्गाश्च तथैवान्ये तस्मिन्युद्धमहोत्सवे ।
ततो देवी त्रिशूलेन गदया शक्तिवृष्टिभिः ॥

खड्गादिभिश्च शतशो निजघान महासुरान् ।
पातयामास चैवान्यान् घंटास्वनविमोहितान् ॥

असुरान् भुवि पाशेन बध्वा चान्यानकर्षयत् ।
केचिद्द्विधा कृतास्तीक्ष्णैः खड्गपातैस्तथाऽपरे ॥

विपोधितावि पातेन गदया भुवि शेरते ।
वेमुश्च केचिद्रुधिरं मुसलेन भृशं हताः ॥

केचिन्निपतिता भूमौ भिन्नाश्शूलेन वक्षसि ।
निरन्तराश्शरौघेण कृताः केचिद्रणाजिरे ॥

सेवानुकारिणः प्राणान्मुमुचुस्त्रिदशार्दनाः ।
केषांचिदाहवश्छिन्नाश्छिन्नग्रीवाः तथापरे ॥

शिरांसि पेतुरन्येषां अन्ये मध्ये विदारिताः ।
विच्छिन्नजंघास्त्वपरे पेतुरुर्व्यां महासुराः ॥

एकबाह्वक्षिचरणाः केचिद्देव्या द्विधा कृताः ।
छिन्नेऽपि चान्ये शिरसि पतिताः पुनरुत्थिताः ॥

कबन्धा युयुधुर्देव्या गृहीतपरमायुधाः ।
ननृतुश्चापरे तत्र युद्धे तूर्यलयाश्रिताः ॥

कबन्धाः छिन्नशिरसः खड्गशक्त्यृष्टिपाणयः ।
तिष्ठ तिष्ठेति भाषन्तो देवीमन्ये महासुराः ॥

पातितै रथनागाश्वैरसुरैश्च वसुन्धरा ।
अगम्या साऽभवत्तत्र यत्राभूत्स महारणः ॥

शोणितौघा महानद्यस्सद्यस्तत्र प्रसुस्रुवुः ।
मध्ये चासुरसैन्यस्य वारणा सुरवाजिनाम् ॥

क्षणेन तन्महासैन्यमसुराणां तथाऽम्बिका ।
निन्ये क्षयं यथावह्निस्तृणदारुमहाचयम् ॥

स च सिंहो महानादमुत्सृजन्धुतकेसरः ।
शरीरेभ्योऽमरारीणामसूनिव विचिन्वति ॥

देव्या गणैश्च तैस्तत्र कृतं युद्धं तथाऽसुरैः ।
यथैषां तुष्टुवुर्देवाः पुष्पवृष्टि मुचो दिवि ॥

॥ इति श्रीमार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये
महिषासुरसैन्यवधो नाम द्वितीयोऽध्यायः ॥

उवाच १ श्लोकाः ६८ एवं ६९ एवमादितः १७३ ।



## — चिक्षुरादि महिषासुरसेनानीवधः —

ऋषिरुवाच —

निहन्यमानं तत्सैन्यमवलोक्य महासुरः ।
सेनानीश्चिक्षुरः कोपाद्ययौ योद्धुमथाऽम्बिकाम् ॥

स देवीं शरवर्षेण ववर्ष समरेऽसुरः ।
यथा मेरुगिरेश्शृङ्गं तोयवर्षेण तोयदः ॥

तस्य छित्वा ततो देवी लीलयैव शरोत्करान् ।
जघान तुरगान्बाणैर्यन्तारं चैव वाजिनाम् ॥

चिच्छेद च धनुस्सद्योऽध्वजं चातिसमुच्छ्रितम् ।
विव्याध चैव गात्रेषु छिन्नधन्वानमाशुगैः ॥

स छिन्नधन्वा विरथो हताश्वो हतसारथिः ।
अभ्यधावत तां देवीं खड्गचर्मधरोऽसुरः ॥

सिंहमाहत्य खड्गेन तीक्ष्णधारेण मूर्धनि ।
आजघान भुजे सव्ये देवीमप्यतिवेगवान् ॥

तस्याः खड्गो भुजं प्राप्य पफाल नृपनन्दन ।
ततो जग्राह शूलं स कोपादरुणलोचनः ॥

चिक्षेप च ततस्तत्तु भद्रकाळ्यां महासुरः ।
जाज्वल्यमानं तेजोभी रविबिम्बमिवाम्बरात् ॥

दृष्ट्वा तदाऽऽपतच्छूलं देवी शूलममुञ्चत ।
तच्छूलं शतधा तेन नीतं स च महाऽसुरः ॥

हते तस्मिन् महावीर्ये महिषस्य चमूपतौ ।
अजगाम गजारूढः चामरस्त्रिदशार्दनः ॥

सोऽपि शक्तिं मुमोचाथ देव्यास्तामम्बिका द्रुतम् ।
हुङ्काराभिहतां भूमौ पातयामास निष्प्रभाम् ॥

भग्नां शक्तिं निपतितां दृष्ट्वा क्रोधसमन्वितः ।
चिक्षेप चासुरश्शूलं बाणैस्तदपि साच्छिनत् ॥

ततः सिंहस्समुत्पत्य गजकुंभान्तरे स्थितः ।
बाहुयुद्धेन युयुधे तेनोच्चैस्त्रिदशारिणा ॥

युध्यमानौ ततस्तौ तु तस्मान्नागान्महीं गतौ ।
युयुधातेति संरब्धौ प्रहारैरतिदारुणैः ॥

ततो वेगात्खमुत्पत्य निपत्य च मृगारिणा ।
करप्रहारेण शिरश्चासुरस्य पृथक्कृतम् ॥

उदग्रश्चरणे देव्या शिलावृक्षादिभिर्हतः ।
दन्तमुष्टितलैश्चैव कराळश्च निपातितः ॥

देवी क्रुद्धा गदापातैश्चूर्णयामास चोद्धतम् ।
बाष्कलं भिण्डिवालेन बाणैस्ताम्रं तथान्धकम् ॥

उग्रास्यमुग्रवीर्यं च तथैव च महाहनुम् ।
त्रिनेत्रं च त्रिशूलेन जघान परमेश्वरी ॥

बिडालस्यासिना कायात्पातयामास वै शिरः ।
दुर्धरं दुर्मुखं चोभौ शरैः निन्ये यमक्षयम् ॥

## देवीकृतमहिषासुरवधः

एवं संक्षीयमाणे तु स्वसैन्ये महिषासुरः ।
माहिषेण स्वरूपेण त्रासयामास तान्गणान् ॥

काचित्तुण्डप्रहारेण खुरक्षेपैस्तथाऽपरान् ।
लांगूलताडितांश्चान्यान् शृङ्गाभ्यां च विदारितान् ॥

वेगेन कांश्चिदपरान् नादेन भ्रमणेन च ।
निश्वासपवनेनान्यान् पातयामास भूतले ॥

निपात्य प्रमथानीकमभ्यधावत सोऽसुरः ।
सिंहं हन्तुं महादेव्याः कोपं चक्रे ततोऽम्बिका ॥

सोऽपि कोपान्महावीर्यः खुरक्षुण्णमहीतलः ।
शृङ्गाभ्यां पर्वतानुच्चांश्चिक्षेप च ननाद च ॥

वेगभ्रमणविक्षुण्णा मही तस्य व्यशीर्यत ।
लांगूलेनाहतश्चाब्धिः प्लावयामास सर्वतः ॥

धुतशृङ्गविभिन्नाश्च खण्डं खण्डं ययुर्घनाः ।
श्वासानिलास्ताश्शतशो निपेतुर्नभसोऽचलाः ॥

इति क्रोधसमाध्मातमापतन्तं महाऽसुरम् ।
दृष्ट्वा सा चण्डिका कोपं तद्वधाय तथाऽकरोत् ॥

सा क्षिप्त्वा तस्य वै पाशं तं बबन्ध महाऽसुरम् ।
तत्याज माहिषं रूपं सोपि बद्धो महामृधे ॥

ततस्सिंहोऽभवत्सद्यो यावत्तस्यांबिका शिरः ।
छिनत्ति तावत् पुरुषः खड्गपाणिरदृश्यत ॥

तत एवाशु पुरुषं देवी चिच्छेद सायकैः ।
तं खड्गचर्मणा सार्धं ततस्सोभून्महागजः ॥

करेण च महासिंहं तं चकर्ष च जगर्ज च ।
कर्षतस्तु करं देवी खड्गेण निरकृन्तत ॥

ततो महाऽसुरो भूयो माहिषं वपुरास्थितः ।
तथैव क्षोभयामास त्रैलोक्यं सचराचरम् ॥

ततः क्रुद्धा जगन्माता चण्डिका पानमुत्तमम् ।
पपौ पुनः पुनश्चैव जहासाऽरुणलोचना ॥

ननर्द चासुरस्सोऽपि बलवीर्यमदोद्धतः ।
विषाणाभ्यां च चिक्षेप चण्डिकां प्रति भूधरान् ॥

सा च तान्प्रहितां स्तेन चूर्णयन्ती शरोत्करैः ।
उवाच तं मदोद्धूतमुखरागाकुलाक्षरम् ॥

देव्युवाच —

गर्ज गर्ज क्षणं मूढ मधु यावत्पिबाम्यहम् ।
मया त्वयि हतेऽत्रैव गर्जिष्यंत्याशु देवताः ॥

ऋषिरुवाच —

एवमुक्त्वा समुत्पत्य साऽऽरूढा तं महाऽसुरम् ।
पादेनाक्रम्य कण्ठे च शूलेनैनमताडयत् ॥

ततस्सोपि पदाक्रांतस्तया निजमुखात्ततः ।
अर्धविष्क्रान्त एवासीद्देव्या वीर्येण संवृतः ॥

अर्धनिष्क्रान्त एवाऽसौ युध्यमानो महाऽसुरः ।
तया महाऽसिना देव्या शिरश्छित्वा निपातितः ॥

ततो हाहाकृतं सर्वं दैत्यसैन्यं ननाश तत् ।
प्रहर्षं च परं जग्मुस्सकला देवतागणाः ॥

तुष्टुवुस्तां सुरा देवीं सहदिव्यैर्महर्षिभिः ।
जगुर्गन्धर्वपतयो ननृतुश्चाप्सरोगणाः ॥

॥ इति श्रीमार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये
महिषासुरवधो नाम तृतीयोध्यायः ॥
उवाच ३ श्लोकाः ४१ एवं ४४ एवमादितः २१७ ॥



## चतुर्थोऽध्यायः

### — देवकृतमहिषासुरमर्दनीस्तुतिः —

ऋषिरुवाच —

शक्रादयस्सुरगणा निहतेति वीर्ये
तस्मिन्दुरात्मनि सुरारिबले च देव्या ।
तां तुष्टुवुः प्रणति नम्रशिरोऽधरां सा
वाग्भिः प्रहर्षपुलकोद्गमचारुदेहाः ॥

देव्या यया ततमिदं जगदात्मशक्त्या
निश्शेषदेवगणशक्तिसमूहमूर्त्या ।
तामम्बिकामखिलदेवमहर्षिपूज्यां
भक्त्या नतास्स्म विदधातु शुभानि सा नः ॥

यस्याः प्रभावमतुलं भगवाननन्तो
ब्रह्मा हरश्च न हि वक्तुमलं बलं च ।
सा चण्डिकाऽखिलजगत्परिपालनाय
नाशाय चाशुभभयस्य मतिं करोतु ॥

या श्रीस्स्वयं सुकृतिनां भवनेष्वलक्ष्मीः
पापात्मनां कृतधियां हृदयेषु बुद्धिः ।
श्रद्धा सतां कुलजनप्रभवस्य लज्जा
तां त्वां नतास्स्म परिपालय देवि विश्वम् ॥

किं वर्णयाम तव रूपमचिन्त्यमेत –
त्किंचातिवीर्यमसुरक्षयकारि भूरि ।
किं चाहवेषु चरितानि तवाद्भुतानि
सर्वेषु देव्यसुरदेवगणादिकेषु ॥

हेतुस्समस्तजगतां त्रिगुणापि दोषै
र्न ज्ञायसे हरिहरादिभिरप्यपारा ।
सर्वाश्रयाखिलमिदं जगदंशभूत
मव्याकृता हि परमा प्रकृतिस्त्वमाद्या ॥

यस्या स्समस्तसुरतासमुदीरणेन
तृप्तिं प्रयाति सकलेषु मखेषु देवी ।
स्वाहासि वै पितृगणस्य च तृप्तिहेतु
रुच्चार्यसे त्वमत एव जनै स्स्वधा च ॥

या मुक्तिहेतुरविचिन्त्य महाव्रतात्व
मभ्यस्यसे सुनियतेन्द्रियतत्त्वसारैः ।
मोक्षार्थिभिर्मुनिभिरस्तसमस्तदोषै
र्विद्यासि सा भगवती परमा हि देवि ॥

शब्दात्मिका सुविमलर्ग्यजुषां विधान
मुद्गीथरम्यपदपाठवतां च साम्नाम् ।
देवीत्रयी भगवती भवभावनाय
वार्ता च सर्वजगतां परमार्तिहन्त्री ॥

मेधासि देवि विदिताखिलशास्त्रसारा
दुर्गासि दुर्ग भवसागरनौरसंगा ।
श्रीः कैटभारिहृदयैककृताधिवासा
गौरी त्वमेव शशिमौळिकृतप्रतिष्ठा ॥

ईषत्सहा सममलं परिपूर्णचन्द्र
बिंबानुकारि कनकोत्तमकान्तिकान्तम् ।
अत्यद्भुतं प्रहृतमात्तरुषा तथापि
वक्त्रं विलोक्य सहसा महिषासुरेण ॥

दृष्ट्वा तु देवि कुपितं भ्रुकुटीकराळ
मुद्यच्छशाङ्कसदृशच्छवियन्न सद्यः ।
प्राणान्मुमोच महिषस्तदतीव चित्रम्
कैर्जीव्यते हि कुपितान्तकदर्शनेन ॥

देवि प्रसीद परमा भवती भवाय
सद्यो विनाशयसि कोपवती कुलानि ।
विज्ञातमेतदधुनैव यदस्तमेत –
न्नीतं बलं सुविपुलं महिषासुरस्य ॥

ते सम्मता जनपदेषु धनानि तेषाम्
य तेषां यशांसि न च सीदति धर्मवर्गः ।
धन्यास्त एव निभृतात्मजभृत्यदारा
येषां सदाभ्युदयदा भवती प्रसन्ना ॥

धर्म्याणि देवि सकलानि सदैव कर्मा
ण्यत्यादृतः प्रतिदिनं सुकृती करोति ।
स्वर्गं प्रयाति च ततो भवती प्रसादात्
लोकत्रयेपि फलदा ननु देवि तेन ॥

दुर्गे स्मृता हरसि भीतिमशेषजन्तो
स्वस्थैः स्मृता मतिमतीवशुभां ददासि ।
दारिद्रयदुःखभयहारिणिका त्वदन्या
सर्वोपकारकरणाय सदार्द्रचित्ता ॥

एभिर्हतैर्जगदुपैति सुखं तथैते
कुर्वन्तु नाम नरकाय चिराय पापम् ।
संग्राममृत्युमधिगम्य दिवं प्रयान्तु
मत्वेति नून महितान्विनिहंसि देवि ॥

दृष्ट्वैव किं न भवती प्रकरोति भस्म
सर्वासुरा नरिषु यत्प्रहिणोषि शस्त्रम् ।
लोकान्प्रयान्तु रिपवोपि हि शस्त्रपूता
इत्थं मतिर्भवति तेष्वहितेषु साध्वी ॥

खड्गप्रभानिकरविस्फुरणैस्तथोग्रै
श्शूलोग्रकान्तिनिवहे न दृशो सुराणाम् ।
यन्नागता विलयमंशुमदिन्दुखण्ड
योग्याननं तव विलोकयतां तदेतत् ॥

दुर्वृत्तवृत्तशमनं तव देवि शीलम्
रूपं तथैत दविचिन्त्य मतुल्यमन्यैः ।
वीर्यं च हन्तृहृतदेवपराक्रमाणाम्
वैरिष्वपि प्रकटितैव दयात्वयेत्थम् ॥

केनोपमा भवतु तेऽस्य पराक्रमस्य
रूपं च शत्रुभयकार्यतिहारि कुत्र ।
चित्ते कृपासमरनिष्ठुरता च दृष्टा
त्वय्येव देवि वरदे भुवनत्रयेपि ।

त्रैलोक्यमेतदखिलं रिपुनाशनेन
त्रातं त्वया समरमूर्धनि तेपि हत्वा ।
नीता दिवं रिपुगणा भयमप्यपास्त
मस्माकमुन्मदसुरारिभवं नमस्ते ॥

शूलेन पाहि नो देवि पाहि खड्गेन चाम्बिके ।
घण्टास्वनेन नः पाहि चापज्यानिस्स्वनेन च ॥

प्राच्यां रक्ष प्रतीच्यां च चण्डिके रक्ष दक्षिणे ।
भ्रामणे नात्मशूलस्य उत्तरस्यां तथेश्वरी ॥

सौम्यानि यानि रूपाणि त्रैलोक्ये विचरन्ति ते ।
यानि चात्यर्थघोराणि रक्षास्मांस्तथा भुवम् ॥

खड्गशूलगदादीनि यानि चास्त्राणि तेम्बिके ।
करपल्लवसंगीनि तै रस्मान् रक्ष सर्वतः ॥

ऋषिरुवाच —

एवं स्तुता सुरैर्दिव्यैः कुसुमैः नन्दनोद्भवैः ।
अर्चिता जगतां धात्री तथा गन्धानुलेपनैः ॥

भक्त्या समस्तैस्त्रिदशैः धूपैः सुधूपिता ।
प्राह प्रसादसुमुखी समस्तान्प्रणतान्सुरान् ॥

देव्युवाच —

व्रियतां त्रिदशास्सर्वे यदस्मत्तोभिवाञ्छतम् ॥

देवा ऊचुः —

भगवत्या कृतं सर्वं न किञ्चिदवशिष्यते ।
यदयं निहतश्शत्रुः अस्माकं महिषासुरः ॥

यदि चापि वरो देयः त्वयाऽस्माकं महेश्वरी ।
संस्मृता संस्मृता त्वन्नो हिंसेथाः परमापदः ॥

यश्च मर्त्यस्तवैरेभिस्त्वां स्तोष्यत्यमलानने ।
तस्य वित्तर्थिविभवैः धनदारादिसंपदाम् ॥

वृद्धयेऽस्मत्प्रसन्ना त्वं भवेथाः सर्वदाम्बिके ॥

ऋषिरुवाच —

इति प्रसादिता देवैः जगतोर्थे तथात्मनः ।
तथेत्युक्त्वा भद्रकाळी बभूवान्तर्हिता नृप ॥

इत्येतत् कथितं भूप संभूता सा यथा पुरा ।
देवी देवशरीरेभ्यो जगत्त्रयहितैषिणी ॥

पुनश्च गौरी देहात्समुद्भूता यथाऽभवत् ।
वधाय दुष्टदैत्यानां तथा शुंभनिशुंभयोः ॥

रक्षणाय च लोकानां देवानामुपकारिणी ।
तच्छृणुष्व मयाख्यातं यथावत्कथयामि ते ॥

॥ इति श्रीमार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमहात्म्ये
शक्रादिस्तुतिर्नाम चतुर्थोऽध्यायः ॥

उवाच ५ अर्धश्लोकाः २ श्लोकाः ३५ एवं ४२ एवमादितः २५९

इति मध्यमचरित्रं समाप्तम् ।



## पञ्चमोऽध्यायः

अस्यश्री महासरस्वत्युत्तमचरित्रस्य रुद्रऋषिः अनुष्टुप्छन्दः महासरस्वती देवता भीमा शक्तिः भ्रामरी बीजम् सुर्यस्तत्वम् महासरस्वती प्रीत्यर्थे जपे विनियोगः —

ध्यानम् – घंटाशूलहला निशंखमुसले चक्रं धनुस्सायकम्
हस्ताब्जैः दधतीं घनान्तविलसच्छीतांशतुल्यप्रभाम् ।
गौरीदेहसमुद्भवां त्रिजगता माधारभूतां महा
पूर्वामत्र सरस्वतीमनुभजे शुंभादि दैत्यार्दिनीम् ॥

ऋषिरुवाच —

पुरा शुंभनिशुंभाभ्या मसुराभ्यां शचीपतेः ।
त्रैलोक्यं यज्ञभागाश्च हृता मदबलाश्रयात् ॥

तवेव सूर्यतां तद्वदधिकारं तथैन्दवम् ।
कौबेर मथ याम्यं च चक्राते वरुणस्य च ।।

तावेव पवनर्धिं च चक्रतुः वह्निकर्म च ।
ततो देवा विनिर्धूताः भ्रष्टराज्याः पराजिताः ।।

हृताधिकारास्त्रिदशा ताभ्यां सर्वे निराकृताः ।
महासुराभ्यां तां देवीं संस्मरन्त्यपराजिताम् ।।

तयाऽस्माकं वरो दत्तो यथापत्सु स्मृताऽखिलाः ।
भवतां नाशयिष्यामि तत्क्षणात्परमापदः ।।

इति कृत्वा मतिं देवा हिमवन्तं नगेश्वरम् ।
जग्मुस्तत्र ततो देवीं विष्णुमायां प्रतुष्टुवुः ।।

देवा ऊचुः –

नमो देव्यै महादेव्यै शिवायै सततं नमः ।
नमः प्रकृत्यै भद्रायै नियताः प्रणतास्स्मृताम् ।।

रौद्रायै नम नित्यायै गौर्यै धात्र्यै नमो नमः ।
ज्योत्स्नायै चेन्दुरूपिण्यै सुखायै सततं नमः ।।

कल्याण्यै प्रणतामृध्यै सिद्ध्यै कूर्मो नमो नमः ।
नैर्ऋत्यै भूभृतां लक्ष्म्यै शर्वाण्यै ते नमो नमः ।।

दुर्गायै दुर्गपारायै सारायै सर्वकारिण्यै ।
ख्यात्यै तथैव कृष्णायै धूम्रायै सततं नमः ।।

अतिसौम्यातिरौद्रायै नतान्तस्यै नमो नमः ।
नमो जगत्प्रतिष्ठायै देव्यै कृत्यै नमो नमः ।।

या देवी सर्वभूतेषु विष्णुमायेति शब्दिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥

या देवी सर्वभूतेषु चेतनेत्यभिधीयते ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥

या देवी सर्वभूतेषु बुद्धिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥

या देवी सर्वभूतेषु निद्रारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥

या देवी सर्वभूतेषु क्षुधारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥

या देवी सर्वभूतेषु छायारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥

या देवी सर्वभूतेषु शक्तिरूपेण संथिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥

या देवी सर्वभूतेषु तृष्णारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥

या देवी सर्वभतेषु क्षान्तिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥

या देवी सर्वभूतेषु जातिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥

या देवी सर्वभूतेषु लज्जारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥

या देवी सर्वभूतेषु शान्तिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥

या देवी सर्वभूतेषु श्रद्धारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥

या देवी सर्वभूतेषु कान्तिरूपेण संस्थिता ।
नमस्तस्यै नमवस्तस्यै नमस्तस्यै नमो नमः ॥

या देवी सर्वभूतेषु लक्ष्मीरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥

या देवी सर्वभूतेषु वृत्तिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥

या देवी सर्वभूतेषु स्मृतिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥

या देवी सर्वभूतेषु दयारूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥

या देवी सर्वभूतेषु तुष्टिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥

या देवी सर्वभूतेषु मातृरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥

या देवी सर्वभूतेषु भ्रान्तिरूपेण संस्थिता।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥

इन्द्रियाणामधिष्ठात्री भूतानां चाखिलेषु या ।
भूतेषु सततं तस्यै व्याप्तिदेव्यै नमो नमः ॥

चितिरूपेण या कृत्स्नमेतद्व्याप्य स्थिता जगत् ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥

स्तुता सुरैः पूर्वमभीष्ट संश्रया –
त्तथा सुरेन्द्रेण दिनेषु सेविता ।
करोतु सा न श्शुभहेतुरीश्वरी
शुभानि भद्राण्यभिहन्तु चापदः ॥

यासां पत्रं चोद्धतदैत्यतापितै
रस्माभिरीशा च सुरैर्नमस्यते ।
या च स्मृता तत्क्षणमेव हन्ति न –
स्सर्वापदो भक्तिविनम्रमूर्तिभिः ॥

ऋषिरुवाच —

— गौरिकायकोशात्कौशिक्याविर्भावस्तदादेशात्तस्याहीमवद्गमनं च —

एवं स्तवादियुक्तानां देवानां तत्र पार्वती ।
स्नातु मभ्याययातोये जाह्नव्या नृपनन्दन ॥

साऽब्रवीत्तान्सुरान्सुभ्रूर्भवद्भिस्तूयतेऽत्र का ।
शरीरकोशतश्चास्यास्समुद्भूता ब्रवीच्छिवा ॥

स्तोत्रं ममैतत्क्रियते शुम्भदैत्यनिराकृतैः ।
देवैस्समेतैस्समरे निशुम्भेन पराजितैः ॥

शरीरकोशाद्यत्तस्याः पार्वत्या निस्सृताम्बिका ।
कौशिकीति समस्तेषु ततो लोकेषु गीयते ॥

तस्यां विनिर्गतायां कृष्णाभूत्सापि पार्वती ।
कौशिकेति समाख्याता हिमाचलकृताश्रया ॥

— शुम्भनिकटे चण्डमुण्डकृत दौर्मन्त्र्यः —

ततोम्बिकां परं रूपं बिभ्राणां सुमनोहराम् ।
ददर्श चण्डो मुण्डश्च भृत्यौ शुम्भनिशुम्भयोः ॥

ताभ्यां शुंभाय चाख्याता साऽतीवसुमनोहरा ।
काप्यास्ते स्त्री महाराज भासयन्ती हिमाचलम् ॥

नैव तादृक्क्वचिद्रूपं दृष्टं केनचिदुत्तमम् ।
ज्ञायतां काप्यसौ देवी गृह्यतां चासुरेश्वर ॥

स्त्रीरत्नमति चार्वङ्गी द्योतयन्ती दिशस्त्विषा ।
सा तु तिष्ठति दैत्येन्द्र तां भवान् द्रष्टुमर्हति ॥

यानि रत्नानि मणयो गजाश्वादीनि तु प्रभो ।
त्रैलोक्ये तु समस्तानि सांप्रतं तानि ते गृहे ॥

ऐरावतस्समानीतो गजरत्नं पुरंदरात् ।
पारिजाततरुश्चायं तथैवोच्चैश्श्रवा हयः ॥

विमानं हंससंयुक्तमेतत्तिष्ठति तेङ्गणे ।
रत्नभूत मिहानीतं यदासी द्वेदसोद्भुतम् ॥

निधिरेष महापद्मः समानीतो धनेश्वरात् ।
किंजल्किनीं ददौ चाब्धिर्मालामम्लानपङ्कजाव् ॥

छत्रं ते वारुणं गेहे कांचनस्रावितिष्ठति ।
तथायं स्यन्दनवरो यः पुरासी त्प्रजापतेः ॥

मृत्यो रुत्क्रान्तिदानाम शक्तिरीश त्वया हृता ।
पाशः सलिलराजस्य भ्रातुस्तव परिग्रहे ॥

निशुंभस्याब्धिजाताश्च समस्ता रत्नजातयः ।
वह्निश्चापि ददौ तुभ्यमग्निशौचे च वाससी ॥

एवं दैत्येन्द्र रत्नानि समस्त न्याहृतानि ते ।
स्त्रीरत्नमेषा कल्याणी त्वया कस्मान्न गृह्यते ॥

— देवीनिकटे सुग्रीवसमुदितशुभसन्देशः —

ऋषिरुवाच –

निशम्येति वच श्शुंभः स तदा चण्डमुण्डयोः ।
प्रेषयामास सुग्रीवं दूतं देव्या महासुरम् ॥

इति चेति च वक्तव्या सा गत्वा वचवान्मम ।
यथा चाभ्येति संप्रीत्या तथा कार्यं त्वयानघ ॥

स तत्र गत्वा यत्रास्ते शैलोद्देशेति शोभने ।
तां च देवीं ततः प्राह श्लक्ष्णं मधुरया गिरा ।

दूत उवाच –

देवि दैत्येश्वरश्शुंभः त्रैलोक्यपरमेश्वरः ।
दूतोऽहं प्रेषितस्तेन त्वत्सकाश मिहागतः ॥

अव्याहताज्ञः सर्वासु यस्सदा देवयोनिषु ।
निर्जिताखिलदैत्यारिः स यदाह श्रुणुष्व तत् ॥

मम त्रैलोक्य मखिलं मम देवा वशानुगाः ।
यज्ञभागानहं सर्वानुपाश्नामि पृथक् पृथक् ॥

त्रैलोक्ये वररत्नानि मम वश्यान्यशेषतः ।
तथैव गजरत्नं च हृतं देवेन्द्रवाहनम् ॥

क्षीरोदमदनोद्भूत मश्वरत्नं ममामरैः ।
उच्चैश्श्रवस संज्ञं तत्प्रणिपत्य समर्पितम् ॥

यानि चान्यानि देवेषु गन्धर्वेषूरगेषु च ।
रत्नभूतानि भूतानि तानि मय्येव शोभने ॥

स्त्रीरत्नभूतां त्वां देवि लोके मन्यामहे वयम् ।
सा त्वमस्मानुपागछ यतो रत्नभुजो वयम् ॥

मां वा ममानुजं वापि निशुंभमुरुविक्रमम् ।
भज त्वं चञ्चलापाङ्गि रत्नभूतासि वै यतः ॥

परनैश्वर्य मतुलं प्राप्स्यसे मत्परिग्रहात् ।
एतद्बुद्ध्या समालोच्य मत्परिग्रहतां व्रज ॥

ऋषिरुवाच —

इत्युक्ता सा तदा देवी गंभीरान्तस्मिता जगौ ॥
दुर्गा भगवती भद्रा ययेदं धार्यते जगत् ।

देव्युवाच –

सत्यमुक्तं त्वया नात्र मिथ्या किंचित् त्वयोदितम् ।
त्रैलोक्याधिपतिः शुंभो निशुंभश्चापि तादृशः ॥

किं त्वत्र यत्प्रतिज्ञातं मिथ्या तत्क्रियते कथम् ।
श्रूयता मल्पबुद्धित्वात् प्रतिज्ञा या कृता पुरा ॥

यो मां जयति संग्रामे यो मे दर्पं व्यपोहति ।
यो मे प्रतिबलो लोके स मे भर्ता भविष्यति ॥

तदागच्छतु शुंभोत्र निशुंभो वा महासुरः ।
मां जित्वा किंचिरेणात्र पाणिं गृह्णातु मे लघु ॥

दूत उवाच –

अवलिप्तासि मैवं त्वं देवि ब्रूहि ममाग्रतः ।
त्रैलोक्ये कः पुमान् तिष्ठेदग्रे शुंभनिशुंभयोः ॥

अन्येषामपि दैत्यानां सर्वे देवानवै युधि ।
तिष्ठन्ति सम्मुखे देवि किंपुनः स्त्रीत्वमेकिका ॥

इन्द्राद्याः सकला देवाः तस्थुः येषां न संयुगे ।
शुम्भादीनां कथं तेषां स्त्रीप्रयास्यसि सम्मुखम् ॥

सा त्वं गच्छ मयैवोक्ता पार्श्वं शुंभनिशुंभयोः ।
केशाकर्षणनिर्धूतगौरवामागमिष्यासि ॥

देव्युवाच —

एव मे तद्बली शुंभो निशुंभश्चातिवीर्यवान् ।
किं करोमि प्रतिज्ञा मे यदनालोचिता पुरा ।।

स त्वं गच्छ मयोक्तं ते यदेतत्सर्वमादृतः ।
तदाचक्ष्वाऽसुरेन्द्राय स च युक्तं करोतु यत् ।।

।। इति श्रीमार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये देव्या दूतसंवादो नाम पञ्चमोऽध्यायः ।।

उवाच ९ खण्डानि ६६ श्लोकाः ५४ एवं १२९ एव मादितः ३८८



## षष्ठोऽध्यायः

### — देवीकृतसबलधूम्रलोचनवधः —

ऋषिरुवाच —

इत्याकर्ण्य वचो देव्याः स दूतो मर्षपूरितः ।
समाचष्ट समागम्य दैत्यराजाय विस्तरात् ।।

तस्य दूतस्य तद्वाक्यमाकर्ण्याऽसुरराट् ततः ।
सक्रोधः प्राह दैत्यानां अधिपं धूम्रलोचनम् ।।

हे धूम्रलोचनाऽऽशु त्वं स्वसैन्यपरिवारितः ।
तामानय बलाद्दुष्टां केशाकर्षणविह्वलाम् ।।

तत्परित्राणदः कश्चित् यदि चोत्तिष्टते परः ।
स हन्तव्योऽमरोवापि यक्षो गन्धर्व एव वा ।

ऋषिरुवाच —

तेनाज्ञप्तः ततः शीघ्रं स दैत्यो धूम्रलोचनः ।
वृतः षष्टचा सहस्राणा मसुराणां द्रुतं ययौ ।।

स दृष्ट्वा तां ततो देवीं तुहिनाचलसंस्थिताम् ।
जगादोच्चैः प्रयाहीति पार्श्वं शुंभनिशुंभयोः ।।

न चेत् प्रीत्याद्य भवती मद्भर्तारमुपैष्यति ।।
ततो बलान्नयाम्येषकेशाकर्षणविह्वलाम् ।।

देव्युवाच —

दैत्येश्वरेण प्रहितो बलवान्बलसंवृतः ।
बलान्नयसि मामेवं ततः किं ते करोम्यहम् ।।

ऋषिरुवच —

इत्युक्तस्सोऽभ्यधावत्तामसुरो धूम्रलोचनः ।
हुङ्कारेणैव तं भस्मसाच्चकाराम्बिका ततः ।।

अथ क्रुद्धं महासैन्यमसुराणां तथाम्बिका ।
ववर्ष सायकैस्तीक्ष्णैस्तथा शक्तिपरश्वधैः ।।

ततो धुतसटः कोपात्कृत्वा नादं सुभैरवम् ।
पपाताऽसुरसेनायां सिंहो देव्याश्च वाहनः ।।

कांश्चित्करप्रहारेण दैत्यानास्येन चापरान् ।
आक्रान्त्याचाधरेणान्यान्स जघान महासुरान् ।।

केषाञ्चित्पाटयामास नखैः कोष्ठानि केसरी ।
तथा तलप्रहारेण शिरांसि कृतवान् पृथक् ।।

[ 45 ]

विच्छिन्नबाहुशिरसः कृतास्तेन तथाऽपरे ।
पपौ च रुधिरं कोष्ठादन्येषां धुतकेशरः ॥

क्षणेन तद्बलं सर्वं क्षयं नीतं महात्मना ।
तेन केसरिणा देव्या वाहनेनातिकोपिना ॥

श्रुत्वा तमसुरं देव्या निहतं धूम्रलोचनम् ।
बलं च क्षयितं कृत्स्नं देवी केसरिणा ततः ॥

चुकोप दैत्याधिपतिश्शुम्भः प्रस्फुरिताऽधरः ।
आज्ञापयामास च तौ चण्डमुण्डौ महासुरौ ॥

हे चण्ड हे मुण्ड बलैर्बहुभिः परिवारिता ।
गच्छतं तत्र गत्वा च सा समानीयतां लघु ॥

केशेष्वाकृष्य बद्ध्वा वा य दिवस्संशयो युधि ।
तदाऽशेषायुधैस्सर्वैरसुरैर्विनिहन्यताम् ॥

तस्यां हतायां दुष्टायां सिंहे च विनिपातिते ।
शीघ्रमागम्यतां बद्ध्वा गृहीत्वा ता मथाम्बिकाम् ॥

॥ इति श्रीमार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमहात्म्ये
धूम्रलोचनवधो नाम षष्ठोऽध्यायः ॥

उवाच ४ अर्धश्लोकाः ० श्लोकाः २० एवं २४ एवमादितः ४१२ ।



## सप्तमोऽध्यायः

### — काळीकृतचण्डमुण्डखण्डनम् —

**ऋषिरुवाच —**

आज्ञप्तास्ते ततो दैत्याश्चण्डमुण्डपुरोगमाः ।
चतुरङ्गबलोपेता ययुरभ्युद्यतायुधाः ॥

ददृशुस्ते ततो देवीमीषद्धासां व्यवस्थिताम् ।
सिंहस्योपरि शैलेन्द्रशृङ्गे महति काञ्चने ॥

ते दृष्ट्वा तां समादातुमुद्यमं चक्रुरुद्यताः ।
आकृष्टचापासिधरास्तथान्ये तत्समीपगाः ॥

ततः कोपं चकारोच्चैरम्बिका तानरीन्प्रति ।
कोपेन चास्या वदनं मषीवर्णमभूत्तदा ॥

भ्रुकुटीकुटिलात्तस्या ललाटफलकाद्द्रुतम् ।
काळी कराळवदना विनिष्क्रान्तासिपाशिनी ॥

विचित्रखट्वाङ्गधरा नरमालाविभूषणा ।
द्वीपिचर्मपरीधाना शुष्कमांसातिभैरवा ॥

अतिविस्तारवदना जिह्वाललनभीषणा ।
निमग्नारक्तनयना नादापूरितदिङ्मुखा ॥

सा वेगेनाभिपतिता घातयन्ती महासुरान् ।
सैन्ये तत्र सुरारीणामभक्षयत तद्बलम् ॥

पार्ष्णिग्राहां कुशग्राही योधघण्टा समन्वितान् ।
समादायैकहस्तेन मुखे चिक्षेप वारणान् ॥

तदैव योधं तुरङ्गैः रथं सारथिना सह ।
निक्षिप्य वक्त्रे दशनैश्चर्वयंत्यतिभैरवम् ॥

एकं जग्राह केशेषु ग्रीवाया मथ चापरं ।
पादेनाक्रम्य चैवान्या नुरसान्यानपोथयत् ॥

तैर्मुक्तानि च शस्त्राणि महास्त्राणि तथाऽसुरैः ।
मुखेन जग्राह रुषा दशनैर्मथितान्यपि ॥

बलिनां तद्बलं सर्वमसुराणां दुरात्मनाम् ।
ममर्दाभक्षयच्चान्यानन्यांश्चाताडयत्तदा ॥

असिना निहताः केचित्केचित्खट्वाङ्गताडिताः ।
जग्मुर्विनाश मसुरा दन्ताग्राभिहतास्तथा ॥

क्षणेन तद्बलं सर्वमसुराणां निपातितम् ।
दृष्ट्वा चण्डोभिदुद्राव तां काळीमतिभीषणाम् ॥

शरवर्षैः महाभीमैः भीमाक्षीं तां महासुरः ।
छादयामास चक्रैश्च मुण्डक्षिप्तैः सहस्रशः ॥

तानि चक्राण्यनेकानि विशमानानि तन्मुखम् ।
बभुर्यथार्कबिम्बानि सुबहूनि घनोदरम् ॥

ततो जहासातिरुषा भीमा भैरवनादिनी ।
काळी कराला वक्त्रान्तः दुर्दर्शदशनोज्वला ॥

उत्थाय च महासिंहाद्देवी चण्डमधावत ।
गृहीत्वा चास्य केशेषु शिरस्तेनासिनाच्छिनत् ॥

अथ मुण्डोभ्यधावत्तां दृष्ट्वा चण्डं निपातितम् ।
तमप्यपातयद्भूमौ सा खड्गाभिहतं रुषा ॥

हतशेषं ततः सैन्यं दृष्ट्वा चण्डं निपातितम् ।
मुण्डं च सुमहावीर्यं दिशो भेजे भयातुरम् ॥

शिरश्चण्डस्य काळी च गृहीत्वा मुण्डमेव च ।
प्राह प्रचण्डाट्टहासमिश्रमभ्येत्य चण्डिकाम् ॥

मया तवात्रोपहृतौ चण्डमुण्डौ महापशू ।
युद्धयज्ञे स्वयं शुंभं निशुंभं च हनिष्यसि ॥

ऋषिरुवाच —

तावानीतौ ततो दृष्ट्वा चण्डमुण्डौ महासुरौ ।
उवाच काळीं कळ्याणी ललितं चण्डिका वचः ॥

यस्माच्चण्डं च मुण्डं च गृहीत्वा त्वमुपागता ।
चामुण्डेति ततो लोके ख्याता देवी भविष्यसि ॥

॥ इति मार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये
चण्डमुण्डवधो नाम सप्तमोऽध्यायः ॥

उवाच १ अर्धश्लोकाः ० श्लोकाः २५ एवं २७ एवमादितः ४३९ ।



## अष्टमोऽध्यायः

### — शुम्भनिशुम्भसङ्गरसंरंभो मातृकाविर्भावश्च —

ऋषिरुवाच —

चण्डे च निहते दैत्ये मुण्डे च विनिपातिते ।
बहुळेषु च सैन्येषु क्षयितेष्वसुरेश्वरः ॥

ततः कोपपराधीनचेताश्शुम्भः प्रतापवान् ।
उद्योगं सर्वसैन्यानां दैत्यानामादिदेश ह ॥

अद्य सर्वबलैर्दैत्याष्षडशीतिरुदायुधाः ।
कम्बूनां चतुराशीतिर्निर्यान्तु स्वबलैर्वृताः ॥

कोटिवीर्याणि पञ्चाशदसुराणां कुलानि वै ।
शतं कुलानि धूम्राणां निर्गच्छन्तु ममाज्ञया ॥

कालकादौ हृदा मौर्याः कालकेया स्तथाऽसुराः ।
युद्धाय सज्जा निर्यान्तु आज्ञया त्वरिता मम ॥

इत्याज्ञाप्यासुरपतिश्शुम्भो भैरवशासनः ।
निर्जगाम महासैन्यसहस्रैर्बहुभिर्वृतः ॥

आयान्तं चण्डिका दृष्ट्वा तत्सैन्यमतिभीषणम् ।
ज्यास्वनैः पूरयामास धरणी गगनान्तरम् ॥

ततस्सिंहो महानादमतीव कृतवान्नृप ।
घण्टास्वनेनुतन्नादमम्बिका चोपबृंहयत् ॥

धनुर्ज्यासिंहघण्टानां नादापूरितदिङ्मुखा ।
निनादैर्भीषणैः काळी जिग्ये विस्तारितानना ॥

तन्निनादमुपश्रुत्य दैत्यसैन्यश्चतुर्दिशम् ।
देवी सिंहस्तथा काळी सरोषैः परिवारिताः ॥

एतस्मिन्नन्तरे भूप विनाशाय सुरद्विषाम् ।
भवायामरसिंहानामतिवीर्यबलान्विताः ॥

ब्रह्मेशगुहविष्णूनां तथेन्द्रस्य च शक्तयः ।
शरीरेभ्यो विनिष्क्रम्य तद्रूपैश्चण्डिकां ययुः ॥

यस्य देवस्य यद्रूपं यथा भूषणवाहनम् ।
तद्वदेव हि तच्छक्तिरसुरान्योद्धुमाययौ ॥

हंसयुक्तविमानाग्रे साक्षसूत्रकमण्डलुः ।
आयाता ब्रह्मणश्शक्तिर्ब्रह्माणी साभिधीयते ॥

माहेश्वरी वृषारूढा त्रिशूलवरधारिणी ।
महाहिवलया प्राप्ता चन्द्ररेखा विभूषणा ॥

कौमारी शक्तिहस्ता च मयूरवरवाहना ।
योद्धुमभ्याययौ दैत्यानम्बिका गुहरूपिणी ॥

तथैव वैष्णवी शक्तिर्गरुडोपरि संस्थिता ।
शङ्खचक्रगदाशार्ङ्ग खड्गहस्ताभ्युपाययौ ॥

यज्ञवराहमतुलं रूपं या बिभ्रतो हरेः ।
शक्तिस्साप्याययौ तत्र वाराहीं बिभ्रती तनुम् ॥

नारसिंही नृसिंहस्य बिभ्रती सदृशं वपुः ।
प्राप्ता तत्र सटाक्षेपक्षिप्तनक्षत्रसंहतिः ॥

वज्रहस्ता तथैवैन्द्री गजराजोपरि स्थिता ।
प्राप्ता सहस्रनयना यथा शक्रस्तथैव सा ॥

ततः परिवृतस्ताभिरीशानो देवशक्तिभिः ।
हन्यन्तामसुराश्शीघ्रं मम प्रीत्याऽऽह चण्डिकाम् ॥

ततो देवीशरीरात्तु विनिष्क्रान्ताऽतिभीषणा ।
चण्डिकाशक्तिरत्युग्रा शिवा शतनिनादिनी ॥

सा चाह धूम्रजटिलमीशानपराजिता ।
दूत त्वं गच्छ भगवान्पार्श्वं शुम्भनिशुम्भयोः ॥

ब्रूहि शुम्भं निशुम्भं च दानवावतिगर्वितौ ।
ये चान्ये दानवास्तत्र युद्धाय समुपस्थिताः ॥

त्रैलोक्यमिन्द्रो लभतां देवाः सन्तु हविर्भुजः ।
यूयं प्रयात पातालं यदि जीवितुमिच्छथ ॥

बलावलेपादथचेद्भवन्तो युद्धकांक्षिणः ।
तथाऽऽगच्छत तृप्यन्तु मच्छिवाः पिशितेन वः ॥

यतो नियुक्तो दैत्येन तया देव्या शिवस्स्वयम् ।
शिवदूतीति लोकेऽस्मिन् ततः सा ख्यातिमागता ॥

तेऽपि श्रुत्वा वचो देव्याः शर्वाख्या तं महासुराः ।
आमर्षापूरिता जग्मुः यत्र कात्यायनी स्थिता ॥

ततः प्रथमे वाग्रे शरशक्त्यृष्टिवृष्टिभिः ।
ववर्षु रुद्धतामर्षा तां देवी ममराऽरयः ॥

सा च तान् प्रहितान् बाणान् शूलशक्तिपरश्वधान् ।
चिच्छेद लीलयाध्मातधनुर्मुक्तै र्महेषुभिः ॥

तस्याऽग्रतस्तथा काळी शूलपातविदारितान् ।
खट्वाङ्गपोथितां श्चारीन् कुर्वन्ती व्यचरत्तदा ॥

कमण्डलुजलाक्षेपहतवीर्यान्हतौजसः ।
ब्रह्माणी चाकरोच्छत्रून्येन येन स्म धावति ॥

माहेश्वरी त्रिशूलेन तथा चक्रेण वैष्णवी ।
दैत्यान्जघान कौमारी तथा शक्त्यातिकोपना ॥

ऐन्द्री कुलिशपातेन शतशो दैत्यदानवाः ।
पेतुर्विदारिताः पृथ्व्यां रुधिरौघप्रवर्षिणः ॥

तुण्डप्रहारविध्वस्ता द्रंष्ट्राग्रक्षतवक्षसः ।
वाराहमूर्त्यान्यपतं श्चक्रेण च विदारिताः ॥

नखैर्विदारिताश्चान्यान् भक्षयन्ती महासुरान् ।
नारसिंही चचाराजौ नादा पूर्ण दिगम्बरा ॥

चण्डाट्टहासै रसुराः शिवदूत्यभिदूषिताः ।
पेतुः पृथिव्यां पतितां स्तांश्च खादाथ सा तदा ॥

इति मातृगणं क्रुद्धं मर्दयन्तं महासुरान् ।
दृष्टवाभ्युपायैर्विविधैः नेशुर्देवारिसैनिकाः ॥

पलायनपरान्दृष्ट्वा दैत्यान्मातृगणार्दितान् ।
योद्धुमभ्याययौ क्रुद्धो रक्तबीजो महासुरः ॥

रक्तबिन्दुर्यदा भूमौ पतत्यस्य शरीरतः ।
समुत्पतति मेदिन्याः तत्प्रमाणस्तदाऽसुरः ॥

युयुधे स गदापाणि रिन्द्रशक्त्या महासुरः ।
ततश्चैन्द्री स्ववज्रेण रक्तबीज मताडयत् ।

कुलिशेनाहतस्याशु बहु सुस्राव शोणितम् ॥
समुत्तस्थुः ततो योधाः तद्रूपाः तत्पराक्रमाः ॥

यावन्तः पतितास्तस्य शरीराद्रक्तबिन्दवः ।
तावन्तः पुरुषा जाताः तद्वीर्यबलविक्रमाः ॥

तेचापि युयुधुः तत्र पुरुषा रक्तसंभवाः ।
समं मातृभिरत्युग्रशस्त्रपातातिभीषणम् ॥

पुनश्च वज्रपातेन क्षतमस्य शिरो यदा ।
ववाह रक्तं पुरुषास्ततो जाता स्सहस्रशः ॥

वैष्णवी समरे चैनं चक्रेणाभिजघान ह ।
गदाया ताडयामास ऐन्द्री तमसुरेश्वरम् ॥

वैष्णवी चक्रभिन्नस्य रुधिरस्रावसंभवैः ।
सहस्रशो जगद्व्याप्तं तत्प्रमाणै र्महासुरैः ॥

शक्त्या जघान कौमारी वाराही च तथाऽसिना ।
माहेश्वरी त्रिशूलेन रक्तबीजं महासुरम् ॥

स चापि गदया दैत्यस्सर्वा एवाहनत् पृथक् ।
मातॄः कोपसमाविष्टो रक्तबीजो महासुरः ॥

तस्या हतस्य बहुधा शक्तिशूलादिभिर्भुवि ।
पपात यो वै रक्तौघस्तेनासञ्छतशोऽसुराः ॥

तैश्चासुराऽसृक्संभूतै रसुरैः सकलं जगत् ।
व्याप्तमासीत् ततो देवा भयमाजग्मु रुत्तमम् ॥

तान्विषण्णान्सुरान् दृष्ट्वा चण्डिका प्राह सत्वरा ।
उवाच काळीं चामुण्डे विस्तीर्णं वदनं कुरु ॥

मच्छस्त्रपातनं भूतान्रक्तबिन्दून्महासुरान् ।
रक्तबिन्दोः प्रतीच्छत्वं वक्त्रेणाऽनेन वेगिना ॥

भक्षयन्ती चर रणे तदुत्पन्नान्महासुरान् ।
एव मेष क्षयं दैत्यः क्षीणरक्तो गमिष्यति ॥

भक्ष्यमाणाः त्वया चोग्रा न चोत्पत्स्यन्ति चापरे ।
इत्युक्त्वा तां ततो देवी शूलेनाऽभिजघान तम् ।

मुखेन काळी जगृहे रक्तबीजस्य शोणितम् ।
ततो गत्वा जघानाथ गदऽया तत्र चण्डिकाम् ॥

न चास्यावेदनां चक्रे गदापातोत्पलिका मपि ।
तस्या हतस्य देहात्तु बहु सुस्राव शोणितम् ॥

यतस्ततस्तद्वक्त्रेण चामुण्डा संप्रतीच्छति ।
मुखे समुद्गता योस्या रक्तपातान्महासुराः ॥

तांश्च खादाऽथ चामुण्डा पपौ तस्य च शोणितम् ।
देवी शूलेन वज्रेण बाणैरसिभि ऋष्टिभिः ।।

जघान रक्तबीजं तं चामुण्डा पीतशोणितम् ।
स पपात महीपृष्ठे शस्त्रसंघसमाहतः ।।

नीरक्तश्च महीपाल रक्तबीजो महाऽसुरः ।
ततस्सोहर्षमतुल मवापुस्त्रिदशा नृप ।।

हते मातृगणस्तस्मिन् ननर्ताऽसृङ्मदोद्धतः ।।

।। इति श्रीमार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमहात्म्ये
रक्तबीजवधोनामाऽष्टमोध्यायः ।।

उवाच १ अर्धश्लोकाः १ श्लोकाः ६१ एवं ६३ एवमादितः ५०२



## नवमोऽध्यायः

### – शांभवीकृत निशुंभवधः –

राजोवाच —

विचित्रमिदमाख्यातं भगवन्भगवता मम ।
देव्याश्चरितमाहात्म्यं रक्तबोजवधाश्रितम् ।।

भूयश्चेच्छाम्यहं श्रोतुं रक्तबीजेन पातिते ।
चकार शुंभो यत्कर्म विशुंभश्चातिकोपनः ।।

ऋषिरुवाच —

चकार कोपमतुलं रक्तबीजे निपातिते ।
शुम्भासुरो निशुम्भश्च हतेष्वन्येषु चाहवे ।।

हन्यमानं महासैन्यं विलोक्यामर्षमुद्वहन् ।
अभ्यधावन्निशुम्भोऽथ मुख्यया सुरसेनया ॥

तस्याग्रतस्तथा पृष्ठे पार्श्वयोश्च महासुराः ।
सन्दष्टौष्टपुटाः क्रुद्धा हन्तुं देवीमुपाययुः ॥

आजगाम महावीर्यश्शुम्भोपि स्वबलैर्वृतः ।
निहन्तुं चण्डिकां कोपात्कृत्वा युद्धं तु मातृभिः ।

ततो युद्धमतीवासीद्देव्याश्शुम्भनिशुम्भयोः ।
शरवर्षमतीवोग्रं मेघयोरिव वर्षतोः ॥

चिच्छेदास्ताञ्चरांस्ताभ्यां चण्डिकास्वशरोत्करैः ।
ताडयामास चाङ्गेषु शस्त्रौघैरसुरेश्वरौ ॥

निशुम्भो निशितं खड्गं चर्म चादाय सुप्रभम् ।
अताडयन्मूर्ध्नि सिंहं देव्या वाहनमुत्तमम् ॥

ताडिते वाहने देवी क्षुरप्रेणासिमुत्तमम् ।
निशुम्भस्याशु चिच्छेद चर्म चाप्यष्टचन्द्रकम् ॥

छिन्ने चर्मणि खड्गे च शक्तिं चिक्षेप सोऽसुरः ।
तामप्यस्य द्विधा चक्रे चक्रेणाभिमुखागताम् ॥

कोपाध्मातो निशुम्भोऽथ शूलं जग्राह दानवः ।
आयान्तं मुष्टिपातेन देवी तच्चाप्यचूर्णयत् ॥

आविध्याथ गदां सोपि चिक्षेप चण्डिकां प्रति ।
सापि देव्या त्रिशूलेन भिन्ना भस्मत्वमागता ॥

ततः परशुहस्तं तमायांतं दैत्यपुङ्गवम् ।
आहत्य देवी बाणौघैरपातयत भूतले ॥

तस्मिन्निपतिते भूमौ निशुंभे भीमविक्रमे ।
भ्रातर्यतीवसंक्रुद्धः प्रययौ हन्तुमम्बिकाम् ॥

स रथस्थस्तथात्युच्चैर्गृहीतपरमायुधैः ।
भुजैरष्टाभिरतुलैर्व्याप्याशेषं बभौ नभः ॥

तमायान्तं समालोक्य देवी शंखमवादयत् ।
ज्याशब्दं चापि धनुषः चकारातीव दुस्सहम् ॥

पूरयामास ककुभो निजघंटास्वनेन च ।
समस्तदैत्यसैन्यानां तेजोवधविधायिना ॥

ततः सिंहो महानादैः त्याजितेभमहामदैः ।
पूरयामास गगनं गां तथैव दिशो दश ॥

ततः काळी समुत्पत्य गगनं क्ष्मामताडयत् ।
कराभ्यां तन्निनादेन प्राक्स्वनास्ते तिरोहिताः ॥

अट्टाट्टहासमशिवं शिवदूती चकार ह ।
सुरशब्दैः असुरास्त्रेसुः शुंभः कोपं परं ययौ ॥

दुरात्मन् तिष्ठतिष्ठेति व्याजहारांबिका यदा ।
तदा जयेत्यभिहितं देवैराकाशसंस्थितैः ॥

शुंभे नागत्य या शक्तिः मुक्ता ज्वालातिभीषणा ।
आयान्ती वह्निकूटाभा सा निरस्ता महोल्कया ॥

सिंहनादेन शुंभस्य व्याप्तं लोकत्रयान्तरम् ।
विर्घातनिस्वनो घोरो जितवा नवनीपते ॥

शुंभमुक्तात शरान्देवी शुंभस्तत्प्रहितान् शरान् ।
चिच्छेद स्वशरैरुग्रैः शतशोधसहस्रशः ॥

ततः सा चण्डिका क्रुद्धा शूलेनाभिजघान तम् ।
सतदाभिहतो भूमौ मूर्छितो निपपातह ॥

ततो निशुंभः संप्राप्य चेतनामात्तकार्मुकः ।
आजघान उरैर्देवीं काळीं केसरिणं तदा ॥

पुनश्च कृत्वा बाहूनां अयुतं दनुजेश्वरः ।
चक्रायुतेन दितिजः छादयामास चण्डिकाम् ॥

ततो भगवती क्रुद्धा दुर्गा दुर्गार्तिनाशिनी ।
चिच्छेद तानि चक्रानि स्वशरैः सायकांश्च ताव् ॥

ततो निशुंभो वेगेन गदामादाय चण्डिकाम् ।
अभ्यधावत वै हन्तुं दैत्यसेनासमावृतः ॥

तस्यापतत एवाशु गदां चिच्छेद चण्डिका ।
खड्गेन शितधारेण स च शूलं समाददे ॥

शूलहस्तं तमायन्तं निशुंभममरार्दनम् ॥
हृदि विव्याथ शूलेन वेगाविद्धेन चण्डिका ।

भिन्नस्य तस्य शूलेन हृदयान्निस्सृतो परः ।
महाबलो महावीर्यस्थिष्ठेति पुरुषो वदन् ॥

तस्य निष्क्रामतो देवी प्रहस्य स्वनवत्ततः ।
शिरश्चिच्छेद खड्गेन ततो साऽपतद्भुवि ॥

ततः सिंहश्च खादोग्रदंष्ट्राक्षुण्णशिरोधरान् ।
असुरांस्तांस्तथा काळी शिवदूती तथाऽपरान् ॥

कौमारी शक्तिनिर्भिन्नाः केचिन्नेशुर्महासुराः ।
ब्रह्माणी मन्त्रपूतेन तोयेनान्ये निराकृताः ॥

माहेश्वरी त्रिशूलेन भिन्ना पेतुस्तथाऽपरे ।
वाराही तुण्डघातेन केचिच्चूर्णीकृता भुवि ॥

खण्डं खण्डं च चक्रेण वैष्णव्या दानवाः कृताः ।
वज्रेण चैन्द्री हस्ताग्रविमुक्तेन तथाऽपरे ॥

केचिद्विनेशुरसुराः केचिन्नष्टा महाऽहवात् ।
भक्षिताश्चापरे काळी शिवदूती मृगाधिपैः ॥

॥ इति मार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये
निशुंभवधो नाम नवमोऽध्यायः ॥

उवाच १ अर्धश्लोकाः ० श्लोकाः ३९ एवं १४ एवमादितः ५४३ ।



## दशमोऽध्यायः

### — शांभवीकृतशुंभवधः —

ऋषिरुवाच —

निशुंभं निहतं दृष्ट्वा भ्रातरं प्राणसम्मितं ।
हन्यमानं बलं चैव शुंभः क्रुद्धोऽब्रवीद्वचः ॥

बलावलेपदुष्टे त्वं मा दुर्गे गर्वमावह ।
अन्यासां बलमाश्रित्य युध्यसे चातिमानिनी ॥

देव्युवाच —

ऐकैवाहं जगत्यत्र द्वितीया का ममाऽपरा ।
पश्यैता दुष्ट मय्येव विशन्त्यो मद्विभूतयः ॥

ततः समस्तास्ता देव्यो ब्रह्माणी प्रमुखालयम् ।
तस्या देव्या स्तनौ जग्मुरेकैवासीत्तदांबिका ॥

देव्युवाच —

अहं विभूत्या बहुभिः रूपैर्यदा स्थिता ।
तत्संहृतं मयैकैव तिष्ठाम्याजौ स्थिरो भव ॥

ऋषिरुवाच –

ततः प्रववृते युद्धं देव्या श्शुंभस्य चोभयोः ।
पश्यतां सर्वदेवानां असुराणां च दारुणम् ॥

शरवर्षैः शितैः शस्त्रैः तथाश्चैव दारुणैः ।
ततो युद्धमभूद्भूयः सर्वलोकभयङ्करम् ॥

दिव्यान्यस्त्राणि शतशो मुमुचो यान्यथांबिका ।
बभंज तानि दैत्येन्द्रः तत्प्रतीघातकर्तृभिः ॥

मुक्तानि तेन चास्त्राणि दिव्यानि परमेश्वरी ।
बभंज लीलयैवोग्रहुङ्कारोच्चरणादिभिः ।।

ततः शरशतैः देवी माच्छादयत सोऽसुरः ।
सापि तत्कुपिता देवी धनुश्चिच्छेद चेषुभिः ।।

छिन्ने धनुषि दैत्येन्द्रः तथा शक्तिमथाऽऽददे ।।
चिच्छेद देवी चक्रेण तामप्यस्य करे स्थिताम् ।

ततः खड्गमुपादाय शतचन्द्रं च भानुमत् ।।
अभ्यधावत्तदा देवीं दैत्यानामधिपेश्वरः ।

तस्याऽऽपततएवाशु खड्गं चिच्छेद चण्डिका ।।
धनुर्मुक्तैः शितैः बाणैः चर्मचार्ककरामलम् ।।

हताश्वः स तदा दैत्यः छिन्नधन्वा विसारथिः ।
जग्राह मुद्गरं घोरमंबिका निधनोद्यतः ।।

चिच्छेदापततः तस्य मुद्गरं निशितैः शरैः ।
तथाऽपि सोभ्यधावत्तां मुष्टिमुद्यम्य वेगवान् ।।

स मुष्टिं पातयामास हृदये दैत्यपुङ्गवः ।
देव्यास्तं चापि सा देवी तलेनोरस्यताडयत् ।।

तलप्रहाराभिहतो निपपात महीतले ।
स दैत्यराजः सहसा पुनरेव तथोत्थितः ।।

उत्पत्य च प्रगृह्योच्चैः देवीं गगनमास्थितः ।
तत्रापि सा निराधारा युयुधे तेन चण्डिका ।।

नियुद्धं खे तदा दैत्यः चण्डिका च परस्परम् ।
चक्रतुः प्रथमं सिद्धमुनिविस्मयकारकम् ॥

ततो नियुद्धं सुचिरं कृत्वा तेनांबिका सह ।
उत्पात्य भ्रामयामास चिक्षेप धरणीतले ॥

स क्षिप्तो धरणीं प्राप्य मुष्टिमुद्यम्य वेगतः ।
अभ्यधावत दुष्टात्मा चण्डिकानिधनेच्छया ॥

तमायान्तं ततो देवी सर्वदैत्यजनेश्वरम् ।
जगत्यां पातयामास भित्वा शूलेन वक्षसि ॥

स गतासुः पपातोर्व्यां देवी शूलाग्रविक्षतः ।
चालयन् सकलां पृथ्वीं साब्धिद्वीपां सपर्वताम् ॥

ततः प्रसन्नमखिलं हते तस्मिन्दुरात्मनि ।
जगत्स्वास्थ्यमतीवाप निर्मलं चाभवन्नभः ॥

उत्पात मेघाः सोल्का ये प्रागासंस्ते शमं ययुः ।
सरितो मार्गवाहिन्यः तथासंस्तत्र पातिते ॥

ततो देवगणाः सर्वे हर्षनिर्भरमानसाः ।
बभूवुः निहते तस्मिन्गन्धर्वा ललितं जगुः ॥

अवादयंस्तथैवान्ये ननृतुश्चाप्सरोगणाः ।
ववुः पुण्याः तथा वाताः सुप्रभोऽभूद्दिवाकरः ॥

जज्वलुश्चाग्नयः शान्ता शान्ता दिग्जनितस्वनाः ।

॥ इति श्रीमार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमहात्म्ये
शुंभवधो नाम दशमोऽध्यायः ॥

उवाच ४ अर्धश्लोकाः १ श्लोकाः २७ एवं ३२ एवमादितः ५७५



## एकादशोऽध्याय:

### — देवकृतनारायणीस्तुति: —

ऋषिरुवाच —

देव्या हते तत्र महासुरेन्द्रे
सेन्द्राः सुरावह्निपुरोगमास्ताम् ।
कात्यायनीं तुष्टुपुरिष्टलाभात्
विकासिवक्त्राब्जविकासिताशाः ॥

देवि प्रपन्वार्तिहरे प्रसीद
प्रसीद मातर्जगतोखिलस्य ।
प्रसीद विश्वेश्वरि पाहि विश्वम्
त्वमीश्वरी देवी चराचरस्य ॥

आधारभूता जगतस्त्वमेका
महीस्वरूपेण यत स्थितासि ।
अपां स्वरूपस्थितया त्वयैव
दाप्यायते कृत्स्नमलंघ्यवीर्ये ॥

त्वं वैष्णवी शक्ति रवन्तवीर्या
विश्वस्य बीजं परमासि माया ।
सम्मोहितं देवि समस्तमेतत्
त्वं वै प्रसन्ना भुवि मुक्तिहेतुः ॥

विद्याः समास्तास्तव देवि भेदाः
स्त्रियः समस्ताः सकला जगत्सु ।
त्वयैकया पूरितमंबयैतत्
का ते स्तुतिः स्तव्यपरापरोक्तिः ॥

सर्वभूता यदा देवि स्वर्गमुक्तिप्रदायिनी ।
त्वं स्तुता स्तुतये का वा भवन्तु परमोक्तयः ॥

सर्वस्य बुद्धिरूपेण जनस्य हृदि संस्थि ते ।
स्वर्गापवर्गदे देवि नारायणि नमोस्तु ते ॥

कळा काष्ठादिरूपेण परिणामप्रदायिनि ।
विश्वस्योपरतौ शक्ते नारायणि नमोस्तु ते ॥

सर्वमंगळमाङ्गल्ये शिवे सर्वार्थसाधके ।
शरण्ये त्रियम्बके देवि नारायणि नमोस्तु ते ॥

सृष्टिस्थितिविनाशानां शक्तिभूते सनातनि ।
गुणाश्रये गुणमये नारायणि नमोस्तु ते ॥

शरणागतदीनार्तपरित्राणपरायणे ।
सर्वस्यार्तिहरे देवि नारायणि नमोस्तु ते ॥

हंसयुक्तविमानस्थे ब्रह्मणी रूपधारिणि ।
कौशाम्भः क्षरिके देवि नारायणि नमोस्तु ते ॥

त्रिशूलचन्द्राहि धरे महावृषभवाहिनि ।
माहेश्वरीस्वरूपेण नारायणि नमोस्तु ते ॥

मयूरकुक्कुटवृते महाशक्तिधरेऽनघे ।
कौमारीरूपसंस्थाने नारायणि नमोस्तु ते ॥

शंखचक्रगदाशार्ङ्गं गृहीतपरमायुधे ।
प्रसीद वैष्णवीरूपे नारायणि नमोस्तु ते ॥

गृहीतोग्रमहाचक्रे दंष्ट्रोद्धृतवसुंधरे ।
वाराहरूपिणि शिवे नारायणि नमोस्तु ते ॥

नृसिंहरूपिणोग्रेण हन्तुं दैत्यान्कृतोद्यमे ।
त्रैलोक्यत्राणसहिते नारायणि नमोस्तु ते ॥

किरीटिनि महावज्रे सहस्रनयनोज्वले ।
वृत्रप्राणहरे चैन्द्रि नारायणि नमोस्तु ते ॥

शिवदूतीस्वरूपेण हतदैत्यमहाबले ।
घोररूपे महारावे नारायणि नमोस्तु ते ॥

दंष्ट्राकरालवदने शिरोमालाविभूषणे ।
चामुण्डे चण्डमथने नारायणि नमोस्तु ते ॥

लक्ष्मि लज्जे महाविद्ये श्रद्धे पुष्टे स्वधे ध्रुवे ।
महारात्रि महावीर्ये नारायणि नमोस्तुते ॥

मेधे सरस्वति वरे भूति बाभ्रवि तामसि ।
नियते त्वं प्रसीदेशे नारायणि नमोस्तु ते ॥

सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते ।
भयेभ्यस्त्राहि नो देवि दुर्गे देवि नमोस्तु ते ॥

एतत्ते वदनं सौम्यं लोचनत्रयभूषितम् ।
पातु नः सर्वभूतेभ्यः कात्यायनि नमोस्तु ते ॥

ज्वालाकरालमत्युग्रमशेषासुरसूदनम् ।
त्रिशूलं पातु नो भीतेः भद्रकालि नमोस्तु ते ॥

हिनस्ति दैत्यतेजांसि स्वनेनाऽपूर्य या जगत् ।
सा घंटा पातु नो देवि पापेभ्यो न स्सुतानिव ॥

असुरासृक्वसापंकचर्चितस्ते करोज्वलः ।
शुभाय खड्गो भवतु चण्डिके त्वां नता वयम् ॥

रोगानशेषानपहंसि तुष्टा
पुष्णासि कामान् सकलानभीष्टान् ।
त्वाश्रितानां न विपन्नराणाम्
त्वमाश्रिताह्याश्रयतां प्रयान्ति ॥

एतत्कृतं यत्कदनं त्वयाद्य
धर्मद्विषां देवि महासुराणाम् ।
रूपैरनेकैः बहुधात्ममूर्तिम्
कृत्वाम्बिके तत्प्रकरोति काऽन्या ॥

विद्यासु शास्त्रेषु विवेकदीपे
ष्वाद्येषु वाक्येषु च का त्वदन्या ।
ममत्वगर्तेति महान्धकारे
विभ्रामयत्येतदतीव विश्वम् ॥

रक्षांसि यत्रोग्रविषाश्च नागा
यत्रारयो दस्यु बलानि यत्र ।
दावानलो यत्र तथाब्धिमध्ये
तत्र स्थिता त्वं परिपासि विश्वम् ॥

विश्वेश्वरी त्वं परिपासि विश्वम्
विश्वात्मिका धारयसीति विश्वम् ।
विश्वेशवन्द्या भवती भवन्ति
विश्वाश्रया ये त्वयि भक्तिनम्राः ॥

देवि प्रसीद परिपालय नोऽरिभीते
नित्यं यथा सुरवधादधुनैव सद्यः ।
पापानि सर्वजगतां प्रशमं नयाशु
उत्पात पाकजनितांश्च महोपसर्गान् ॥

प्रणतानां प्रसीद त्वं देवि विश्वार्तिहारिणि ।
त्रैलोक्यवासिनामीड्ये लोकानां वरदा भव ॥

देव्युवाच –

वरदाऽहं सुरगणा वरं यन्मनसेच्छथ ।
तं वृणुध्वं प्रयच्छामि जगतामुपकारकम् ॥

देवा ऊचुः—

सर्वबाधाप्रशमनं त्रैलोक्यस्याखिलेश्वरि ।
एवमेव त्वया कार्यं मस्मद्वैरिविनाशनम् ॥

– देवेभ्यो देवीकथितस्वीयभविष्यदवताराः –

देव्युवाच —

वैवस्वतेऽन्तरे प्राप्ते अष्टाविंशतितमे युगे
शुंभो निशुंभश्चैवान्या व्युत्पस्त्येते महासुरौ ॥

नन्दगोपगृहे जाता यशोदगर्भसंभवा ।
ततस्तौ नाशयिष्यामि विन्ध्याचलनिवासिनी ॥

पुनरप्यतिरौद्रेण रूपेण पृथिवीतले ।
अवतीर्य हनिष्यामि वै प्राचित्तांस्तु दानवान् ॥

भक्षयन्त्याश्च तानुग्रान्वै प्रचित्तान् महासुरान् ।
रक्तदन्ता भविष्यन्ति दाडिमीकुसुमोपमाः ॥

ततो मां देवताः स्वर्गे मर्त्यलोके च मानवाः ।
स्तुवन्तो व्याहरिष्यन्ति सततं रक्तदन्तिकाम् ॥

भूयश्च शतवार्षिक्या मानावृष्ट्यामनंभसि ।
मुनिभिः संस्तुता भूमौ संभविष्याम्ययोनिजा ॥

ततः शते सनेत्राणां निरीक्षिष्यामि यन्मुनीन् ।
कीर्तयिष्यन्ति मनुजाश्शताक्षीमिति मां ततः ॥

ततोहमखिलं लोकमात्मदेहसमुद्भवैः ।
भरिष्यामि सुराश्शाकैरावृष्टेः प्राणधारकैः ॥

शाकंभरीति विख्यातिं तदा यास्याम्यहं भुवि ।
तत्रैव च वधिष्यामि दुर्गमाख्यं महासुरम् ॥

दुर्गा देवीति विख्यातं तन्मे नाम भविष्यति ।
पुनश्चाहं यदा भीमं रूपं कृत्वा हिमाचले ॥

रक्षांसि भक्षयिष्यामि मुनीनां त्राणकारणात् ।
तदा मां मुनयः सर्वे तोष्यन्त्यानम्रमूर्तयः ॥

भीमादेवीति विख्यातं तन्मे नाम भविष्यति ।
यदारुणाख्यस्त्रैलोक्ये महाबाधां करिष्यति ॥

तदाहं भ्रामरं रूपं कृत्वा संख्येयषट्पदम् ।
त्रैलोक्यस्य हितार्थाय वधिष्यामि महासुरम् ॥

भ्रामरीति च मां लोकाः तदास्तोष्यन्ति सर्वतः ।
इत्थं यदा यदा बाधा दानवोत्था भविष्यति ॥

तदा तदाऽवतीर्याऽहं करिष्याम्यरिसंक्षयम् ।

॥ इति मार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये
नारायणीस्तुतिर्नामैकादशोऽध्यायः ॥

उवाच ४ अर्धश्लोकाः १ श्लोकाः ५० एवं ५५ एवमादितः ६३० ।



## द्वादशोऽध्यायः

### — सप्तशतीपठनफलश्रुतिः —

देव्युवाच —

एभिस्तवैश्च मां नित्यं स्तोष्यते यस्समाहितः ।
तस्याहं सकलां बाधां नाशयिष्याम्यसंशयम् ॥

मधुकैटभनाशं च महिषासुरघातनम् ।
कीर्तयिष्यन्ति ये तद्वद्वधं शुंभनिशुंभयोः ॥

अष्टम्यां च चतुर्दश्यां नवम्यां चैकचेतसः ।
श्रोष्यन्ति चैव ये भक्त्या मम माहात्म्यमुत्तमम् ॥

न तेषां दुष्कृतं किंचित् दुष्कृतोत्थानचापदः ।
भविष्यति न दारिद्र्य न चैवेष्टवियोजनम् ॥

शत्रुतो न भयं तस्य दस्युतो वा न राजतः ।
न शस्त्रानलतोयौघात्कदाचित् संभविष्यति ॥

तस्मान्ममैतन्माहात्म्यं पठितव्यं समाहितैः ।
श्रोतव्यं च सदा भक्त्या परं स्वस्त्ययनं महत् ॥

उपसर्गानशेषांस्तु महामारीसमुद्भवान् ।
तथा त्रिविधमुत्पातं माहात्म्यं शमयेन्मम ॥

यत्रैतत्पठ्यते सम्यङ् नित्यमायतने मम ।
सदा न तद्विमोक्ष्यामि सान्निध्यं तत्र मे स्थितम् ॥

बलिप्रदाने पूजायामग्निकार्ये महोत्सवे ।
सर्वं ममैतच्चरितं उच्चार्यं श्राव्यमेव च ॥

जानताऽजानता वापि बलिपूजां तथा कृताम् ।
प्रतीक्षिष्याम्यहं प्रीत्या वह्निहोमं तथा कृतम् ॥

शरत्काले महापूजा क्रियते या च वार्षिकी ।
तस्यां ममैतन्माहत्म्यं श्रुत्वा भक्तिसमन्वितः ॥

सर्वबाधाविनिर्मुक्तो धनधान्यसुतान्वितः ।
मनुष्यो मत्प्रसादेन भविष्यति न संशयः ॥

श्रुत्वा ममैतन्माहात्म्यं तथैवोत्पत्तयश्शुभाः ।
पराक्रमं च युद्धेषु जायते निर्भयः पुमान् ॥

रिपवः संक्षयं यान्ति कल्याणं चोपपद्यते ।
नन्दते च कुलं पुंसां माहात्म्यं मम श्रुण्वताम् ॥

शान्तिकर्मणि सर्वत्र तथा दुस्स्वप्नदर्शने ।
ग्रहपीडासु चोग्रासु माहात्म्यं शृणुयान्मम ॥

उपसर्गाः शमं यान्ति ग्रहपीडाश्च दारुणाः ।
दुस्वप्नं च नृभिर्दृष्टं सुस्वप्नमुपजायते ॥

बालग्रहाभिभूतानां बालानां शान्तिकारकम् ।
संघातभेदे च नृणां मैत्रीकरण मुत्तमम् ॥

दुर्वृत्ता नाम शेषाणां बालहानिकरं परम् ।
रक्षोभूतपिशाचानां पठनादेव नाशनम् ॥

सर्वं ममैतन्माहात्म्यं मम सन्निधिकारकम् ।
पशुपुष्पार्घ्यधूपैश्च गन्धदीपैस्तथोत्तमैः ॥

विप्राणां भोजनैर्होमैः प्रेक्षणीयैरहर्निशम् ।
अन्यैश्च विविधैर्भोगैः प्रदानैर्वत्सरेण या ॥

प्रीतिर्मे क्रियते सास्मिन् सकृदुच्चरिते श्रुते ।
श्रुतं हरति पापानि तथाऽऽरोग्यं प्रयच्छति ।

रक्षां करोति भूतेभ्यो जन्मनां कीर्तनं मम ।
युद्धेषु चरितं यन्मे दुष्टदैत्यनिबर्हणम् ॥

तस्मिञ्श्रुते वैरिकृतं भयं पुंसां न जायते ।
युष्माभिः स्तुतयो याश्च याश्च ब्रह्मर्षिभिः कृताः ॥

ब्रह्मणा च कृतास्तास्तु प्रयच्छन्ति शुभां मतिम् ।
अरण्ये प्रान्तरे वापि दावाग्निपरिवारितः ॥

दस्युभिर्वा वृतः शून्ये गृहीतो वाऽपि शत्रुभिः ।
सिंहव्याघ्रानुयातो वा वनेन वनहस्तिभिः ॥

राज्ञा क्रुद्धेन चाज्ञप्तो वध्यो बन्धगतोऽपि वा ।
आघूर्णितो वा वातेन स्थितः पोते महार्णवे ॥

पतत्सुचापि शस्त्रेषु संग्रामे भृशदारुणे ।
सर्वबाधासु घोरासु वेदनाभ्यर्दितोऽपि वा ॥

स्मरन्ममैतच्चरितं नरो मुच्येत सङ्कटात् ।
मम प्रभावात् सिंहाद्या दस्यवो वैरिणस्तथा ॥

दूरादेव पलायन्ते स्मरतश्चरितं मम ।

ऋषिरुवाच —

इत्युक्त्वा सा भगवती चण्डिका चण्डविक्रमा ॥

पश्यतामेव देवानां तत्रैवान्तरधीयत ।
तेऽपि देवा निरातङ्काः स्वाधिकारान्यथा पुरा ॥

यज्ञभागभुजस्सर्वे चक्रुः विनिहतारयः ।
दैत्याश्च देव्या निहते शुंभे देवरिपौ युधि ॥

जगद्विध्वंसके तस्मिन् महोग्रेऽतुलविक्रमे ।
निशुंभे च महावीर्ये शेषाः पातालमाययुः ॥

एवं भगवती देवी सा नित्याऽपि पुनः पुनः ।
संभूय कुरुते भूप जगतः परिपालनम् ॥

तयैतन्मोह्यते विश्वं सैव विश्वं प्रसूयते।
सा याचिता च विज्ञानं तुष्टा बुद्धिं प्रयच्छति ॥

व्याप्तं तयैतत्सकलं ब्रह्माण्डं मनुजेश्वर ।
महाकाल्या महाकाले महामारीस्वरूपया ॥

सैव काले महामारी सैव सृष्टिर्भवत्यजा ।
स्थितिं करोति भूतानां सैव काले सनातनी ॥

भवकाले नृणां सैव लक्ष्मीर्वृद्धिप्रदा गृहे ।
सैवाभावे तथाऽलक्ष्मीर्विनाशायोपजायते ॥

स्तुता संपूजिता पुष्पैः धूपगन्धादिभि स्तथा।
ददाति वित्तं पुत्रांश्च मतिं धर्मे गतिं शुभाम् ॥

॥ इति श्रीमार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये
भगवतीवाक्यं नाम द्वादशोऽध्यायः ॥

उवाच २ अर्धश्लोकाः २ श्लोकाः ३८ एवं ४१ एवमादितः ६७१



## त्रयोदशोऽध्यायः

– तपस्तुष्टदेवीसकाशात् सुरथसमाध्योरिष्टलाभः –

ऋषिरुवाच –

एतत्ते कथितं भूप देवीमाहात्म्यमुत्तमम् ।
एवं प्रभावा सा देवी ययेदं धार्यते जगत् ॥

विद्या तथैव क्रियते भगवद्विष्णुमायया ।
त्वया त्वमेष वैश्यश्च तथैवान्ये विवेकिनः ।।

मोह्यन्ते मोहिताश्चैव मोहमेष्यन्ति चाऽपरे ।
तामुपैहि महाराज शरणं परमेश्वरीम् ।।

आराधिता सैव नृणां भोगस्वर्गापवर्गदा ।

मार्कण्डेय उवाच —

इति तस्य वचश्श्रुत्वा सुरथस्सनराधिपः ।।

प्रणिपत्य महाभागं तमृषिं शंसितव्रतम् ।
निर्विण्णोऽतिममत्वेन राज्यापहरणेन च ।।

जगाम सद्यस्तपसे स च वैश्यो महामुने ।
संदर्शनार्थमंबाया नदीपुलिनसंस्थितः ।।

स च वैश्यस्तपस्तेपे देवीसूक्तं पठन् जपन् ।
तौ तस्मिन्पुलिने देव्याः कृत्वा मूर्तिं महीमयीम् ।।

अर्हणां चक्रतुः तस्याः पुष्पधूपाग्नि तर्पणैः ।
निराहारौ यताहरौ तन्मनस्कौ समाहितौ ।।

ददतु स्तौ बलिं चैव निजगात्रासृगुक्षितम् ।
एवं समाराधयतोस्त्रिभिर्वर्षैर्यतात्मनोः ।।

परितुष्टा जगद्धात्री प्रत्यक्षं प्राह चण्डिका ।

देव्युवाच –

यत्प्रार्थ्यते त्वया भूप त्वया च कुलनन्दन ।।

मत्तस्तत्प्रार्थ्यतां सर्वं परितुष्टा ददामि तत् ।

मार्कण्डेय उवाच–

ततो वव्रे नृपो राज्यमविभ्रंश्यन्यजन्मनि ॥

अत्रैव च निजं राज्यं हतशत्रुबलं बलात् ।
सोपि वैश्यस्ततो ज्ञानं वव्रे निर्विण्णमानसः ॥

ममेत्यहमिति प्राज्ञस्संगविच्युतिकारकम् ।

देव्युवाच —

स्वल्पैरहोभिर्नृपते स्वराज्यं प्राप्स्यते भवान् ।
हत्वा रिपूनस्खलितं तव तत्र भविष्यति ॥

मृतश्च भूयः संप्राप्य जन्म देवाद्विवस्वतः ।
सावर्णिको नाम मनुः भवान्भुवि भविष्यति ॥

वैश्यवर्य त्वया यश्च वरो मत्तोभिवांछितः ।
तं प्रयच्छामि संसिद्ध्यै तव ज्ञानं भविष्यति ॥

मार्कण्डेय उवाच –

इति दत्वा तयोर्देवी यथाभिलषितं वरम् ॥

बभूवान्तर्हिता सद्यो भक्त्या ताभ्यामभिष्टुता ।
एवं देव्या वरं लब्ध्वा सुरथः क्षत्रियर्षभः ॥

सूर्याज्जन्म समासाद्य सावर्णिर्भविता मनुः ॥

॥ इति श्रीमार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये सुरथवैश्ययोः वरप्रदानं नाम त्रयोदशोध्यायः ॥

उवाच ६ अर्धश्लोकाः ११ श्लोकाः १२ एवं २९ एवमादितः ७००



– अथोत्तरन्यासः –

ओं शंभुतेजो हरिहर ब्रह्मेन्द्रादि सर्वतेजो ज्वल ज्वालामालिनि पावके ह्रां नन्दायै हृदयाय नमः ।।

ओं शंभुतेजो हरिहर ब्रह्मेन्द्रादि सर्वतेजो ज्वल ज्वालामालिनि पावके ह्रीं रक्तदन्तिकायै शिरसे स्वाहा ।।

ओं शंभुतेजो हरिहरब्रह्मेन्द्रादि सर्वतेजो ज्वल ज्वालामालिनि पावके ह्रूं शाकंभर्यै शिखायै वषट् ।।

ओं शंभुतेजो हरिहर ब्रह्मेन्द्रादि सर्वतेजो ज्वल ज्वालामालिनि पावके ह्रैं भीमायै कवचाय हुम् ।।

ओं शंभुतेजो हरिहर ब्रह्मेन्द्रादि सर्वतेजो ज्वल ज्वालामालिनि पावके ह्रौं भ्रामर्यै नेत्रत्रयाय वौषट् ।।

ओं शंभुतेजो हरिहर ब्रह्मेन्द्रादि सर्वतेजो ज्वल ज्वालामालिनि पावके ह्रः शिवदूत्यै अस्त्राय फट् ।। भूर्भुवस्सुवरोमिति दिग्विमोकः ।

ध्यानम् – या देवी मधुकैटभप्रशमनी या माहिषोन्मूलिनी
या धूम्रेक्षण चण्ड मुण्ड दमनी या रक्तभीजाशनी ।
या शुंभादि निशुंभदैत्यदमनी या सिद्धलक्ष्मीः परा
सा चण्डी नवकोटिशक्तिसहिता मां पातु विश्वेश्वरी ।।

विद्युद्दामसमप्रभां मृगपतिस्कन्धस्थितां भीषणाम्
कन्याभिः करवालखेटविलसद्धस्ताभिरासेविताम् ।
हस्तै श्चक्रदरालिखेटविशिखांश्चापं गुणं तर्जनीम्
बिभ्राणामनलात्मिकां शशिधरां दुर्गां त्रिनेत्रां भजे ।।

एवं ध्यात्वा लमित्यादि पञ्चपूजां कुर्यात् ।
यदक्षरपदभ्रष्टं मात्राहीनन्तु यद्भवेत् ।
तत्सर्वं क्षम्यतां देवि नारायणि नमोस्तु ते ।।

ॐ तत्सत्

श्रीमहाकाळी महालक्ष्मी महासरस्वती देवतात्मिका
श्रीचण्डिकापरमेश्वरी परदेवतार्पणमस्तु ।
।। इति श्रीदेवीमाहात्म्ये सप्तशती समाप्ता ।।



## — श्रीमहासरस्वती सूक्तम् —

अस्य श्रीमहासरस्वती महालक्ष्मी महाकाळी सूक्तमहामन्त्रस्य रुद्र विष्णु ब्रह्माणो ऋषयः । अनुष्टुबुष्णिक्गायत्र्य श्छन्दांसि ।। श्रीमहासरस्वती महालक्ष्मी महाकाळ्यो देवताः । ऐं बीजं ह्रीं शक्तिः क्लीं कीलकम् । श्री देवतात्रयप्रसादसिध्यर्थे जपे विनियोगः । मूलमन्त्रेण करङ्गन्यासः । भूर्भुवस्सुवरोमिति दिग्बन्धः ।।

ध्यानम् – संवित्स्वरूपबिसकन्दळकन्दरूपे
संसारसंतमसबन्धविभातसन्ध्ये ।
त्रायस्व कुण्डलिनि कुङ्कुमताम्रदेहे
मातस्त्रिकोणमणिमंटपदीपलेखे ।।

लमित्यादि पञ्चपूजां कुर्यात् । अथ सूक्तानि पठेत् । ओं गणेशाय नमः ।।

अस्यश्री महासरस्वती देवता क्लां बीजम् । क्लीं शक्तिः । क्लूं कीलकम् श्रीमहासरस्वती प्रसादसिध्यर्थे जपे विनियोगः । क्लामित्यादि करषडङ्गन्यासः । लोकत्रयेण दिग्बन्धः ।।

ध्यानम् – दोर्भिर्युक्ता चतुर्भिः स्फटिकमणिमयी मक्षमालां दधाना
हस्तेनैकेन पद्मं सितमपि च शुकं पुस्तकञ्चापरेण ।
भासा कुन्देन्दुशंखस्फटिकमणिनिभा भासमानाऽसमाना
सा मे वाग्देवतेयं निवसतु वदने सर्वदा सुप्रसन्ना ॥

पञ्चोपचारान् कुर्यात् ॥

राजोवाच –

मुने कथय सर्वज्ञ भूयः किञ्चिदनुत्तमम् ।
तत्वमेतस्य सर्वस्य येनसिद्धिरवाप्यते ॥

ऋषिरुवाच —

भूयश्शृणु महाभाग देवीमहात्म्यमुत्तमम् ।
विना येन स्तवश्चायं निर्जीवो नृपनन्दन ॥

दृष्ट्वा शुंभं विनिहतं दारुणं देवकंटकम् ।
आजग्मुः परमानन्दं ब्रह्मविष्णुमहेश्वराः ॥

देवीस्तुतिं समाधाय देवास्तल्लक्ष्यसंयुताः ।
आज्ञामादाय देवेश्याः कर्तुं दर्शनमादरात् ॥

बद्धाञ्जलिपुटा स्साक्षात्तुष्टुवुः प्रणताश्शिवाम् ।
लोकानां च हितार्थाय देवीसूक्तानि पार्थिव ॥

ब्रह्मा सरस्वतीसूक्तं लक्ष्मीसूक्तं जनार्दनः ।
सूक्तं तथा महाकाळ्या श्शङ्करस्स्वयमब्रवीत् ॥

ब्रह्मोवाच —

अजां पुराणीममरां सनातनीम्
चतुर्भुजां पुस्तकपक्षधारिणीम् ।
वराभयाभ्यामनुशोभिहस्ताम्
नमामि तां जाड्यजराविनाशिनीम् ॥

सरस्वतीं तामनुनौमि वाचं
वचःप्रदां हंसवराधिरूढाम् ।
मुक्तामणिद्योतितकंठहाराम्
भाग्यैकलभ्यां परमां पवित्राम् ॥

श्रीकंठशक्तित्रयशोभमानाम्
दशारसूर्येण कृतानुरूपाम् ।
पञ्चारवासोभृतभूगृहाराम्
सरस्वतीं तां प्रणमामि देवीम् ॥

कलाढ्ययन्त्रां मणिकोटिहाराम्
विहारयन्त्रां विमलैकशोभाम् ।
स्वच्छां चिदाभां स्फटिकानुरूपाम्
सरस्वतीं त्वां प्रणमामि मातः ॥

वाक्कामकामैः परमैः पवित्रैः
स्मरामि तां ह्रीं वरदानदक्षैः ।
बीजैरमीभिः कपिबीजयुक्तैः
क्लीं युग्ममिश्रैरितिमन्त्रराजः ॥

एकेन चैकेन च युग्मकेन
द्वाभ्यामथैकेन तथैव शेषैः ।
कराङ्गक्लृप्तिः परमोत्तमेयम्
निहन्ति पापानि च साधकानाम् ॥

दृढेन वै शृंखलया च सूण्या
विधातृपत्न्या च तथैव वाचा ।
श्रीं क्लीं च वह्न्या किल शोभया च
न्यासैरमीभिः पठितोपि शंभुः ॥

द्रव्येण होमात्संकलार्थसिद्धि
स्सुर्कि शुकैर्वागपि सिद्धिमृच्छेत् ।
तत्साहचर्येण रमा निवास
स्सुपायसेनापि च वेदसिद्धिः ॥

नत्वां च ते महिमानं विदाम
स्सरस्वतीं तां प्रथितां हि लोके ।
जानन्ति किं बुद्बुदान् भूमितोये
जडा वयं ब्रह्महरीशमुख्याः ॥

तथैव वाचा च वयं वदामो
जिघ्राम शक्त्या च तथैव जीवाः ।
पश्यामहे रूपमिदं महेशि
स्पृशाम साक्षात्त्वयि संयुतायौम् ॥

स्वादं विदाम स्तवशक्तियोगात्
गृह्णीमहे तत्त्वविदो महेशि ।
गच्छामहे तव शक्तिप्रभावात्
आनन्दयुक्ता स्तव सन्निवेशात् ॥

आत्मा मनस्त्वं त्वमिहासि देहः
त्वमेव पञ्चेन्द्रिय पञ्चतत्त्वम् ।
त्वमेव वै विषयाश्शब्दमुख्याः
परा परेशी परमा त्वमेव ॥

रविश्च ते चन्द्रमाश्च ते तारकाश्च ते भूश्च ते जलं च ते तेजश्च ते वायुश्च ते व्योम च ते शब्दश्च ते स्पर्शश्च ते रूपं च ते रसश्च ते गन्धश्च ते श्रोत्रञ्च ते त्वक्च ते चक्षुश्च ते रसना च ते घ्राणं च ते प्राणश्च ते अपानश्च ते व्यानश्च ते उदानश्च ते समानश्च ते नागश्च ते कूर्मश्च ते कृकरश्च ते देवदत्तश्च ते धनञ्जयश्च ते भूतात्मा च ते परमात्मा च ते ज्ञानात्मा च ते सर्वात्मा च ते मम चित्तं त्वय्येव विनिवेश्यताम् ॥

यदा न चाहं भुवनानि जीवा
नाहं न विष्णु र्नच पार्वतीशः
न चेश्वरो नापि सदाशिवश्च
त्वमेव चासीर्ह्यसि वा भविष्यसि ॥

कालस्त्वमेवासि जगत्त्रयाणाम्
स्वभावतुर्यादि कळा त्वमेव ।
त्वमेव विश्वं च परात्मशक्तिः
नमामि ते पादयुगं च देवि ॥

त्वमेव वाणी निखिलाश्च वेदा
स्त्वं शब्दशक्तिश्च तथार्थशक्तिः ।
त्वं ब्रह्मविद्यासि परा परेशि
त्वं ब्रह्मशक्तिं शरणं प्रपद्ये ॥

सूक्तं तवेद सुभगे सरस्वति
प्रातश्च मध्याह्न इहेति सायम् ।
पठति ये श्रद्धया पूतचित्ता
स्ते भोगमोक्षौ सहसा लभन्ते ॥

न ते कुयोनिं न दरिद्रतां च
त्वद्ध्यात्मता पञ्च न संलभन्ते ।
त एव धन्याश्च त एव पूज्या
स्सर्वत्र संमानयुता भवन्ति ॥

इदं पुराणं विरजं सुधामयम्
यत्तत्वभूतं जगतां त्रयाणाम् ।
ते प्राप्नुवन्ति प्रकटप्रभावम्
त्वां सर्वयोनिं शरणं प्रपद्ये ॥

ऋषिरुवाच —

स्तुत्याऽनया वेदवाण्या सर्वसारस्वरूपया ।
प्रसन्ना देवदेवेशी महापूर्वा सरस्वती ॥

आविर्भूता महादेवी ब्रह्मतोषैककारिणी ।
उवाच वचनं दिव्यं ब्रह्मानन्दप्रदायकम् ॥

श्रीदेव्युवाच —

स्तुत्याऽनया च ते ब्रह्मन् भृशं तोषसमन्विता ।
प्रीतास्मि व्रीयतां देव वरस्संन्तोषकारकः ॥

ब्रह्मोवाच —

तद्यथा मे मनो देवि दृढं भवतु सर्वदा ।
एष एव वरस्साक्षादुत्तमो व्रीयते मया ॥

स्वसूक्ते चापि देवेशि दिव्यं तेजो विधीयताम् ।
येन कार्याणि सिध्यन्ति साधकानां महात्मनाम् ॥

श्रीदेव्युवाच –

सर्वदा ते मनोदेव कुळधर्मे सुपूजिते ।
दृढं भवतु सूक्तं च प्रसादान्मे परंतप ।।

सर्वसिद्धिप्रदं चास्तु परमानन्ददायकम् ।
विना सूक्तं पठेद्यस्तु स्तोत्रं सप्तशतीति च ।।

मातृगामी स विज्ञेयो नरके वासतत्परः ।
ममावज्ञापराधेन ब्रह्मघ्नानां गतिं व्रजेत् ।।

ऋषिरुवाच –

एवमुक्त्वा वचो देवी तूष्णी मासीन्नृपोत्तम ।।

इति श्रीरुद्रयामळे घटतन्त्रे देवीमाहात्म्ये
महासरस्वतीसूक्तं नाम सप्तदशः पटलः ।
।। इति श्रीमहासरस्वती सूक्तं समाप्तम् ।।



– श्रीमहालक्ष्मीसूक्तप्रारंभः –

अस्य श्रीमहालक्ष्मीसूक्त महामन्त्रस्य विष्णुऋषिः उष्णिक् छन्दः श्रीमहालक्ष्मीर्देवता – ह्रां बीजं ह्रीं शक्तिः ह्रूं कीलकं श्रीमहालक्ष्मी प्रसादसिद्ध्यर्थे जपे विनियोगः । ह्रां इत्यादि कराङ्गन्यासः । भूर्भुवस्सुवरोमिति दिग्बन्धः ।।

ध्यानम् – वन्दे लक्ष्मीं परशिवमयीं तप्तजाम्बूनदाभाम्
तेजोरूपां कनकवसनां सर्वभूषोज्वलाङ्गीम् ।
बीजापूरं कनककलशं हेमपद्मं दधाना
माद्यां शक्तिं सकलजननीं विष्णुवामाङ्कसंस्थाम् ।।

ॐमित्यादि पञ्चोपचारान् कुर्यात् ।

ऋषिरुवाच —

भूयश्शृणु महाभाग देवीमहात्म्यमुत्तमम् ।
अथाञ्जलिं समाधाय हरिः प्रोवाच विश्वकृत् ॥

हरिरुवाच —

परां परेशां जगदादिभूताम्
वरां वरेण्यां वरदां वरिष्ठाम् ।
वरेश्वरीं विबुधैः प्रगीताम्
त्वां विश्वयोनिं शरणं प्रपद्ये ॥

श्रियं समस्तैर्निधिवासभूताम्
महालक्ष्मीं धरणीधराणाम् ।
अनादिमादिं परमार्थरूपम्
त्वां विश्वयोनिं शरणं प्रपद्ये ॥

एकानेकां विविधां सुकार्याम्
सुकारणां सदसद्रूपिणीं च ।
कल्याणरूपां च शिवां शिवप्रदाम्
त्वां विश्वयोनिं शरणं प्रपद्ये ॥

सर्वाश्रयां सर्वजगन्निवासाम्
श्रीमन्महालक्ष्मि सुरादिदेवीम् ।
शक्तिस्वरूपां च शिवस्वरूपाम्
त्वां विश्वयोनिं शरणं प्रपद्ये ॥

कामाभिधां त्वामधिवासभूताम्
ह्रीं रूपिणीं मन्मथबीजयुक्ताम् ।
कळाढ्यबीजां परमार्थसंज्ञाम्
रमां विशालां कमलाधिवासाम् ॥

वैश्वानरस्त्रीसहितेन देवीम्
श्रीमन्त्रराजेन विराजमानाम् ।
सर्वार्थदात्रीं परमां पवित्राम्
त्वां विश्वयोनिं शरणं प्रपद्ये ॥

त्रिकोणपञ्चायुगप्रभावाम्
षट्कोणमिश्रां द्विदशारसंयुताम् ।
अष्टारचक्राधिनिवासभूताम्
त्वां विश्वयोनिं शरणं प्रपद्ये ॥

पुनर्दशारद्वितयेन संयुताम्
पञ्चारकोणांकितभूगृहां च ।
यन्त्राधिवासामपि यन्त्ररूपाम्
त्वां विश्वयोनिं शरणं प्रपद्ये ॥

संभाविता सर्वसुरैरगम्याम्
सर्वस्वरूपामपि सर्वसेव्याम् ।
सर्वाक्षरन्यासवशां वरिष्ठाम्
त्वां विश्वयोनिं शरणं प्रपद्ये ॥

सृष्टिस्थितिप्रळयाख्यैश्च
बीजैर्न्यासं विधाय प्रजपन्ति ।
ये त्वां त एव राजेन्द्र निघृष्टपादा
विद्याधरा एव यशो लभन्ते ॥

प्रपूज्य यन्त्रं विधिना महेशि
पुण्यां सुपूज्यां परमां सुभाग्याम ।
जपन्ति ये त्वां विविधार्थदात्रीम्
त एव धन्याः कुलमार्गनिष्ठाः ।।

जानन्ति किं पशवस्ते सपापा
ब्रह्मादिगीतं महितं महेशि ।
केचिन्महान्तो निजधर्मभाजो
जानन्ति ते देविपरं सुधाम ।।

विधाय कुण्डं विधिना स्थण्डिलं वा
सौगन्धहोमं सफलं च कुर्वते ।
त्वत्तोषणाज्जायते भाग्यतन्त्रम्
तेषां सुदेवैरपि दूरगम्यम ।।

पुनः तुवन्ति प्रयताश्च देवीम्
स्तोत्रैरुदारैः कुलयोगयुक्ताः ।
त एव धन्याः परमार्थभाजो
भोगश्च मोक्षश्च करस्थ एव ।।

ऋषिरुवच —

इति स्तुत्वा यदा देवो महालक्ष्मीं ददर्श सः ।
चतुर्भुजां त्रिणयनां महिषासुरघातिनीम् ।।
अथ सा श्रीमहालक्ष्मीः प्रसन्ना स्तुतिगौरवात् ।
उवाच स्मितशोभाढ्या नारायणमजं विभुम् ।।

श्रीदेव्युवाच —

वरं वरय देवेश नारायण सनातन ।
दास्याम्यदातव्यमपि तव स्तुतिवशीकृता ।।

हरिरुवाच —

मातः परमकल्याणि महालक्ष्मि वरप्रदे ।
कुलाचारे मनो मेऽस्तु वरस्ते कृपया शिवे ॥

तव सूक्तं तु सफलं भवतु प्रीतिकारकम् ।

श्रीदेव्युवाच —

एवमस्तु महाभाग नारायण सनातन ॥

सूक्तमेतद्विना यस्तु पठेत्सप्तशतीं नरः ।
संप्राप्नोति महाघोरं रौरवं नरकं किल ॥

लभते परमां व्याधिं मम कोपविघूर्णितः ।
लक्ष्मीसूक्तं पठेद्यस्तु पूर्णस्तोत्रं भवेदिदम् ॥

ऋषिरुवाच —

एवमुक्त्वा वचो देवी तूष्णींभावं गता नृप ॥

इति श्रीरुद्रयामळे घटतन्त्रे देवीमाहात्म्ये महालक्ष्मीसूक्तं नाम अष्टादशः पटलः ।

॥ इति महालक्ष्मीसूक्तं सम्पूर्णम् ॥



## — श्रीमहाकाळीसूक्तप्रारम्भः —

अस्यश्री महाकाळीसूक्तं महामन्त्रस्य रुद्रऋषिः अनुष्टुप्छन्दः श्रीमहाकाळी देवता आं बीजं ईं शक्तिः ॐ कीलकं मम श्रीमहाकाळीप्रसादसिद्ध्यर्थे जपे विनियोगः । लमित्यादि कराङ्गन्यासः । भूर्भुवस्सुवरोमिति दिग्बन्धः ॥

ध्यानम् – कालि कपालिनि शूलिनि
भैरवि मातङ्गि पञ्चमि त्रिपुरे ।
वाग्देवि विन्ध्यवासिनि
बाले भुवनेशि पालय चिरं माम् ॥

इत्यादि पञ्चपूजां कुर्यात् ॥

ऋषिरुवाच —

भूयश्शृणु महाभाग देवीमाहात्म्यमुत्तमम् ।
ततोऽञ्जलिं समाधाय शिवस्तोत्रमुदाहरत् ॥

तुष्टाव वाग्भिर्दिव्याभिर्महाकाळीं महेश्वरः ।
वेदवाग्भिस्सुतत्त्वाभिर्लोकानां हितकाम्यया ॥

शिव उवाच—

शिवामनन्यां विविधप्रभावां
काळीं कळामालिनि विश्ववन्द्याम् ।
कपालखट्वाङ्गधरां नृमुण्ड
मालादिभूषां मृगचर्मभूषाम् ॥

सुशुकमांसां च शवासनस्थां
विभीषणैर्भीषयन्तीं सुरारीन् ।
रक्तप्रियां मांसमदावघूर्णां
काळीं शरण्यां शरणं व्रजामि ॥

सुघोरबीजं च कपीश्वरं च
चिन्तामणिं कुब्जिककामराजम् ।
विद्यां स्वविद्यां च सुकामराजं
कामःकळामालिनि कामराजम् ॥

वह्नेर्वधूर्मन्त्रविराज ईशे
विश्वं पुनातीश्वरि विश्ववन्द्ये ।
मन्त्रेण चानेन च सिद्धयश्च
सुसिद्धयस्सर्वजगन्निवासे ॥

पञ्चारयुग्मं च त्रिकोणयुग्मं
पुनश्च पञ्चारयुगेन सिद्धम् ।
कळाष्टकोणाङ्कितभूगृहं च
यंत्रेश्वरि त्वत्पदपङ्कजस्थम् ॥

संपूज्य यन्त्रं तव विश्वनायिके
निष्पापिनस्ते सहसा भवन्ति ।
ये साधका वै कुळमार्गसारिणः
कुलानुवृत्या परमाः पवित्राः ॥

ते सिद्धिमृद्धिं च यशोनुगम्यां
नृणां वशीकृत्य भवन्ति भूपाः ।
समस्तमन्त्रेण विधाय चाङ्ग
न्यासादिकं भक्तिसुभावयुक्ताः ॥

ते किङ्करीकृत्य गृणन्ति देवा
नित्ये जगत्येकविभूतियुक्ते ।
वदामि नान्यं न शृणोमि चान्यं
गृह्णामि नान्यं न विचिन्तयामि ॥

स्मरामि नान्यं न भजामि चान्यं
ध्यायामि नान्यं न वितर्कयामि ।
गायामि नान्यं तव पादमन्तरा
त्वां विश्वरूपां शरणं प्रपद्ये ॥

येषां न दैवं त्वमिहासि देवी
नाराधयन्तीह कुबुद्धयस्ते ।
अन्धं तमो ये प्रविशन्ति मूढा
स्त्वद्दर्शनं मास्तु दुरात्मनां तु ॥

ऋषिरुवाच —

इति वाक्यं समाकर्ण्यं परमामृतसम्मितम् ।
प्रसन्नाभून्महादेवी व्रीयतामीप्सितो वरः ॥

इत्युवाच विशालाक्षि शम्भोरानन्ददायिनी ।
प्रसन्ना परमाह्लादसंयुता शिवभाषणात् ॥

व्रीयतां मनसोभीष्टो वरो जगति दुर्लभः ।
दास्याम्यदातव्यमपि तव स्तुतिवशीकृता ॥

शिव उवाच —

न कुलाचारतो देवि मतिर्मेऽस्तु कदाचन ।
शिथिला देवदेवेशि सूक्तं च कदाचन ॥

ऋषिरुवाच —

एवमस्त्विति चोक्त्वा हि तिस्रो देव्यस्सनातनाः ।
अन्तर्धिमापुः परमामम्बिकास्तिमिताऽभवत् ॥

अथ तान् सुव्रतान् देवान्प्रोवाच वचनं मुदा ।
सन्तोषयन्ती च मुहुर्भक्तानुग्रहतत्परा ॥

श्रीदेव्युवाच —

श्रुणुत प्रीतिसंयुक्ता ब्रह्मविष्णुमहेश्वराः ।
देवीसूक्तं परं ध्येयं भविष्यति परार्थकम् ॥

देवीसूक्तं विना देवा ये च सप्तशतीं नराः ।
श्रोष्यन्ति च पठिष्यन्ति तेषां शापः पदे पदे ॥

देवीसूक्तं विना पाठो ह्यरण्ये रोदनं तथा ।
स्तोत्रत्रयेण चानेन पूर्णस्तोत्रं भवेदिदम् ॥

मातस्सप्तशतीस्तोत्रफलश्रुति रिहोच्यताम् ।
यां समाकर्ण्य जीवानां विश्वासो जायते भृशम् ॥

ऋषिरुवाच —

इति वाक्यं समाकर्ण्य ब्रह्मविष्णुशिवोदितम् ।
फलश्रुतिमथोवाच स्तोत्रस्याऽस्य महामते ॥

इति रुद्रयामळे घटतन्त्रे देवीमाहात्म्ये महाकाळी
सूक्तं नाम एकोनविंशः पटलः ॥

॥ इति महाकाळीसूक्तं सम्पूर्णम् ॥



## — अथ रहस्यत्रय प्रारम्भः —

अस्य श्रीचण्डी सप्तशतीरहस्यत्रयमहामन्त्रस्य नारायणऋषिः अनुष्टुप्छन्दः । महाकाळी महालक्ष्मी महासरस्वत्यो देवताः । ऐं बीजं ह्रीं शक्तिः क्लीं कीलकम् । श्रीदेवतात्रयप्रसादसिद्ध्यर्थे जपे विनियोगः । मूलमन्त्रेण कराङ्गन्यासः ।

ध्यानम् – पूर्णेन्दुप्रतिमद्युतिं निजवपुस्सोधातिधाराप्लुतां
भक्तानां कृपया कराब्जविलसद्दिव्यायुधैरापदः ।

चोरारिग्रहभूतरोगनिवहान् त्रासप्रदान् तत्क्षणा
त्संहृत्याशु मदिष्टदामिह महालक्ष्मीं सदा भावये ॥

लमित्यादि पञ्चपूजा ॥

राजोवाच —

भगवन्नवतारा मे चण्डिकायास्त्वयोदिताः ।
एतेषां प्रकृतिं ब्रह्मन्प्रधानं वक्तुमर्हसि ॥

आराध्यं यन्मया देव्यास्स्वरूपं येन वै द्विज ।
विधिना ब्रूहि सकलं यथावत्प्रणतस्य मे ॥

ऋषिरुवाच —

इदं रहस्यं परममनाख्येयं प्रचक्षते ।
भक्तोसीति न मे किञ्चित्तवावाच्यं नराधिप ॥

सर्वस्याद्या महालक्ष्मीस्त्रिगुणा परमेश्वरी ।
लक्ष्यालक्ष्यस्वरूपा सा व्याप्य कृत्स्नं व्यवस्थिता ॥

मातुलुङ्गं गदां खेटं पानपात्रं च बिभ्रती ।
नागं लिङ्गं च योनिं च बिभ्रती नृपमूर्धनि ॥

तप्तकाञ्चनवर्णाभा तप्तकाञ्चनभूषणा ।
शून्यं तमखिलं स्वेन पूरयामास तेजसा ॥

शून्यं तमखिलं लोकं विलोक्य परमेश्वरी ।
बभार रूपमपरं तमसा केवलेन हि ॥

सा भिन्नां जनसङ्काशा दंष्ट्राचितवरानना ।
विशाललोचना नारी बभूव तनुमध्यमा ॥

खड्गपात्रशिरः खेटैरलंकृतचतुर्भुजा ।
कबन्धहारानुरसा बिभ्राणा हि शिरस्स्रजम् ॥

सा प्रोवाच महालक्ष्मीं तामसी प्रमदोत्तमा ।
नाम कर्म च मे मातर्देहि तुभ्यं नमो नमः ॥

तां प्रोवाच महालक्ष्मीस्तामसीं प्रमदोत्तमाम् ।
ददामि तव नामानि यानि कर्माणि तानि च ॥

महामाया महाकाळी महामारी क्षुधा तृषा ।
निद्रा तृष्णा चैकवीरा काळरात्रिर्दुरत्यया ॥

इमानि तव नामानि प्रतिपाद्यानि कर्मभिः ।
एभिः कर्माणि ते ज्ञात्वा योऽधीते सोऽश्नुते सुखम् ॥

तामित्युक्त्वा महालक्ष्मीस्वरूपमपरं नृप ।
सत्त्वाख्येनातिशुद्धेन गुणेनेन्दुप्रभं दधौ ॥

अक्षमालांकुशधरा वीणापुस्तकधारिणी ।
सा बभूव वरा नारी नामान्यस्यै च सा ददौ ॥

महाविद्या महावाणी भारती वाक्सरस्वती ।
आर्या ब्राह्मी कामधेनुर्वेदगर्भा त्वधीश्वरी ॥

अथोवाच महालक्ष्मीर्महाकाळीं सरस्वतीम् ।
युवां जनयतं देव्यौ मिथुने स्वानुरूपतः ॥

इत्युक्त्वा ते महालक्ष्मी ससर्ज मिथुनं स्वयम् ।
हिरण्यगर्भौ रुचिरौ स्त्रीपुंसौ कमलासनौ ॥

ब्रह्मन्विधे विरिञ्चेति धातरित्याहतं नरम् ।
श्रीः पद्मे कमले लक्ष्मीत्याहत माता स्त्रियं च ताम् ॥

महाकाळी भारती च मिथुने सृजतस्सह ।
एतयोरपि रूपाणि नामानि च वदामि ते ॥

नीलकण्ठं रक्तबाहुं श्वेताङ्गं चन्द्रशेखरम् ।
जनयामास पुरुषं महाकाळी सितां स्त्रियम् ॥

सरुद्रश्शंकरस्थाणुः कपर्दी च त्रिलोचनः ।
त्रयीविद्या कामधेनुस्सा स्त्री भाषाक्षरा स्वरा ॥

सरस्वती स्त्रियं गौरीं कृष्णं च पुरुषं नृप ।
जनयामास नामानि तयोरपि वदामि ते ॥

विष्णुः कृष्णो हृषीकेशो वासुदेवो जनार्दनः ।
उमा गौरी सती चण्डि सुन्दरी सुभगा शिवा ॥

एवं युवतयस्सद्यः पुरुषत्वं प्रपेदिरे ।
चक्षुष्मन्तोनुपश्यन्ति नेतरे तद्विदो जनाः ॥

ब्रह्मणे प्रददौ पत्नीं महालक्ष्मीर्नृपत्रयीम् ।
रुद्राय गौरीं वरदां वासुदेवाय च श्रियम् ॥

स्वरया सहसंभूय विरिञ्चोंदमजीजनत् ।
बिभेद भगवान्रुद्रस्तद्गौर्या सह वीर्यवान् ॥

अण्डमध्ये प्रधानादि कार्यजातमभून्नृप ।
महाभूतात्मकं सर्वं जगत्स्थावरजङ्गमम् ॥

पुपोष पालयामास तल्लक्ष्म्या सह केशवः ।
महालक्ष्मीरेवमजा राजन् सर्वमयीश्वरी ॥

निराकारा च साकारा सैव नानाभिधानभृत् ।
नामान्तरैर्निरूप्यैषा नाम्ना नान्येन कस्यचित् ॥

॥ इति श्रीमार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये
प्राधानिकरहस्यं नाम चतुर्दशोऽध्यायः ॥



— वैकृतिकरहस्यप्रारंभः —

ऋषिरुवाच –

त्रिगुणा तामसी देवी सात्त्विकी या त्रिधोदिता ।
सा शर्वा चण्डिका भद्रा दुर्गा भगवतीर्यते ॥

योगनिद्रा हरेरुक्ता महाकाळी तमोगुणा ।
मधुकैटभनाशार्थं यां तुष्टावांबुजासनः ॥

दशवक्त्रा दशभुजा दशपादाञ्जनप्रभा ।
विशालया राजमाना त्रिंशल्लोचनमालया ॥

स्फुरद्दशनदंष्ट्रा सा भीमरूपाऽपि भूमिप ।
रूपसौभाग्यकान्तीनां सा प्रतिष्ठा महाश्रियाम् ॥

खड्गबाणगदाशूलशंखचक्रभुशुंडिभृत् ।
परिघं कार्मुकं शीर्षं निश्च्योतद्रुधिरं दधौ ॥

एषा सा वैष्णवी माया महाकाळी दुरत्यया ।
आराधिता वशी कुर्यात् पूजाकर्तुश्चराचरम् ॥

सर्वदेवशरीरेभ्यो याविर्भूताऽमितप्रभा ।
त्रिगुणा सा महालक्ष्मी साक्षान्महिषमर्दिनी ॥

श्वेतानना नीलभुजा सुश्वेतस्तनमण्डला ।
रक्तमध्या रक्तपादा नीलजंघोरुरुन्मदा ॥

सुचित्रजघना चित्रमाल्यांबरविभूषणा ।
चित्रानुलेपना कान्तिरूपसौभाग्यशालिनी ॥

अष्टादशभुजा पूज्या सा सहस्रभुजा सती ।
आयुधान्यत्र वक्ष्यन्ते दक्षिणाधः करक्रमात् ॥

अक्षमाला च कमलं बाणोसिः कुलिशं गदा ।
चक्रं त्रिशूलं परशुश्शंखो घंटा च पाशकः ॥

शक्तिर्दण्डश्चर्म चापः पानपात्रं कमण्डलुः ।
अलंकृतभुजामेभि रायुधैः कमलासनाम् ॥

सर्वदेवमयीमीशां महलक्ष्मीमिमां नृप ।
पूजयेत् सर्वलोकानां स देवानां प्रभुर्भवेत् ॥

गौरीदेहात् समुद्भूता या सत्वैकगुणाश्रया ।
साक्षात्सरस्वती प्रोक्ता शुंभासुरनिबर्हिणी ॥

दधौ चाष्टभुजा बाणान्मुसलं शूलचक्रभृत् ।
शंखं च लाङ्गलं घंटां कार्मुकं वसुधाधिप ॥

एषा संपूजिता भक्त्या सर्वज्ञ त्वं प्रयच्छति ।
निशुंभमर्दनी देवी शुंभासुरनिबर्हिणी ॥

इत्युक्तानि स्वरूपाणि मूर्तीनां तव पार्थिव ।
उपासनं जगन्मातुः पृथगासां निशामय ॥

महालक्ष्मीर्यदा पूज्या महाकाळी सरस्वती ।
दक्षिणोत्तरयोः पूज्ये पृष्ठतो मिथुनत्रयम् ॥

विरिञ्चि स्स्वरया मध्ये रुद्रो गौर्या च दक्षिणे ।
वामे लक्ष्म्या हृषीकेशः पुरतो देवतात्रयम् ॥

अष्टादशभुजामध्ये वामे चास्या दशानना ।
दक्षिणेष्टभुजा लक्ष्मीर्महतीति समर्चयेत् ॥

पूर्वादिपुरतः पूज्या स्ताङ्गाश्च भैरवाः।
अष्टादशभुजा चैषा यदा पूज्या नराधिप ॥

दशानना चाष्टभुजा दक्षिणोत्तरयोस्तदा ।
दशानना यदा पूज्या दक्षिणोत्तरयोस्तदा ॥

कालमृत्यू च संपूज्यौ सर्वारिष्टप्रशान्तये ।
यदा चाष्टभुजा पूज्या शुंभासुरनिबर्हिणी ॥

नवास्याश्शक्तयः पूज्या स्तथा रुद्रविनायकौ ।
नमो देव्या इति स्तोत्रै र्महालक्ष्मीं समर्चयेत् ॥

अवतारत्रयार्चायां स्तोत्रमन्त्रा स्तदाश्रयाः ।
अष्टादशभुजा चैका पूज्या महिषमर्दनी ॥

महालक्ष्मीर्महाकाळी सैव प्रोक्ता सरस्वती ।
ईश्वरी पुण्यपापानां सर्वलोकमहेश्वरी ॥

महिषान्तकरी येन पूजिता स जगत्प्रभुः ।
पूजयेत् जगतां धात्रीं चण्डिकां भक्तवत्सलाम् ॥

अर्घ्यादिभिरलङ्कारैर्गन्धपुष्पै स्तथाऽक्षतैः ।
धूपैर्दीपैश्च नैवेद्यै र्नानाभक्ष्यसमन्वितैः ॥

रुधिराक्तेन बलिना मांसेन सुरया नृप ।
प्रणामाचमनियेन चन्दनेन सुगन्धिना ॥

सकर्पूरैश्च तांबूलैर्भक्तिभावसमन्वितैः ।
वामभागेग्रतो देव्याश्छिन्नशीर्षं महासुरम् ॥

पूजयेन्महिषं येन प्राप्तं सायुज्यमीशया ।
दक्षिणे पुरतस्सिंहं समग्रं धर्ममीश्वरम् ॥

वाहनं पूजयेर्देव्या धृतं येन चराचरम् ।
ततः कृताञ्जली प्रह्वन्स्तुवीत चरितैरिमैः ॥

एकेन वा मध्यमेन नैकेनेतरयोरिह ।
चरितार्थं तु न जपेत् जपच्छिद्रमवाप्नुयात् ॥

स्तोत्रमन्त्रै स्स्तुवीते मां यदि वा जगदाम्बिकाम् ।
प्रदक्षिणनमस्कारान्कृत्वा मूर्ध्नि कृताञ्जलिः ॥

क्षमापयेज्जगद्धात्रीं मुहुर्मुहुरतन्द्रितः ।
प्रतिश्लोकं च जुहुयात्पायसं तिलसर्पिषा ।।

अथवा स्तोत्रमन्त्रैर्वा चण्डिकायै शुभं हविः ।
भूयो नामपदैर्देवीं पूजयेत्सुसमाहितः ।।

प्रयतः प्राञ्जलिः प्रह्वः प्रणम्यारोप्य चात्मनि ।
सुचिरं भावयेदीशां चण्डिकां तन्मयो भवेत् ।।

एवं यः पूजयेद्भक्त्या प्रत्यहं परमेश्वरीम् ।
भुक्त्वा भोगान्यथाकामं देवीसायुज्यमाप्नुयात् ।।

येन पूजयते नित्यं चण्डिकां भक्तवत्सलाम् ।
भस्मीकृत्वाऽस्य पुण्या विनिर्देहेत्परमेश्वरी ।।

तस्मात्पूजय भूपाल सर्वलोकमहेश्वरीम् ।
यथोक्तेन विधानेन चण्डिकां सुखमाप्स्यसि ।।

।। इति श्रीमार्कण्डेयपुराणे सूर्यसावर्णिके मन्वन्तरे देवीमाहात्म्ये वैकृतिकरहस्यं नाम पञ्चदशोऽध्यायः ।।



## — मूर्तिरहस्यप्रारम्भः —

ऋषिरुवाच —

नन्दा भगवती नाम या भविष्यति नन्दजा ।
सा स्तुता पूजिता भक्त्या वशी कुर्याज्जगत्त्रयम् ।।

कनकोत्तमकान्तिस्सा सुकान्तिकनकाम्बरा ।
देवी कनकदामाढ्या कनकोत्तमभूषणा ।।

कमलांकुशपाशाब्जैरलंकृतचतुर्भुजा ।
इन्दिरा कमला लक्ष्मीस्सा श्री रुक्मांबुजासना ॥

या रक्तदन्तिका नाम देवी प्रोक्ता मयाऽनघ ।
तस्यास्स्वरूपं वक्ष्यामि शृणु सर्वभयापहम् ॥

रक्ताम्बरा रक्तवर्णा रक्तसर्वाङ्गभूषणा ।
रक्तायुधा रक्तनेत्रा रक्तकेशातिभीषणा ॥

रक्ततीक्ष्णनखा रक्तरसना रक्तदंष्ट्रिका ।
पतिं नारी वानुरक्ता देवी भक्तं भजेज्जनम् ॥

वसुधेव विशाला सा सुमेरुयुगळस्तनी ।
दीर्घा लम्बावती स्थूलौ तावतीव मनोहरौ ॥

कर्कशावतिकान्तौ तौ सर्वानन्दपयोनिधी ।
भक्तान्सम्पाययेद्देवी सर्वकामदुघौ स्तनौ ॥

खड्गं पात्रं च मुसलं लाङ्गलं च बिभर्ति सा ।
आख्याता रक्तचामुण्डा देवी योगीश्वरीति च ॥

अनया व्याप्तमखिलं जगत्स्थावरजङ्गमम् ।
इमां यः पूजयेद्भक्त्या स व्याप्नोति चराचरम् ॥

अधीते य इमं नित्यं रक्तदन्त्यावपुस्तवम् ।
तं सा परिचरेद्देवी पतिं प्रियमिवाङ्गना ॥

शाकम्भरी नीलवर्णा नीलोत्पलविलोचना ।
गम्भीरनाभिस्त्रिवळी विभूषिततनूदरी ॥

सुकर्कशसमोत्तुङ्गवृत्तपीनघनस्तनी ।
मुष्टौ शिलीमुखा पूर्णं कमलं कमलालया ॥

पुष्पपल्लवमूलादि फलाढ्यं शाकसंचयम् ।
काम्यानन्तरसैर्युक्तं क्षुत्तृण्मृत्युजरापहम् ॥

कार्मुकं च स्फुरत्कान्ति बिभर्ति परमेश्वरी ।
शाकम्भरी शताक्षी सा सैव दुर्गा प्रकीर्तिता ॥

उमा गौरी सती चण्डी काळिका सा च पार्वती ।
शाकम्भरीं स्तुवन्ध्यायन् जपन्संपूजयन्नमन् ॥

अक्षय्यमश्नुते शीघ्रमन्नपानामृतं फलम् ।
भीमापि नीलवर्णा सा दंष्ट्रादशनभासुरा ॥

विशाललोचना वृत्ततुङ्गपीनपयोधरा ।
चन्द्रहासं च डमरु शिरः पात्रं च बिभ्रती ॥

एकवीरा काळरात्रिस्सैवोक्ता कामदा स्तुता ।
तेजोमण्डलदुर्धर्षा भ्रामरी चित्रकान्तिभृत् ॥

चित्रभ्रमरपाणिस्सा महामारीति गीयते ।
चित्रानुलेपना देवी दिव्याभरणभूषिता ॥

इत्येता मूर्तयो देव्या व्याख्याता वसुधाधिप ।
जगन्मातुश्चण्डिकायाः कीर्तिताः कामधेनवः ॥

इदं रहस्यं परममवाच्यं यस्य कस्यचित् ।
व्याख्यातं दिव्यमूर्तीनामधीष्वावहितस्स्वयम् ॥

देव्या ध्यानं तवाख्यातं गुह्याद् गुह्यतरं महत् ॥

॥ इति श्रमार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये
मूर्तिरहस्यं नाम षोडशोऽध्यायः ॥



श्रीरस्तु

श्रीमहात्रिपुरसुन्दर्यै नमः

— नित्यचण्ड्यादिविधिः —

ऋषिरुवाच —

नित्यचण्ड्यादि जाप्यस्य विधानं ते वदाम्यहम् ।
क्रमेण सर्वकार्याणां सिद्धये यज्ञपुण्यदम् ॥

पूर्वोक्तविधिना कृत्वा चण्डिकातर्पणादिकम् ।
शुक्लां मूर्तिमवष्टभ्य मासं प्रतिदिनं जपेत् ॥

सकृद्रहस्यसंयुक्तं चण्डिकाचरितत्रयम् ।
दशांशहोमसहितं सोच्यते नित्यचण्डिका ॥

धनपुत्रयशोधात्री महाव्याधिविनाशिनी ।
महाभय महादुःख हन्त्री सौख्यप्रदायिनी ॥

शुक्लाष्टमीमवष्टभ्य यावच्छुक्लचतुर्दशी ।
नवदुर्गा विधातव्या सर्वकार्यफलार्थिना ॥

पूजयेद्विधिवद्देवीं चण्डिकां कृततर्पणाम् ।
कलशं पञ्चरत्नाढ्यं सहकारदळाकुलम् ॥

सवस्त्रं संप्रतिष्ठाप्य चण्डिकाग्रेंभसा भृतम् ।
समन्तात्पूजयेद्दिक्षु दिशापालान्यथाक्रमम् ॥

चन्दनेन विलिप्ताङ्गस्स्रग्वी न्यासपरायणः ।
नवाहं भूय एकैकं मौनी बद्धासनी जपेत् ॥

प्रणवादिरहस्यान्तं चण्डिका चरितत्रयम् ।
चतुरश्रे समे कुण्डे समन्ताद्धस्तमात्रके ॥

एकावरणसंयुक्ते योनिमण्डलमण्डिते ।
दशांशविधिना होममुक्तद्रव्येण साधयेत् ॥

नवदुर्गा मखे कुण्डमेवं जानीहि भूपते ।
नित्य चण्डीविधानेपि कुण्डमीदृक्प्रकीर्तितम् ॥

नवचण्डी मखे कुण्डमीदृग्लक्षणमुच्यते ।
एतत् द्विगुणितं कुण्डं शतचण्ड्याः प्रकीर्तितम् ॥

कृष्णाष्टमीमवष्टभ्य नवदुर्गाविधानवित् ।
यद्ययं क्रियते जाप्यः कालरात्रिरितीरिता ॥

महाकालोद्भवं दुःखं कालरात्रिर्व्यपोहति ।
संस्कारैरष्टभिः कुण्डं संस्कृत्याग्निं प्रकल्पयेत् ॥

मायाबीजसमायुक्तं गोक्षीरं यत्र साधकः ।
कुण्डमध्ये भुवं दर्भैः परिमाज्योंपलेपयेत् ॥

प्रागग्रास्तु समूलेन रेखास्तिस्रस्समुल्लिखेत् ।
पांसुमुद्धृत्य रेखाणामभ्युक्षणमतःपरम् ॥

कुण्डस्य पूजनं षष्ठं सप्तमं सप्तमुद्रया ।
अस्त्रावकुण्ठनं कुण्डे संस्कारश्चाष्टमस्स्मृतः ॥

शतमण्डलनामानं कुण्डेऽग्निं स्थापयेत्ततः ।
चण्डिकापाठसंपूर्णं ब्राह्मणं दक्षिणे ततः ॥

ततस्तत्साग्निकं कुण्डं नवसूत्रेण वेष्टयेत् ।
कुण्डस्योत्तरतस्स्थाप्य प्रणीता वारिपूरिता ॥

प्रणीता पात्रधर्मेण उत्तरे वैश्वदेवताः ।
स्थापयेत्प्रोक्षणी पात्रं प्रणीतोदकपूरितम् ॥

प्रणीता पात्रतः पूर्वे स्थाप्यः पात्रगणः क्रमात् ।
आज्यस्थाली चरुस्थाली गव्यक्षरसमन्विता ॥

स्रुक्स्रुवौ च घृतं गव्यं तण्डुलाः कुशमूलकम् ।
पालाशसमिधस्तिस्रः पूर्णपात्रमतःपरम् ॥

सप्तद्वीपेश्वरीं ध्यात्वा गृहीत्वा कुशमूलकम् ।
निक्षिपेत्प्रोक्षणी पात्रे वारुणं बीजमुच्चरन् ॥

तेन दर्भसमूहेन शतसंख्येन संस्थितम् ।
क्रमात्पात्रगणं प्रोक्षेत् प्रोक्षणी पात्रवारिणा ॥

आज्यपात्रे चरुस्थाल्यां निक्षिपेच्छ्वेततण्डुलान् ।
यथाक्रमेण कर्तव्यं ततो निर्वापणत्रयम् ॥

अध्यग्निपायसं कार्यं पर्यग्निकरणं तयोः ।
सव्यं पालाशकाष्ठेच त्रिभिर्दर्भैश्च उज्वलैः ॥

स्त्रुक्स्त्रुवस्थापनं कृत्वा प्रणीतोदकसेचनैः ।
पुनः प्रतपनं कृत्वा दक्षिणे स्थापनं स्मृतम् ॥

उद्वास्य प्रथमं पूर्वा दानीयाग्नेः प्रदक्षिणम् ।
कुण्डाचार्यान्तरे स्थाप्य स्वबीजजपगौरवात् ॥

अभिघार्याज्यपात्रेण वायव्ये स्थापयेच्चरुम् ।
स्वबीजकृतसंस्काराद्धेनुमुद्रां नियोजयेत् ॥

तिस्रः पालाशसमिधो मौनी वैश्वानरे क्षिपेत् ।
कुशमूलकयुक्ताभिः प्रोक्षिण्यद्भिः प्रदक्षिणम् ॥

पर्युक्ष्यान्नं प्रणीतायां निक्षिपेत्कुशपत्रकैः ।
निधाय दक्षिणं जानुं भूमावग्निमुखे हुवेत् ॥

आन्वारब्धस्त्रुवेणाज्यं विधूमे हव्यवाहने ।
प्रजापतिर्महाकाळी महालक्ष्मी स्सरस्वती ॥

एतदग्निमुखं प्रोक्तं मायाबीजपुरस्सरम् ।
संस्रावान्प्रोक्षणी पात्रे निक्षिपेद्यज्ञबाधकान् ॥

विदध्यात्कल्पितं होममुक्तेन हविषा शनैः
तेन स्विष्टकृतस्तस्याद्धविषा प्रोज्वलेऽनले ॥

मायाबीजम् – ब्रह्माणी माहेशी कौमारी वैष्णवी वाराही नारसिंहीन्द्राणी चामुण्डायै विच्चे स्विष्टकृते स्वाहा ॥ (मन्त्रः)

— स्विष्टकृदाहुतौ —

आज्यस्य नवकन्दद्यान्माया बीजादिनामभिः ।
तत्र नन्दा भवत्याद्या द्वितीया रक्तदन्तिका ॥

शाकम्भरी तृतीयास्याद् दुर्गा भीमे च तत्परे ।
भ्रामरी काळिका चैव शिवदूती प्रजापतिः ॥

गन्धपुष्पफलोपेतां कृत्वा यज्ञात्मिकां स्रुचम् ।
ततः पूर्णाहुतिं दद्याद्घृतस्याच्छिन्नधारया ॥

नवाक्षरेण मन्त्रेण महालक्ष्मीपरायणः ।
ध्यात्वा यज्ञपुरोडाशममृतं देवदुर्लभम् ॥

प्रोक्षणीपात्रमध्यस्थान् मन्त्रेणाश्नातिसंप्रवान् ।
यस्माद्यज्ञरसात्पूता यज्वानो ब्रह्मरूपिणः ॥

तं संस्राव पुरोडाशं प्राश्नन्ति सुखपुण्यदम् ।
सलिलेन प्रणीतायास्तीर्थध्यानपरायणः ॥

करोति मार्जनं दर्भशतेन श्लोकपाठतः ।
शिवायाश्शक्तयो याश्च याभिश्च सविता सह ॥

या आपस्सत्यसन्धानास्तामे कृण्वन्तु भेषजम् ।
अभिषिञ्चेदधात्मानं चतुर्भिश्चण्डिकास्तवैः ॥

दानं दद्याद्विधानेन हेमधेनुधराधिकम् ।
नवदुर्गातव्याख्याता पापतापप्रणाशिनी ॥

सर्वैश्वर्यप्रदा भूप कुर्वतामवलंबतः ।
नवदुर्गाविधानेस्मिन् यत्फलं परिकीर्तितम् ॥

काळरात्रिविधानेपि तत्फलं लभते ध्रुवम् ।
एतत् त्रिगुणितं सर्वं नवदुर्गाजपे फलम् ॥

कथितं तदवाप्नोति नित्यं चण्डी जपे कृते ।

ऋषिरुवाच —

शरदृताविषे मासि शुक्लपक्षे नृपोत्तम ॥

प्रतिपत्तिथिमारभ्य नवचण्डीमथारभेत् ।
तोरणाढ्ये शुभे स्थाने सुवितानं स्वलंकृते ॥

पूर्वादिक्रमयोगेन दिग्देवीभ्यो बलिं हरेत् ।
गन्धपुष्पाक्षतैर्धूपैर्दीपैश्चारुभिरुत्तमैः ॥

कादम्बरी गजारूढा पुनरुष्णा च पृष्ठगा ।
कराळी महिषारूढा रक्ताक्षी प्रेतसंस्थिता ॥

श्वेतकौबेरिकाश्वस्था हरिता मृगवाहना ।
यक्षिणी सिंहपीठस्था कङ्काळी वृषवाहना ॥

सिंहपृष्ठे सुरज्येष्ठा सर्पराजाहि वाहना ।
अनेन विधिना दत्वा दिग्देवीभ्यो बलिं जपेत् ॥

नवग्रहांल्लोकपालान्दिशापालांश्च पूजयेत् ।
कलशं सर्वरत्नाढ्यं हेमवस्त्रोदकान्वितम् ॥

संप्रतिष्ठाप्य संपूज्य चण्डिकानर्चनं सारभेत् ।
पूर्वोक्तेन विधानेन गन्धपुष्पैरनुत्तमैः ॥

वस्त्रालङ्कारकस्तूरीसिन्दूरागरुकुंकुमैः ।
धूपैर्बहुविधैर्द्रव्यैर्नैवेद्यवर्णसंख्यया ॥

कृत्वाऽन्यत्पूर्ववत्सर्वं जपेदेकाग्रमानसः ।
सकृद्रहस्य संयुक्तं चण्डिकाचरितत्रयम् ॥

कुमारीविप्रमुख्यांश्च भोजयेद्वृद्धिपूर्वकम् ।
यदाद्ये दिवसे कुर्याच्चण्डिकापूजनादिकम् ॥

द्विगुणं तद्द्वितीयेऽह्नि त्रिगुणं तत्परेऽहनि ।
नवमीतिथिपर्यन्तं वृद्ध्या पूजाजपादिकम् ॥

एकाहारं व्रतं कुर्यात् सत्यादिनियमैर्वृतः ।
कृत्वा होमादिकं सर्वं नवदुर्गाविधानवत् ॥

वित्तशाठ्यं परित्यज्य कुर्यादाचार्यतोषणम् ।
वस्त्रांगुळीयभूधेनुवाजिहोमप्रदानतः ॥

अशक्तौ निष्कमेकं तु दद्यादस्मै प्रयत्नतः ।
श्रुणु चास्य फलं भूप यो वै कश्चिदनेन वै ॥

विदधाति विधानेन जपेत्तु नवचण्डिकाम् ।
इन्द्रब्रह्मादयो देवास्तमायान्ति प्रसेवितुम् ॥

अपुत्रो लभते पुत्रान् निर्धनस्तु धनी भवेत् ।
व्याधयस्तु क्षयं यान्ति शत्रवश्चैव दारुणाः ॥

न तस्यास्ते भयं किञ्चिद्राजचोराग्निवारिणाम् ।

ऋषिरुवाच —

शतचण्डीविधानं ते यथावत्कथयाम्यहम् ॥

सुघोरा यामवावृष्टौ भूकम्पे चातिदारुणे ।
परचक्रभये तीव्रे क्षयरोगे समुच्छ्रिते ।।

राज्यादिप्राप्तिकार्ये तु आयुष्मत्सु प्रजाप्तये ।
ग्रहोत्पातादिनाशाय पञ्चविंशतियोजने ।।

देशे सर्वत्र शान्त्यर्थं चण्डी शतमुखं यजेत् ।
शिवालये समे देशे चतुर्द्वारोपशोभिते ।।

पताकालंकृतं कुर्यान्मण्टपं वेदिभूषितम् ।
तत्र कुण्डं प्रकर्तव्यमुक्तलक्षणसंयुतम् ।।

सदाचारास्सुशीलाश्च धीमन्तस्सत्यवादिनः ।
चण्डिकापाठसंपूर्णा दयावन्तो जितेन्द्रियाः ।।

इत्थं लक्षणसंयुक्ता दंभमोहविवर्जिताः ।
दशविप्रास्समभ्यर्च्या महालक्ष्मीस्वरूपिणः ।।

मधुपर्कविधानेन यथावत्तद्ददाम्यहम् ।
श्रीपर्णवृक्षपीठानि हस्तमात्राणि मानतः ।।

दशांगुळसमुच्छ्रायसहितानि समानि च ।
स्रुवः स्रुचा समायुक्तः खादिरो लक्षणान्वितः ।।

सप्तविंशतिदर्भाणां वेण्यग्रग्रन्थिभूषिताः ।
विष्टरास्सर्वयज्ञेषु लक्षणं परिकीर्तितम् ।।

शुद्धोदकेन संपूर्णाः पाद्यार्थं घटिकास्मृताः ।
शंखाश्चार्घ्यप्रदानाय गन्धपुष्पफलान्विताः ।।

दूर्वोदकसमायुक्ताः स्थापनीयाः पृथक् पृथक् ।
ताम्रान्कमण्डलूंश्चैवाचमनोदकपूरितान् ॥

संपुटान्मधुपर्कार्थं कांस्यान् दध्यादिपूरितान् ।
महांत्यर्हणि वस्त्राणि मुद्रिका घनभूषणम् ॥

मयूरव्रतछत्राणि सोष्णीषाणि समाहरेत् ।
पादुकाश्चाहरेत्तत्र ताम्रभूषणभूषिताः ॥

अन्यत् स्मार्तं यदप्युक्तं मधुपर्कस्य पूजनम् ।
शतचण्डीमखे कर्ता प्रयत्नेन तदाहरेत् ॥

स्मार्तेन विधिना सर्वं मधुपर्कस्य पूजनम् ।
कृत्वा फलमवाप्नोति महायज्ञार्पणोपमम् ॥

अन्येभ्यो मधुपर्कस्य विप्रेभ्यः पूजनं समम् ।
विद्यात्तद्द्विगुणं दद्यादाचार्याय सुभक्तिमान् ॥

अन्यैर्द्विजैस्समं यत्र देशिकस्य प्रपूजनम् ।
तस्मिन् यज्ञे फलं सत्यमनावृष्टौ यथाक्षितेः ॥

अर्चितास्ते द्विजश्रेष्ठास्सन्तुष्टाः पूर्णमानसाः ।
यजमानं सपत्नीकं सुतबन्धुसमन्वितम् ॥

उपवेश्यासने च्छन्ने कलशाग्रविभूषिते ।
वेदमन्त्राक्षतैः पूर्णं कुर्वन्ति स्वस्तिवाचनम् ॥

कृतस्वस्त्ययनो विप्रैर्वेदवादित्रनिस्वनैः ।
चण्डिकामण्टपं गच्छेत्स्वयं च परिवारवान् ॥

पश्चिमद्वारमार्गेण प्रविश्य क्रतुमण्टपम् ।
दद्याच्च पूजनानुज्ञां देशिकाय कृताञ्जलिः ॥

देशिकस्सर्वमन्त्रज्ञो नवभिर्ब्राह्मणैस्सह ।
दिग्देवींश्च ग्रहांश्चैव लोकपालसमन्वितान् ॥

दिशापालांश्च संपूज्य कलशं स्थाप्य पूजयेत् ।
मण्टपस्य चतुर्दिक्षु दत्वा भूतबलिं बहिः ॥

मण्टपे कलशौ द्वौ द्वौ द्वारे द्वारे निवेशयेत् ।
वासितोदकसंपूर्णमाम्रपल्लवशोभितम् ॥

उपस्पृश्योदकं स्मृत्वा चण्डिकां देववन्दिताम् ।
उपविश्यासने वेद्यां बध्वा पद्मासनं दृढम् ॥

प्राणायामविशुद्धात्मा दशैर्न्यासभूषणः ।
चण्डिकापूजनं कुर्याद्विशेषेण समन्वितः ॥

कस्तूरीकुंकुमं जात्यं सकर्पूरं सचन्दनम् ।
तत्पलद्वयसंपूर्णमनुलेपनमाहरेत् ॥

दिव्यवस्त्रमलंकारं हेमगद्याणकत्रयम् ।
लक्षपुष्पचतुर्थांशं गुग्गुलोश्च पलत्रयम् ॥

दीपानां विंशतिं श्रेष्ठं मण्टपे जपसाधनम् ।
कुडुपौ द्वौ हविष्यान्नं नैवेद्यं सरसं शुचि ॥

तांबूलानां सकर्पूरं शतद्वयमनुत्तमम् ।
नवचण्डीविधानोक्तं महालक्ष्मीप्रपूजनम् ॥

नवभिर्ब्राह्मणैस्सार्धं कृत्वाऽऽचार्यो द्विजोत्तमः ।
दद्या च नवविप्रेभ्य आचार्यश्चण्डिकामनः ॥

कार्यजातप्रसिद्ध्यर्थमनुज्ञां मानपूर्वकम् ।
ततोनुज्ञामनुप्राप्य वैधामाचार्यसन्निधौ ॥

मृद्वासनेषु संविष्टास्सन्तुष्टाश्च सुनिश्चलाः ।
न्यासध्यानसमयुक्ता नासाग्रमवलोकिनः ॥

सुगन्धपुष्पमालाढ्याश्चण्डिकाचरितत्रयम् ।
सरहस्यमृषिच्छन्दो देवताशक्तिसंयुतम् ॥

बीजतत्वसमोपेतमुपांशुगणसंयुतम् ।
जपेयू रूपमेकैकं मौनिनस्त्यक्तमत्सराः ॥

समुत्थाय ततः कुर्युरेकां सर्वे प्रदक्षिणाम् ।
चण्डिकां च नमस्कुर्युः परितोष्य पुनः पुनः ॥

उपविश्यासनेषूक्तैः श्लोकैस्सर्वार्थसाधकैः ।
प्रार्थयेयुः प्रार्थचफलं महालक्ष्मीं दृढव्रताः ॥

कुमारीदशकं भोज्यं विप्रा भोज्या दशोत्तमाः ।
महाकाळ्या महालक्ष्म्यास्सरस्वत्या जपं जपन् ॥

भोजयेत्परया भक्त्या देशिकादि दशद्विजान् ।
ततो बन्धुजनोपेतो भुञ्जीत च सक्रुन्नरः ॥

सत्कथादि सुगीतैश्च सर्ववादित्रनिस्वनैः ।
पूजनीयैः प्रेक्षणीयैर्वेदपाठैर्निशां नयेत् ।

द्वितीये दिवसे स्नाता विधिवत्ते द्विजा दश ।
चण्डिकातर्पणं कुर्युस्सम्पूर्णं ध्यानपूर्वकम् ।।

सर्वे पृथक्पृथक्कृत्वा दिग्देवीपूजनादिकम् ।
बहिर्भूतबलिं दत्वा कृत्वा भूतप्रदक्षिणम् ।।

पुष्पागारे महारम्ये स्वस्थमानससंस्थिताः ।
जपन्ति जयचण्डीति यावद्दुर्गाप्रपूजनम् ।।

पूर्वस्मात्पूर्ववत्कुर्याद्द्विगुणं पूजनं क्रमात् ।
आचार्यस्सुस्थिरश्शान्तश्चण्डिकायाः प्रतोषणम् ।।

सुकृते पूजने विप्रा जपेयुः द्विगुणं जपम् ।
द्विगुणं च प्रकर्तव्यं कुमारीद्विजतोषणम् ।।

कार्यं जागरणं रात्रावुक्तैस्सर्वैर्महोत्सवैः ।
चण्डिकापूजनं जाऽप्यं कुमारीद्विजपूजनम् ।।

तृतीयेऽह्नि कर्तव्यं त्रिगुणं च सजागरम् ।
चतुर्थे दिवसे सर्वं सम्यक्कुर्युश्चतुर्गुणम् ।।

महाजागरणोपेतं होमं स्यात्पञ्चमेहनि ।
पायसं सर्पिषा युक्तं तिलैश्शुक्लैर्विमिश्रितम् ।।

जुहुयुश्चोक्तमार्गेण दशांशेन नृपोत्तम ।
रुद्राध्यायपथा होमं मन्त्रेणैकेन साधयेत् ।।

चण्डीसप्तशतीजाप्ये होममन्त्रो नवाक्षरः ।
कथितः पूजनाध्याये तस्माद्धोमो भवेदिह ।।

नमो देव्यै महादेव्यै शिवायै सततं नमः ।
नमः प्रकृत्यै भद्रायै नियताः प्रणताःस्म ताम् ॥

अथवा यो भवेद्धोमे श्लोकस्तत्र प्रकीर्तितः ।
जपहोमैस्तु संपूर्णं दिग्देवीनां शतं शतम् ॥

होतव्यो नाममन्त्रैश्च हविषैतेन सादरम् ।
शतं शतं क्रमादेवं समिदाज्यचरूंस्तिलान् ॥

आचार्यादिद्विजास्सर्वे जुहुयुश्च शतं शतम् ।
होमे संपूर्णतां प्राप्ते नमस्कृत्वेष्टदेवताम् ॥

चण्डिकां देवदेवानामृषीणां वन्दितां पराम् ।
स्तंभद्वये स्रुचं कृत्वा यजमानस्स्वलंकृतः ॥

घृतकुम्भदशांशेन दद्यात्पूर्णाहुतिं स्वयम् ।
मूर्ध्नि सम्मंत्र्य पीठेन नवाक्षरजपेन च ॥

प्राशनं मार्जनाद्यं च नवदुर्गाविधानवत् ।
जपं हुतं समावेद्य चण्डिकायै मनोरथम् ॥

ब्रह्मणे निष्कषट्काढ्यं दद्याद्गोमिथुनद्वयम् ।
यस्याः प्रभावमतुलं श्लोकमुक्त्वा कृताञ्जलिः ॥

दद्याद्गोमिथुनान्यष्टावाचार्याय तु भक्तिमान् ।
चतुर्विंशतिसङ्ख्याकैर्हेमगद्याणकैस्सह ॥

एकैकमष्टविप्रेभ्यो दद्याद्गोमिथुनं समम् ।
निष्कत्रयसमायुक्तं वस्त्रालङ्कारभूषितम् ॥

सुस्थितं स्वासने शान्तं यजमानं महोत्सवम् ।
कुंकुमाक्षतदूर्वाश्च सुगन्धीचन्दनं दधि ॥

आदायादाय ते विप्रा आचार्याद्यास्सुपूजिताः ।
स्तोत्राणां तु चतुर्मन्त्र्यैर्महालक्ष्मीपरायणाः ॥

एकैकं श्लोकमुच्चार्य दद्युराशिषमुत्तमाम् ।
सभार्यस्ससुतः पूर्णो लब्धाशीर्वादमण्डलः ॥

रक्तपुष्पाञ्जलिं दद्याच्चण्डिकायै विसर्जने ।
भूमिदानं ततः कुर्यात् पुण्यवादित्रनिस्वनैः ॥

प्रविशेच्छांन्तिपाठैस्तु तोरणाढ्यं स्वसाळयम् ।
शतचण्डीवितानस्य कृतेन सुकृतेन तु ॥

महालक्ष्मीर्ददात्यस्मै त्रैलोक्यसुखमुत्तमम् ।
यद्यत्कार्यं समुद्दिश्य क्रियते शतचण्डिका ॥

ततस्तस्य महालक्ष्मीस्सर्वमाशु प्रयच्छति ।
चरितत्रयजाप्यस्य चण्डिकायै नरोत्तम ॥

सरहस्यं च नामानि ब्रह्मोक्तानि वदाम्यहम् ।
महाविद्या महायन्त्रं महासप्तशतीति च ॥

मृतसञ्जीविनी नाम चतुर्थं संप्रकीर्तितम् ।
पञ्चमं च महाचण्डी षष्ठं चैव चतुष्पदी ॥

एतानि यो विजानाति नामानि नृपसत्तम ।
जपं विना भवेच्चण्डी वरदा तस्य सिद्धिदा ॥

शतमादौ शतं चान्ते जपेन्मन्त्रं नवाक्षरम् ।
चण्डीसप्तशतीमध्ये संपुटोयमुदीरितः ॥

सकामस्संपुटं जप्यान्निष्कामस्संपुटं विना ।
एतद्गोप्यतरं तत्वं चण्डिकाजपसिद्धिदम् ॥

ऋषिरुवाच —

सर्वयज्ञोत्तमं भूप कुमारीपूजनं श्रृणु ।
कृते तस्मिन् महालक्ष्मीरचिरेण प्रसीदति ॥

आमन्त्रयेद्दिने पूर्वे कुमारीं भक्तिपूर्वकम् ।
पूजादिने समाहूय कुमारीं मायदेवताम् ॥

मण्डले चरणौ तस्याः क्षाळयेदुष्णवारिणा ।
अर्चयेद्धेमपात्रेण वारिपुष्पाक्षतैस्समम् ॥

सुवितानें शुभे स्थाने पङ्कजोपरिपीठके ।
उपवेश्य कुमारीं तां स्वांगन्यासं समाचरेत् ॥

आत्मानं विधिवत्पूज्य क्रोधदर्पविवर्जितः ।
अथ ध्यात्वा कुमारीं तां महालक्ष्मीस्वरूपिणीम् ॥

मातुलुङ्गं गदां खेटं पात्रं पीयूषपूरितम् ।
दक्षिणाधःक्रमाद्धस्तैर्बिभ्रतीं सर्वमङ्गळाम् ॥

सुतप्तहेमवर्णाङ्गामाद्याम्मायेशपूजिताम् ।
नवाक्षरेण मन्त्रेण सुसिद्धेन समाचरेत् ॥

दद्यादाचमनं तस्यै दद्याद्वस्त्रं च कञ्चुकम् ।
सकङ्कणांगुळीयानि कर्णालंकरणे शुभे ॥

ग्रैवेयकं प्रदर्शं च चन्दनेन विलेपयेत् ।
पूजयेत्पुष्पमालाभिर्दिव्यैर्धूपैस्सुधूपयेत् ॥

कुर्यादारात्रिकां राजन्नुदयं वाचयतां मुहुः ।
भोजयेद्भक्तिभावेन पायसं शर्कराघृतम् ॥

सुपक्वान्नानि चान्यानि भोजयेल्लोभवर्जितः ।
फलमिक्षुस्स्वादुं वान्यदस्यै देयं पुनः पुनः ॥

यावत्सा भोजनं कुर्यात्तावत् स्तोत्रं जपेत्सुधीः ।
दद्यादाचमनं तस्यै ताम्बूलं च समर्पयेत् ॥

तोषयेद्विधिनानेन कुमारीं प्रणतोऽसकृत् ।
प्रदक्षिणनमस्कारान् कृत्वा भूयः कृताञ्जलिः ॥

विसर्जयेत्कुमारीं तां स्वगृहं सत्वनिर्भरः ।
अनेन विधिना भक्त्या कुमारीं योऽभिपूजयेत् ॥

सपृथ्वीराज्यमादाय शिवसायुज्यमाप्नुयात् ।
यं यं कामयते कामं देवानामपि दुर्लभम् ॥

कुमारीपूजनं कृत्वा तं तमाप्नोत्यसंशयः ।
ब्रह्मविष्णुमहेशानां कुमारी परमाकळा ॥

तत्पूजनेन राजेन्द्र त्रैलोक्ये चापराजितः ।
सम्यक् क्रतुफलं तस्य चतुर्वर्गफलं भवेत् ॥

सर्वतीर्थफलं तस्य यः कुमारीं प्रपूजयेत् ।
तस्मात्पूजय भूपाल कुमारीं पूतमानसः ॥

स्वराज्यं प्राप्स्यसेऽवश्यं मा तेऽभूदत्र संशय इति ।

रुद्रयामळे —

सर्वोपद्रवनाशाय शतचण्डीं समारभेत् ॥

षोडशस्तंभसंयुक्तं मण्टपं पल्लवोज्वलम् ।
वसुकोणयुतां वेदीं मध्ये कुर्यात्त्रिभागतः ॥

पक्वेष्टकाकृतां रम्यामुच्छ्राये हस्तसंयुताम् ।
पञ्चवर्णरजोभिश्च प्रकुर्यान्मण्टपं शुभम् ॥

पञ्चवर्णवितानं च किङ्किणीजालशोभितम् ।
आचार्येण समं विप्रान् वरयेद्दशसुव्रतान् ॥

ईशान्यां स्थापयेत्कुम्भं पूर्वोक्तविधिनाऽऽचरेत् ।
वारुण्यां च प्रकर्तव्यं कुण्डं लक्षणलक्षितम् ॥

मूर्तिं देव्याः प्रकुर्वीत सुवर्णस्य पलेनवै ।
तदर्धेन तदर्धेन तदर्धार्धेनवा पुनः ॥

अष्टादशभुजां देवीं कुर्याद्वाष्टभुजामपि ।
पट्टवस्त्रयुगच्छन्नां देवीं मध्ये निधाय च ॥

देवीं संपूज्य विधिवज्जपं कुर्युर्दशद्विजाः ।
शतमादौ शतं चान्ते जपेन्मन्त्रं नवाक्षरम् ॥

चण्डीं सप्तशतीं मध्ये संपुटोयमुदाहृतः ।
एकं द्वे त्रीणि चत्वारि जपेद्दिनचतुष्टयम् ॥

रूपाणि क्रमशस्तद्वत् पूजनादिकमाचरेत् ।
पञ्चमे दिवसे प्रातर्होमं कुर्याद्विधानतः ॥

आज्यं च पायसं दूर्वास्तिला शुक्लान् यवानपि ।
चण्डीपाठस्य होमे तु प्रतिश्लोकं दशांशतः ॥

होमं कुर्याद्ग्रहादिभ्यः समिदाज्यचरून् क्रमात् ।
हुत्वा पूर्णाहुतिं दद्याद्विप्रेभ्यो दक्षिणांक्रमात् ॥

कपिलां गां नीलमणिं श्वेताश्वं छत्रचामरे ।
अभिषेकं ततः कुर्युर्यजमानस्य ऋत्विजः ॥

एवं कृते महेशान सर्वसिद्धिः प्रजायते ।

तत्रैव —

सहस्रचण्डीं विधिवच्छृणु विष्णो महामते ॥

राज्यभ्रंशेह्यनावृष्ट्यां जनमारे महाभये ।
गजमारेऽश्वमारे च परचक्रभये तथा ॥

इत्यादि विविधे दुःखे क्षयरोगादिजे भये ।
सहस्रचण्डिकापाठं कुर्याद्वा कारयेत्तथा ॥

इति रुद्रयामळे घटतन्त्रे देवीमाहात्म्ये नित्यचण्डी शतचण्ड्यादि
विधानकथनं नाम नवत्यूत्तरशततमः पटलः ।

श्रीचण्डिकापरदेवतार्पणमस्तु ।



— शतचण्ड्यादि चण्डीकलशस्थापनविधिः —

ाच —

शतचण्डीविधानन्ते यथावत्कथयामिते ।
सुघोरायामनावृष्टयां भूकम्पे च सुदारुणे ॥

परचक्रभये तीव्र लोकक्षय उपस्थिते ।
राज्यावाप्त्यादि कार्येषु शुभेषु सुतजन्मसु ॥

महोपघातनाशाय पञ्चविंशतियोजने ।
देशे सर्वत्र शान्त्यर्थं शतचण्डीमिमां जपेत् ॥

त्रायं प्रयोगः । यथोक्तलक्षणसम्पन्नो यजमानः शिवालयसमीपे चतु-शे षोडशस्तम्भनिर्मितं चतुर्द्वारं चतुष्कपताकं पञ्चवर्णवितानकिङ्किणी-डतं दीपविंशत्यलंकृतं सुगन्धवासितं मण्डपं कारयित्वा तत्र मध्ये युतां पक्वेष्टकारचितां रम्यां हस्तोच्छ्रितां हस्तचतुष्टयविस्तृतां वेदिं ईशान्यां हस्तोच्छ्रितं हस्तत्रयपरिमितं समस्तायोनिमेखलात्रयसहितं नं कुण्डं विरच्य ततः चण्डिकाचारसम्पन्नं कुलीनं सत्यवादिनं दयावन्तं ं ब्राह्मणमाचार्यं एवं विधान् जापकानपि वृणुयात् आचार्यादीन् मधु-मस्सम्पूज्य तदनुज्ञया यजमानः शुभासने समुपविष्टस्स्वलंकृत-कः कृतस्वस्त्ययनः सुतबन्धुसुहृत्सहितो वेदघोषनानावादित्रनिस्वनपूर्वकं सह चण्डिकामण्टपं गत्वा पश्चिमद्वारेणान्तः प्रविश्य कृताञ्जलिराचा-ण्डकापूजार्थमनुज्ञां दद्यात् तत आचार्यः प्राप्तानुज्ञः श्रीपर्णीनिर्मितपीठे स्समुपविश्य पुण्याहवाचनं कृत्वा देशकालौ संकीर्त्य यजमानस्याभीष्ट-: अनावृष्टिदोषनिवृत्यर्थं परचक्रभयनिवारणार्थं राज्यावाप्त्यादि सर्व-च्छासिध्यर्थं इह जन्मनि श्रीचण्डिकाप्रीतिद्वारा सर्वापच्छान्तिपूर्वक त्रपुलधनपुत्रपौत्राद्यनवुच्छिन्नसन्ततिवृद्धिस्थिरलक्ष्मीकीर्तिलाभशतृपरा-ार्वाभीष्टसिद्धयर्थं शतचण्डीमखाख्यं कर्म करिष्ये इति सङ्कल्प्य

दिग्देवीभ्यो बलिं दद्यात् ॐ इन्द्रयै नमः इमां बलिं गृह्ण गृह्ण हुं फट् स्वाहा इति मन्त्रेण दशदिक्षु बलिं दद्यात्। अं अग्निदेवतायै नमः। वां वाराह्यै नमः। खं खड्गधारिण्यै नमः। वां वारुण्यै नमः। मृं मृगवाहनायै नमः। कौं कौमार्यै नमः। शूं शूलधारिण्यै नमः। ब्रं ब्रह्माण्यै नमः। वं वैष्णव्यै नमः। ततो मण्डपे क्वचिद्ग्रहमण्डले वैदिकमन्त्रैर्नवग्रहदेवताः प्रत्यधिदेवतासहिताः लोकपालांश्च सम्पूजयेत् ततो वेद्यां प्रधानकुम्भं संस्थापयेत् कलशस्थापनाङ्गत्वेन अखण्डदीपस्थापनं करिष्ये अग्निनाऽग्निस्समिध्यते कविर्गृहपतिर्युवा हव्यवाड्जुह्वास्यः इति मन्त्रेण दीपान् प्रज्वाल्य दशवह्निकळाः पूजयेत्। अग्निं दूतं वृणीमहे होतारं विश्ववेधसं अस्य यज्ञस्य सुक्रतुं यं धूमार्चिकळायै नमः। रं ऊष्मकळायै नमः। लं ज्वलनीकळायै नमः। शं विश्फुलिङ्गनीकळायै नमः। षं सुश्रीकळायै नमः। सं सुरूपाकळायै नमः। हं कपिलाकळायै नमः। ळं हव्यवाहिनीकळायै नमः। क्षं कव्यवाहिनीकळायै नमः। इति सम्पूजय षोडशोपचारैरभ्यर्च्य प्रार्थयेत् ॥

अखण्डदीपकं देव्याः प्रीतये पञ्चरात्रकम्।
उज्वालयाम्यहोरात्रमेकचित्तो धृतव्रत इति ॥

तत्र कुम्भस्थापनं करिष्य इतिसङ्कल्प्य भूमिर्भूम्नेतिवेदिकास्थलमभिमन्त्रयेत् भूमिर्भूम्नद्यौर्वरिणान्तरिक्षं महित्वा उपस्थेते देव्यदितेग्निमन्नादमन्नाद्यायादधे आयं गौः पृश्निरक्रमीदसनन्मातरं पुनः पितरं च प्रयन्सुवः त्रिंशद्धाम विराजति वाक्पतंगाय शिश्रिये प्रत्यस्यवहद्युभिः अस्य प्राणादपानत्यन्तश्चरति रोचनाव्यख्यन्महिषस्सुवः इति वेदीमभिमन्त्र्य मूलमुच्चर्य गायत्र्याऽद्भिरवोक्ष्य तत्र भूमौ या जाता ओषधयो देवेभ्यस्त्रियुगं पुरा मन्दामिबभ्रूणामहागं शतं धामानि सप्त च शतं वो अम्बधामानि सहस्रमुतवोरुहः अधाशतक्रत्वोयूयमिमम्मे अगदं कृतपुष्पावतीः प्रसूवतीः फलिनीरफला उत अश्वा इव सजित्वरीर्वीरुधः पारयिष्टवः ओषधीरिति मातरस्तद्वो देवीरुपब्रुवे रपागं सिविघ्नतीरितरपः ॥ १ ॥ चातयमानाः अश्वत्थेवोनिषदनं पर्णेवोवसतिः

कृता गोभाज इत्किलासथयत्सववधपूरुषं यदह् वाजयन्निमा ओषधीर्हस्त आदधे अत्मायक्ष्मस्य नश्यति पुरा जीवगृभोयथा यदोषधयस्संगच्छन्ते राजानस्समिताविव विप्रस्स उच्यते भिषश्रक्षोहामीव चातनः निष्कृतिर्नामवो मातायायूयग्ग्स्थ सङ्कृतीः सराः पतत्रिणी ॥ २ ॥ स्थनयदाम यति निष्कृता अन्यावो अन्यामवत्व नान्यान्यस्या उपावत तास्सर्वा ओषधय स्संविदाना इदं मे प्रावता वचः उच्छुष्मा ओषधीनां गावो गोष्ठादि वेरते दनगं सनिष्यन्ती नामात्मानं तव पूरुषा अतिविश्वाः परिष्ठास्तेन इव व्रजमक्रमुः ओषधयः प्राचुच्यवुर्यत्किञ्चत तनुवागं रपः याः ॥ ३ ॥ त आतस्थुरात्मानं या आविविशुः परुः परुः तास्ते यक्ष्मं विभाधन्तामुग्रोमध्यम शीरिव साकं यक्ष्म प्रपतश्येनेन किकिदीविना साकं वा तस्यध्राज्या साकं नश्यनिहकया अश्वावतीगं सोमवती मूर्जयन्तीमुदोजसं अवित्सि सर्वा ओषधिरस्मा अरिष्टतातये याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः बृहस्पती प्रसूतान्तावो मुञ्च त्वगं ह सः याः ॥ ४ ॥ ओषधयस्सोमराज्ञीः प्राविष्टाः पृथिवीमवुतासां त्वमस्युत्तमा प्रणो जीवातवे सुव अप पतन्तीरवदन्तिव ओषधयः परी यं जीव मश्नवाम हैनसरिष्यातिपूरुषः याश्चेदमुपश्रुण्वन्ति याश्च दूरं परागताः इह संगत्यतास्सर्वा अस्मे संदत्त भेषजं मानो ऋषत्खनिता यस्मै चाहं खनामिषः द्विपच्छतुष्पदस्माकगं सर्वमस्त्वनातुरं ओषधयस्संवदन्ते सोमेन सह राज्ञा यस्मै करोति ब्राह्मणस्तगं राजन् पारयामसि इत्यनुवाकेन श्यामाक यव गोधूम नीवार प्रियंगु तिलमाषरूप सप्तधान्यराशीन् परिकल्प्य कूर्मचक्रं ध्यात्वा तत्राग्निकळाः पूजयेत् ॐ ऐं ह्रीं श्रीं ऐं ह्रीं क्लीं अं अग्निमण्डलाय धर्मप्रददशकळात्मने चण्डिकामहालक्ष्मि त्रिपुरसुन्दरीदेवता कलशाधाराय नमः — इति तत्र पुष्पाञ्जलिं निक्षिप्य अग्निं दूतं वृणीमहे होतारं विश्ववेदसं अस्य यज्ञस्य सुक्रतुं रां रीं रूं रैं रौं रः धूम्रार्चिराद्या दशवह्निकळा इहागच्छतागच्छतेत्यग्निमण्डलत्वेन विभाव्य तत्र पश्चिमादि प्रादक्षिण्येन दशवह्निकलाः पूजयेत् ओं ऐं ह्रीं श्रीं ऐं ह्रीं क्लीं यं धूम्रार्चकळायै नमः। ओं ६ रं ऊष्माकळायै नमः। ओं ६ लं ज्वलिनीकळायै नमः। ओं ६ वं ज्वालिनीकळायै नमः। ओं ६ शं विस्फुलिङ्गिनीकळायै नमः। ओं ६ षं सुश्रीकळायै

नमः । ओं ६ सं सुरूपकळायै नमः । ओं ६ हं कपिलाकळायै नमः । ओं ६ ळ हव्यवाहकळायै नमः । ओं ६ क्षं कव्यवाहकळायै नमः । इति सकुंकुम-पुष्पाक्षतैर्दशकळास्संपूज्य अथ स्वर्ण रजतताम्रारकूटमयं मृण्मयं दृढं कलशं वा समादाय अस्त्राय फडिति प्रक्षाळ्य तन्तुं तन्वन् रजसोभानुमन्विहि ज्योति-ष्मतः पथो रक्ष धिया कृतान् अनुल्पणं वयत जोगुवामपोमनुर्भवजनया दैन्यं जनं इति मन्त्रेण तन्तुवेष्टितं कृत्वा । गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीं ईश्वरीग् सर्वभूतानां तामिहोपह्वये श्रियमिति मन्त्रेण अष्टगन्धैरनुलिप्य धूरसि धूर्वधूर्वन्तं धूर्वतं योस्मान् धूर्वतितं धूर्वयं वयं धूर्वामस्त्वं देवानामसीति धूपवासितं कृत्वा ओं ऐं ह्रीं श्रीं ऐं ह्रीं क्लीं हं सूर्यमण्डलायार्थप्रद द्वादश-कळात्मने चण्डिकामहालक्ष्मी त्रिपुरसुन्दरी देवता कलशाय नमः । इति मन्त्रेण कलशं प्रतिष्ठाप्य आकलशेषु धावति पवित्रे परिषिच्यते उक्थैर्यज्ञेषु वर्धते ।। १ ।। आकलशेषु धावति श्येनो वर्म विगाहते अभिद्रोणाकनिक्रदत् ।। २ ।। आकलशेष्विति मन्त्रद्वयेन कलशमभिमन्त्र्य आसत्येन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यंच हिरण्ययेन सहिता रथेनादेवो याति भुवना विपश्यन् ह्रां ह्रिं ह्रूं ह्रैं ह्रौं ह्रः तपिन्याद्या द्वादशदिनेशकळा इहागच्छता गच्छतेति तं कलशं अपरिमितदिव्यतेजः पुञ्जीकृत सूर्यमण्डलत्वेन विभाव्य तत्र सूर्यस्य द्वादशकळाः ओं ऐं ह्रीं श्रीं ऐं ह्रीं क्लीं कं भं तपिनीकळायै नमः । ओं ६ खं बं तापिनी-कळायै नमः । ओं ६ गं फं धूम्राकळायै नमः । ओं ६ घं पं मरीचिकळायै नमः । ओं ६ ङं नं ज्वालिनीकळायै नमः । ओं ६ चं धं रुचिकळायै नमः । ओं ६ छं दं सुषुम्नाकळायै नमः । ओं ६ जं थं भोगदाकळायै नमः । ओं ६ झं तं विश्वाकळायै नमः । ओं ६ ञं णं बोधिनीकळायै नमः । ओं ६ टं ढं धारुणीकळायै नमः । ओं ६ ठं डं क्षमाकळायै नमः । इति द्वादश-दिनेशकळास्सम्पूज्य गङ्गादिमहानदीजलमानीय ओं ऐं ह्रीं श्रीं ऐं ह्रीं क्लीं मंसोममण्डलाय कामप्रद षोडशकलात्मने चण्डिका महालक्ष्मी त्रिपुरसुन्दरी देवताकलशामृताय नमः । इति जलमापूर्य आप्यायस्व समेतुते विश्वतस्सोम वृष्णियं भवावाजस्य सङ्गथे सां सीं सूं सैं सौं सः अमृताद्याष्षोडशसोमकळा

इहा गच्छतागच्छतेत्यमितशीतलतेजः पुञ्जीकृतसोमखण्डलत्वेन तत्कलशामृतं विभाव्य धेनुयोनिमुद्रे प्रदर्श्य। गङ्गेचेति मन्त्रेण तीर्थावाहनं कुर्यात्। गङ्गेच यमुनेचैव गोदावरी सरस्वति नर्मदे सिन्धुकावेरि जलेऽस्मिन् सन्निधिं कुरु। इमम्मे गङ्गे यमुने सरस्वति शुतुद्रिस्तोमगं सच तापरुष्णिया असिक्निया मरुद्वृधे वितस्तयार्जीगीये श्रुणुह्यासु षोमया ऋतंच सत्यंचाभीद्धास्तपसोध्यजायत ततो रात्रिरजायत ततस्समुद्रो अर्णवः समुद्रादर्णवादधि संवत्सरो अजायत अहोरात्राणि विदधद्विश्वस्य मिषतो वशी सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत् दिवं च पृथिवी चान्तरिक्षमथोसुवः यत्पृथिव्यागं रजस्वमान्तरिक्षे विरोदसी इमागुंस्तदापो वरुणः पुनात्वघमर्षणः पुनन्तु वसवः पुनातु वरुणः पुनात्वघमर्षणः एष भूतस्य मध्ये भुवनस्य गोप्ता एष पुण्यकृतां लोकानेष मृत्योर्हिरण्मयं द्यावा पृथिव्योर्हिरण्मयगं सगं श्रृतगं सुवः सनस्सुवस्सगं शिशाधि आर्द्रं ज्वलति ज्योतिरहमस्मि। ज्योतिर्ज्वलति ब्रह्माहमस्मि योह मस्मि ब्रह्माहमस्मि अहमस्मि ब्रह्माहमस्मि। अहमेवाहं मां जुहोमि स्वाहा। अकार्यकार्यवकीर्णीस्तेनो भ्रूणहा गुरुतल्पगः वरुणो सामघमर्षण स्तस्मात्पापात्प्रमुच्यते रजोभूमिस्तथागं रोदयस्व प्रवदन्ति धीराः आक्रान्त्समुद्रः प्रथमे विधर्मन् जनयन् प्रजाभुवनस्य राजा। वृषा पवित्रे अधिसा नो अव्ये बृहत्सोमोवा वृधे सुवानो इन्दुः। आपो वा इदगं सर्वं विश्वा भूतान्यापः प्राणावा आपः पशव आपोन्नमापोमृतमापस्सम्राडापो विराडापस्स्वराडापश्छन्दाग् स्यापो जोतीग्ष्यापो यजूग्ष्यापस्सत्यमापस्सर्वा देवता आपो भूर्भुवस्सुवराप ओं। इति मन्त्रेणाभिमन्त्र्य अविलङ्घवारुणसूक्तपारायणं कृत्वा गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीं ईश्वरीगं सर्वभूतानां तामिहोपह्वये श्रियमिति गन्धं विक्षिप्य ओं ऐं ह्रों श्रीं ऐं ह्रीं क्लीं ओं नमो भगवति अशेषतीर्थालवाले शिवजटाधिरूढे गङ्गे गङ्गाम्बिके स्वाहा।

सर्वानन्दकरीमशेषदुरितध्वंसीं मृगाङ्कप्रभा –
त्र्यक्षामूर्ध्वकरद्वयेन दधतीं पाशं सृणिं च क्रमात्।

दोर्भ्यां चामृतपूर्णकुम्भमपरे मुक्ताक्षमालाधरां
गङ्गासिन्धुसरिद्वरादिरचितां श्रीतीर्थशक्तिं भजे ॥

इति ध्यात्वा सकुंकुमाक्षतपुष्पाञ्जलिं जले निक्षिप्य चन्द्रस्य षोडशकळाः पूजयेत् । ओं ऐं ह्रीं श्रीं ऐं ह्लीं क्लीं अं अमृताकळायै नमः । ओं ६ आं मनदाकळायै नमः ओं ६ इं पूषाकळायै नमः ओं ६ ईं तुष्टिकळायै नमः । ओं ६ उं पुष्टिकळायै नमः । ओं ६ ऊं रतिकळायै नः । ओं ६ ऋं धृतिकळायै नमः । ॠं ६ शशिनीकळायै नमः । ओं ६ ऌं चन्द्रिका कळायै नमः । ओं ६ ॡं कान्तिकळायै नमः । ओं ६ एं ज्योत्स्नाकळायै नमः । ओं ६ ऐं श्रीकळायै नमः । ओं ६ ओं प्रीतिकळायै नमः । ओं ६ औं अङ्गदाकळायै नमः । ओं ६ अं पूर्णाकळायै नमः । ओं ६ अः पूर्णामृतकळायै नमः । इति षोडशसोमकळास्संकुंकुमाक्षतपुष्पैर्जले समावाह्य तत्र पञ्चब्रह्मकळा यजेत् ॥ ओं ऐं ह्रीं श्रीं ऐं ह्लीं क्लीं कं सृष्टिकळायै नमः । ओं ६ खं बुद्धिकळायै नमः । ओं ६ गं स्मृतिकळायै नमः । ओं ६ घं मेधाकळायै नमः । ओं ६ ङं शान्तिकळायै नमः । ओं ६ चं लक्ष्मीकळायै नमः । ओं ६ छं द्युतिकळायै नमः ओं ६ जं स्थिराकळायै नमः ओं ६ झं स्थितिकळायै नमः ओं ६ ञं सिद्धिकळायै नमः इति दशब्रह्मकळाः । ओं ६ टं जराकळायै नमः । ओं ६ ठं पाळिनीकळायै नमः । ओं ६ डं शान्तिकळायै नमः । ओं ६ ढं ईश्वरीकळायै नमः । ओं ६ णं कामिकाकळायै नमः । ओं ६ तं वरदाकळायै नमः । ओं ६ थं ह्लादिनीकळायै नमः । ओं ६ दं प्रीतिकळायै नमः । ओं ६ धं रतिकळायै नमः । ओं ६ नं दीर्घाकळायै नमः इति विष्णोर्दशकळाः ॥ ओं ६ पं तीक्ष्णाकळायै नमः । ओं ६ फं रौद्रीकळायै नमः । ओं ६ बं भयाकळायै नमः । ओं ६ भं विद्राकळायै नमः । ओं ६ मं तंद्रीकळायै नमः । ओं ६ यं क्षुत्कळायै नमः । ओं ६ रं क्रोधिनीकळायै नमः । ओं ६ लं क्रियाकळायै नमः । ओं ६ वं उद्गारिकळायै नमः । ओं ६ शं मृत्युकळायै नमः । इति रुद्रस्य दशकळाः ॥

ओं ६ षं पीताकळायै नमः। ओं ६ सं श्वेताकळायै नमः। ओं ६ हं अरुणाकळायै नमः। ओं ६ क्षं असिताकळायै नमः। इति चतस्र ईश्वरकळाः ॥

ॐ ६ अं निवृत्तिकळायै नमः। ॐ आं प्रतिष्ठाकळायै नमः। ॐ ६ इं विद्याकळायै नमः। ॐ ६ ईं शान्तिकळायै। ॐ ६ उं इन्दिकळायै नमः। ॐ ६ ऊं दीपिकाकळायै नमः। ॐ ६ ऋं रेचिकाकळायै नमः। ॐ ॠं मोचिका कळायै नमः। ॐ ६ ऌं सूक्ष्माकळायै नमः। ॐ ६ ॡं सूक्ष्मामृतकळायै नमः। ॐ ६ एं ज्ञानकळायै नमः। ॐ ६ ऐं ज्ञानामृतकळायै नमः। ॐ ६ ओं आप्यायनीकळायै नमः। ॐ ६ औं व्यापिनीकळायै नमः। ॐ ६ अं व्योमरूपकळायै नमः। ॐ ६ अः अनन्ताकळायै नमः। इति सदाशिव षोडशकळाः ॥ एवं पञ्चब्रह्मणां व्यष्टिपञ्चाशत्कला सम्पूज्य ॥ समष्टि पञ्चब्रह्मकळाः पूजयेत् ॥ ओं ऐं ह्रीं श्रीं ऐं ह्लीं क्लीं कं खं गं घं ङं चं छं जं झं ञं निवृत्तिकळायै नमः। ॐ ६ टं ठं डं ढं णं तं थं दं धं नं प्रतिष्ठाकळायै नमः। ॐ ६ पं फं बं भं मं यं रं लं वं शं विद्याकळायै नमः। ॐ ६ षं सं हं क्षं शान्तिकळायै नमः। ॐ ६ अं आं १६ शान्त्यतीतकळायै नमः इति समष्टिकळास्सम्पूज्य। ॐ ऐं ह्लीं श्रीं ऐं ह्लीं क्लीं अं आं ळ क्षं ५१ सर्वसाक्षिचिद्रूपात्मरूपिण्यै सादाख्यकळायै नमः इति सम्पूज्य ॥

हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् नृषद्वरसदृत सद्व्योम सदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥ १ ॥ प्रतद्विष्णुस्तवते वीर्याय मृगो न भीमः कुचरो गिरिष्ठाः। यस्योरुषु त्रिषु विक्रमणेषु अधिक्षयन्ति भुवनानि विश्वा ॥ २ ॥ त्र्यंबकं यजामहे सुगन्धिं पुष्टि वर्धनं उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात् ॥ ३ ॥ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः दिवीव चक्षुराततम् ॥ ४ ॥ विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि सिंशतु आसिंचतु प्रजापतिर्धाता गर्भं दधातु ते। गर्भं देहि सिनीवाली गर्भं देहि सरस्वती गर्भं ते अश्विना उभा वा धत्तां पुष्करस्रजा ॥ ५ ॥

सद्यो जातं प्रपद्यामि सद्योजाताय वै नमो नमः । भवे भवे नातिभवे भवस्व मां भवोद्भवाय नमः ॥ ६ ॥ वामदेवाय नमो ज्येष्ठाय नमश्श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलाय नमो बलविकरणाय नमो बलप्रमथनाय नमस्सर्वभूतदमनाय नमो मनोन्मनाय नमः ॥ ७ ॥ अघोरेभ्योथ घोरेभ्यो घोर घोरतरेभ्यः सर्वेभ्यस्सर्व शर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥ ८ ॥ तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात् ॥ ९ ॥ ईशान-स्सर्वविद्यानामीश्वरस्सर्वभूतानां ब्रह्माधिपति र्ब्रह्मणोधिपतिर्ब्रह्मा शिवो मे अस्तु सदा शिवोम् ॥ १० ॥

जोतिष्मतीं त्वा सादयामि । ज्योतिष्कृतं त्वा सादयामि ज्योतिर्विदं त्वा सादयामि । भास्वतीं त्वा सादयामि । ज्वलन्तीं त्वा सादयामि । रोच-मानां त्वा सादयाम्यजस्रां त्वा सादयामि । बृहज्ज्योतिषं त्वा सादयामि । बोधयन्तीं त्वा सादयामि । जाग्रतीं त्वा सादयामि ॥ ११ ॥ एतैर्मन्त्रैरभि-मन्त्र्य । या जाता ओषधयोदेवेभ्यस्त्रियुगं पुरा । मन्दामि बभ्रूणामहगं शतं धामानि सप्त च शतं वो अम्ब धामानि सहस्रमुत वो रुहः अधा शतक्रत्वो-यूयमिमम्मे अगदं कृक पुष्पावतीः प्रसूवतीःफलिनी रफला उता अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः । ओषधीरिति मातरस्तद्वो देवीरुपब्रुवेरपागं सिविघ्वतीरितरपश्चातयमानाः । इत्योषधयः काण्डात्काण्डात्प्ररोहन्ती परुषः परुषः परी एवानो दूर्वे प्रतनु सहस्रेण शतेन च । इति दूर्वाः अश्वत्थेवो निषदनं पर्णेवो वसतिः कृता गोभाज इत्किलासथ यत्सनवथ पूरुषम् । यदहं वाजयन्निमा ओषधीर्हस्त आददे आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा । यदोषदय स्सङ्ग्च्छन्ते राजानस्समिताविव विप्रस्य उच्यते भिषग्रक्षो हामी-वचात नः । इति पञ्चपल्लवाः । स्योना पृथिवी भवानृक्षरा निवेशनी यच्छानश्शर्मसी प्रथाः ॥ इति सप्तमृदः । या फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः बृहस्पतिप्रसूता स्तानो मुञ्चं त्वगं हसः इति फलम् ॥ सहि-रत्नानि दाशुषे सुवाति सविता भगः तं भागं चित्रमीमहे इति नवरत्नानि ॥

हिरण्यरूपस्सहिरण्य सन्दृगपान्नपात्से दुहिरण्यवर्णः हिरण्ययात्परियोनेर्निषद्या हिरण्यदा ददत्यन्नमस्मै इति हिरण्यम् ।। युवं वस्त्राणि पीवसा वसाथेयुवोर-च्छिद्रामं तवोहसर्गाः अवातिरतमनृतानि विश्वा ऋतेन मित्रा वरुणा सचेथे इति वस्त्रयुग्मम् ।। पुर्णा दर्वी परापत सुपूर्णा पुनरापतवस्त्वेव विक्रीणा वहा इषमूर्जंग् शतक्रतो इति पूर्णपात्रं विधाय इमम्मे वरुणश्रुधी हवमद्या च मृडय त्वा मवस्युराचके तत्वायमि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः अहेडमानो वरुणेह बोद्युरुशंग् समान आयुः प्रमोषीः इति वरुणं संपूज्य ।। ओं ६ ऐं जूं ह्स्रों जूं सः अमृते अमृतोद्भवे अमृतेश्वरि अमृतवर्षिणि अमृतं स्रावय स्रावय स्वाहा इति दशवारं जप्त्वा । मूलविद्यामष्टादशवारं जप्त्वा योनिमुद्रया तन्मध्ये शिवशक्त्योस्समावेशनं संचिन्त्य लमित्यादि पञ्चपूजां कृत्वा स्वगुरुं ध्यात्व पञ्चोपचारैस्सम्पूज्य ततो मण्टपस्य बहिः पूर्वादि चतु-र्दिक्षु ओं ह्रीं सर्वविघ्नकृद्भ्यस्सर्वभूतेभ्यो हुं स्वाहा इति भूतेभ्यो बलि दद्यात् । ततः पूर्वादि द्वारचतुष्टये प्रतिद्वारं प्रोक्तविधिना द्वौ द्वौ कलशौ संस्थाप्य आचम्य चेलाजिनकुशकम्बळनिर्मितं स्वासनमास्तीर्य अस्त्राय फट् इत्यस्त्रमन्त्रेण प्रोक्ष्य ह्रीं आधारशक्तिकमलासनाय नमः ………… सम्पूज्य तत्र प्राङ्मुखो दङ्मुखो वा पद्मासने उपविश्य ………… वामपार्ष्णिघातकरास्फोट तिर्यग्दृष्टिविलोक-नादि च कृत्वा भूर्भुवस्सुवरोमिति दिग्बन्धनं कृत्वा । लं इन्द्राय नमः । रं अग्नये नमः । हं यमाय नमः । षं निऋृतये नमः । वं वरुणाय नमः । यं वायवे नमः । सं कुबेराय नमः । शं ईशानाय नमः । अं ब्रह्मणे नमः । वं विष्णवे नमः । इति दशदिग्बन्धनं कृत्वा स्वगुरुं षोडशोपचारैस्संपूज्य षडासनानि विन्यस्य ततः पृथ्वीप्रार्थनां कृत्वा हृदयकमले पापपुरुषं ध्यात्वा पापपुरुषं वायुबीजेन शोषितं कृत्वा वह्निबीजेन दग्धं कृत्वा वरुणबीजेन प्लावितं कृत्वा पृथ्वीबीजेन पिण्डं कृत्वा आकाशबीजेन देहनिष्पत्तिं भावयेत् पञ्चभूतात्मकं शरीरं निर्माय प्रविलेपनं कृत्वा पञ्चभूतावरणं भावयेत् इति भूतशुद्धिः ।। जपे सिद्ध्यर्थं अन्तर्मातृकान्यसं बहिर्मातृकान्यासं च कृत्वा यथोक्त-

विधिवा मातृका न्यासं च विधाय स्थण्डिले फलके वा पूजाचक्रलेखनं कुर्यात् चल्लेखनप्रकारस्तु ॥

लिखेदष्टदळं पद्मं चन्दनागरुकुंकुमैः ।
पद्ममध्ये लिखेच्चक्रं षट्कोणं चणिकामयम् ॥

इति त्रिकोणषट्कोणवृत्ताष्टदळपद्म चतुरश्रयन्त्रं कुंकुमगन्धादिना लिखित्वा पूजां कुर्यात् त्रिकोणे ऐं ह्रीं क्लीं इति बीजत्रयं विलिख्य षट्सुकोणेषु पूर्वादितः चामुण्डायै विच्चे इति विलिख्य अष्टदळेषु षोडशस्वरान् तद्बहिः कादिक्षान्तान् विलिख्य चतुरश्रे पूर्वादितः श्रीं वर्णान् अग्न्यादितः ह्रींकारचतुष्टयं विलिख्य पूर्णपात्रस्योपरिसंस्थाप्य गन्धपुष्पाक्षतैरभ्यर्च्य पलपरिमाण सुवर्णेन चण्डिका-प्रतिमां अष्टभुजां अष्टादशभुजां वा निर्माय पञ्चामृतैस्संस्नाप्य पूर्णपात्रस्यो-परि यन्त्रमध्ये संस्थाप्य मूलेन पूजयेत् ।

जयन्ती मङ्गळा काळी भद्रकाळी कपालिनी ।
दुर्गा क्षमा शिवा धात्री स्वधा स्वाहा नमोस्तु ते ॥

दुर्गे दुर्गे रक्षिणि स्वाहेति वा पूजामन्त्रः ॥ अथाचार्यो यन्त्रे प्रतिमायां प्राणप्रतिष्ठां कुर्यात् तत्प्रकारः ॥ आदौ प्रतिमाशुद्ध्यर्थं पञ्चामृतेन स्नापयिष्ये आप्यायस्व समेतु ते विश्वतस्सोम वृष्णियं भवा वाजस्य सङ्गथे क्षीरेण स्नपयामि दधिक्रावुण्णो अकारिषं जिष्णोरश्वस्य वाजिनः सुरभिनो मुखाकरत् प्रण आयूंषि तारिषत् दध्ना स्नपयामि ॥ घृतं मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतमवस्य धाम अनुष्वधमावह मादयस्व स्वाहा कृतं वृषभवक्षि हव्यं घृतेन स्नपयामि ॥ मधुवाता ऋतायते मधुक्षरन्ति सिन्धवः माध्वीर्नस्सन्त्वोषधीः मधुनक्तमुतोषसि मधुमत्पार्थिवंरजः मधु द्यौरस्तु नः पिता मधुमान्नो वनस्पतिर्मधुमांगं अस्तु सूर्यः माध्वीर्गावो भवन्तु नः मधुना स्नपयामि ॥ स्वादुः पवस्व दिव्याय जन्मने स्वादुरिन्द्राय सुहवेतु नाम्ने स्वादुर्मित्राय

वरुणाय वायवे बृहस्पतये मधुमार्गं अभ्यः शर्करया स्नपयामि ॥ आपो हिष्ठा मयोभुवः तान ऊर्जे दधातन महेरणाय चक्षसे योवश्शिवतमो रसः तस्य भाजयते हनः उशतीरिव मातरः तस्मा अरङ्गमामवः यस्य क्षयाय जिन्वथ आपो जनयथाच नः शुद्धोदकस्नानं समर्पयामि ॥ एवं प्रतिमां संस्नाप्य ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवं विश्वमिदं जगत् ध्रुवाह पर्वता इमे ध्रुवो राजा विशामयं इति कलशे संस्थाप्य प्राणप्रतिष्ठां कुर्यात् । अस्य श्रीचण्डिकाप्राण· प्रतिष्ठामहामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः ऋग्यजुस्सामाथर्वणाश्छन्दांसि सकलसृष्टिस्थितिसंहारकारिणी प्राणशक्तिः परादेवता आं बीजं ह्रीं शक्तिः क्रों कीलकं चण्डिकायाः प्राणप्रतिष्ठापने विनियोगः । आं अंगुष्ठाभ्यां नमः । ह्रीं तर्जनीभ्यां नमः । क्रों मध्यमाभ्यां नमः । आं अनामिकाभ्यां नमः । ह्रीं कनिष्ठिकाभ्यां नमः । क्रों करतलकरपृष्ठाभ्यां नमः । एवं हृदयादि-न्यासः । भूर्भुवस्सुवरोमिति दिग्बन्धः ॥

ध्यानम् – रक्तांभोधिस्थपोतोल्लसदरुणसरोजाधिरूढा कराब्जैः
पाशं कोदण्डमिक्षूद्भवमळिगुणमप्यंकुशं पञ्चबाणान् ।
बिभ्राणासृक्कपालत्रिनयनलसिता पीनवक्षोरुहाढ्या
देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परा नः ॥

इति ध्यात्वा - आं ह्रीं क्रो मित्युक्त्वा प्रक्षाळितनववस्त्रेणात्मानं प्रतिमां चावृत्य प्रतिमां दक्षिणहस्तेनाच्छाद्य देवीं चिन्मात्रामनेकादित्यसङ्काशां ध्यात्वा अमुष्याः प्राणा इह प्राणा इति प्रथमखण्डेन पादादिनाभ्यन्तं अमुष्या जीव इह-स्थित इति द्वितीयखण्डेन नाभ्यादिहृदयपर्यन्तं अमुष्यास्सर्वेन्द्रियाणि वाङ्मन-श्चक्षुश्श्रोत्रजिह्वाघ्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा इति तृतीयखण्डेन हृदयादिमस्तकपर्यन्तं विन्यस्य पूर्वोक्तखण्डत्रयेण व्यापकं कुर्यात् । पुनः रक्ता-म्भोधिस्थेति ध्यात्वा देवीं स्पृष्ट्वा मूलमन्त्रमष्टोत्तरशतं जपेत् । मूलमन्त्रस्तु ओं आं ह्रीं क्रों य र ल व श ष स हों आमुष्याः प्राणा इह प्राणा अमुष्या जीव

इह स्थितः अमुष्या स्सर्वेन्द्रियाणि वाङ्मनश्चक्षुश्श्रोत्रजिह्वाघ्राणवाक्पाणिपाद-पायूपस्थासृङ्मदोमज्जाशुक्रमनोबुध्यहंकारचित्तानीह प्रतिमायामुपविश्य सुखं चिरं तिष्ठन्तु स्वाहा ॥ इत्यनेन विधानेन परमेश्वरीभावनामुद्राभ्यां प्राणन्यासं कृत्वा वस्त्रावरणमुद्घाटच नैवेद्यं समर्पयेत् ॥ तत आचार्यः प्राणानायम्य देशकालौ सङ्कीर्त्य इष्टकाम्यार्थसिद्ध्यर्थं देव्याः कल्पोक्तप्रकारषोडशोपचारपूजां करिष्य इति संकल्य । आगमार्थं तु देवानां गमनार्थं तु रक्षसाम् । कुर्याद्घण्टावरं तत्र देवताह्वानलांछनम् ॥ इति घण्टानादं कृत्वा स्ववामभागे चतुरश्रं मण्डलं विलिख्य ओं ऐं ह्रीं श्रीं रं धर्मप्रददशकळात्मने अग्निमण्डलाय जलकळ-शाधाराय नमः इति सम्पूज्य ॥ ओं ऐं ह्रीं श्रीं हं अर्थप्रदद्वादशकळात्मने सूर्यमण्डलाय जलकलशाय नमः इति कलशं प्रतिष्ठाप्य ॥ ओं ऐं ह्रीं श्रीं मं कामप्रदषोडशकलात्मने चन्द्रमण्डलाय जलकळशामृतायनमः इति जलमापूर्य ॥ गन्धादिभिरलंकृत्य गङ्गे च यमुनेचैव गोदावरि सरस्वति नदा सिन्दु कावेरि जलेऽस्मिन् सन्निधिं कुरु ॥

सर्वे समुद्रास्सरितस्तीर्थानि जलदा नदाः ।
आयान्तु देवीपूजार्थं दुरितक्षयकारकाः ॥

इति तीर्थमन्त्रेण सूर्यमण्डलात्तीर्थमावाह्य मूलेन दशवारमभिमन्त्र्य धेनुमुद्रां प्रदर्श्य स्वपुरतः पूर्वयन्मण्डलं कृत्वा ओं ऐं ह्रीं श्रीं रं धर्मप्रददशकळात्मने तीर्थशङ्खाधाराय नमः इति मण्डलं सम्पूज्य ओं ऐ ह्रीं श्रीं हं अर्थप्रदद्वादश-कळात्मने तीर्थशङ्खाय नमः इत्याधारे शङ्खं प्रतिष्ठाप्य ओं ऐं ह्रीं श्रीं मं काम-प्रदषोडशकळात्मने तीर्थशङ्खामृताय नमः इति तीर्थमापूर्य गायत्र्याभिमन्त्रच ।

त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे ।
देवैश्च पूजितस्सर्वैः पाञ्चजन्य नमोस्तु ते ॥

इति पठित्वा धेनुमुद्रां प्रदर्श्य शङ्खमध्ये स्थितं तोयं गायत्र्या देवीमात्मानं पूजाद्रव्याणि या गोपककणानि च संप्रोक्ष्य विशेषार्घ्यपत्रं स्थापयेत् शङ्ख-

कलशयोर्मध्ये चतुरश्रमण्डलं कृत्वा तस्मिन् अस्त्राय फडिति क्षाळितं साधारं विशेषार्घ्यपात्रं संस्थाप्य आधारे ॐ ६ रं वह्निमण्डलाय धर्मप्रददशकळात्मने विशेषार्घ्यपात्राधाराय नमः इत्याधारं सम्पूज्य ॐ ४ हूं अर्कमण्डलाय द्वादशकळात्मने विशेषार्घ्यपात्राय नमः इति विशेषार्घ्यपात्रमाधारे संस्थाप्य अर्थप्रद तस्मिन् हृदयाय नमः । इति हृन्मन्त्रेण पुष्पं निक्षिप्य शिरसे स्वाहेति शिरोमन्त्रेण सुगन्धिसलिलैरापूर्य तिषु ॐ ४ मं सोममण्डलाय काम-प्रदषोडशकलात्मने विशेषार्घ्यपात्रामृताय नम इत्यभ्यर्च्य शिरसे स्वाहेति शिरोमन्त्रेण काळिनीमुद्रां प्रदर्श्य कवचायहुमिति कवचेनाच्छाद्य नेत्रत्रयाय वौ षडिति नेत्रमन्त्रेण निरीक्ष्य तज्जले मूलेन देवीमावाह्य हृदयाय नमः शिरसे स्वाहा शिखायै वौ षट् कवचाय हुं नेत्रत्रयाय वौ षट् अस्त्राय फट् इति षडङ्गैरभ्यर्च्य ॐ ह्रीं वं अमृतवर्षिणि अमृतं स्रावय स्रावय स्वाहेति धेनुमुद्रां प्रदर्श्य मूलेनाष्टवारभिमन्त्र्य अस्त्राय फडित्यस्त्रेण दिग्बन्धनं कृत्वा तज्जलं सामान्ये किञ्चिन्निक्षिप्य किञ्चित्पात्रान्तरेणादाय तेन जलेन पूजाद्रव्याणि पूजापीठमात्मानं च प्रोक्ष्य मूलेन स्वशरीरं गन्धादिभिरलंकृत्य शिरोहृदय-गुह्यपादसर्वाङ्गेषु पञ्चपुष्पाञ्जलिं दत्वा स्वात्मानं देवीरूपं ध्यात्वा मूलमन्त्रं ऋष्याद्यङ्गन्यासान्तं कृत्वा व्यापकन्यासं कुर्यात् ॥

खड्गिनी शूलिनी घोरा गदिनी चक्रिणी तथा ।
शङ्खिनी चापिनी बाणा भुसुण्डी परिघायुधा ॥

शूलेन पाहि नो देवि पाहि खड्गेन चाम्बिके ।
घण्टास्वनेन नः पाहि चापज्यानिस्वनेन च ॥

प्राच्यां रक्ष प्रतीच्यां च चण्डिके रक्ष दक्षिणे ।
भ्रामणेनात्मशूलस्य उत्तरस्यां धनेश्वरि ॥

सौम्यानि यानि रूपाणि त्रैलोक्ये विचरन्ति ते ।
यानि चात्यर्थघोराणि तै रक्षास्मान् स्तथा भुवम् ॥

खड्गशूलगदादीनि यानि चास्त्राणि तेऽम्बिके ।
करपल्लवसङ्गीनि तैरस्मान् रक्ष सर्वतः ॥

सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते ।
भयेभ्यस्त्राहि नो देवी दुर्गे देवि नमोस्तु ते ॥

एतत्ते वदनं सौम्यं लोचनत्रयभूषितम् ।
पातु नस्सर्वभूतेभ्यः कात्यायिनि नमोस्तु ते ॥

ज्वालाकराळमत्युग्रमशेषासुरसूदनम् ।
त्रिशूलं पातु नो भीतेर्भद्रकाळी नमोस्तु ते ॥

हिनस्ति दैत्यतेजांसि स्वनेनापूर्य या जगत् ।
सा घण्टा पातु नो देवी पापेभ्यो नस्सुतानिव ॥

असुरासृग्वसापङ्कचर्चितस्ते करोज्वलः ।
शुभाय खड्गो भवतु चण्डिके त्वां नता वयम् ॥

एभिश्लोकैस्त्रिव्यापकन्यासं कृत्वा ।

ध्यानम् – मातर्मे मधुकैटभघ्नि महिषप्राणापहारोद्यमे
हेलानिर्मितधूम्रलोचनवधे हे चण्डमुण्डार्दिनि ।
निश्शेषीकृतरक्तबीजदनुजे नित्ये निशुम्भापहे
शुंभध्वंसिनि संहराशु दुरितं दुर्गे नमस्तेम्बिके ॥

इति ध्यात्वा ।

मानसैर्गन्धादिभिः पञ्चोपचारैस्तत्तन्मुद्रया सम्पूज्य आत्मानं देवीरूपं ध्यात्वा नवाक्षरमन्त्रं जपेत् ओं ऐं ह्रीं क्लीं चामुण्डायै विच्चे इति जप्त्वा ॥

गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे देवि त्वत्प्रसादान्महेश्वरि ॥

इति पठित्वा जपं देव्यै समर्प्य पूजितमण्डले पीठपूजामारभेत् प्रथमं षट्कोणे ओङ्कारपीठाय नमः । अषटदळकमले ॐ पूं पुर्णगिरिपीठाय नमः । चतुरश्रे ओङ्कारकामरिपीठाय नमः। इति सम्पूज्य पीठस्थ बहिश्चतुर्दिक्षु स्वाग्रमारभ्य प्रादक्षिण्येन ॐ गं गणेशाय नमः। ॐ क्ष क्षेत्रपालकाय नमः। ॐ दुं दुर्गायै नमः । ॐ वं वटुकाय नमः । आग्नेयादिकोणेषु ॐ जं जयायै नमः । ॐ विं विजययै नमः । ॐ जं जयन्त्यै नमः । ॐ अ अपराजितायै नमः । ततः पद्मनाळ मूले ॐ आं आधारशक्त्यै नमः । ॐ कुं कूर्माय नमः । ॐ शं शेषाय नमः । ॐ पं पृथिव्यै नमः । ॐ नां नाळाय नमः । ॐ पं पद्माय नमः । इति सम्पूज्य ॥ अष्टदळकर्णिकायां षट्कोणाद्बहि पूर्वदिशि प्रदक्षिणादिवामान्तं ॐ विं विष्णुमायायै नमः । ॐ चें चेतनायै नमः ॐ बुं बुद्ध्यै नमः । ॐ निं निद्रायै यमः । ॐ क्षुं क्षुधायै नमः इति । पञ्चशक्तीस्संपूज्य । दक्षिणदिशि ॥ ॐ छां छायायै नमः । ॐ शं शक्त्यै नमः । ॐ तं तृष्णायै नमः । ॐ क्षां क्षान्त्यै नमः । ॐ जां जात्यै नमः । ॐ लं लज्जायै नमः । इति शक्तिषट्कं सम्पूज्य ॥ पश्चिमदिशि – ॐ शां शान्त्यै नमः । ॐ श्रं श्रद्धायै नमः । ॐ कां कान्त्यै नमः । ॐ लं लक्ष्म्यै नमः । ॐ वं वृद्धै नमः । ॐ धृं धृत्यै नमः उत्तरदिशि ॥ ओं स्मृं स्मृत्यै नमः । ओं दं दयायै नमः । ओं तुं तुष्टयै नमः । ओं पुं पुष्टयै नमः । ओं मां मात्रे नमः । ओं भ्रां भ्रान्त्यै नमः ॥ अधिष्ठाने ॥ अधिष्ठात्र्यै नमः ॥ त्रिकोणे ॥ ओं चिं चित्स्वरूपिण्यै नमः ॥ कर्णिकामध्ये वज्रनखदंष्ट्राभिदाय महासिंहाय हुं फण्णम इति पीठसमष्टिमन्त्रैरभ्यर्च्य ततोव्यष्टिपीठपूजामारभेत् ॥ कलशे विभावितयन्त्रस्य चतुरश्रे पूर्वाद्यष्टदिक्षु प्रादक्षिण्येन ओं ऐं ह्रीं श्रीं ऐं ह्रीं क्लीं ओं ओड्याणपीठाय नमः । तत्र ओं ६ओड्येश्वराय नमः । ओं ६ ओड्याम्बायै नमः इति पूर्वस्याम् । ओं ६ मां मातृकापीठाय नमः । तत्र ओं

६ मां मातृकेश्वराय नमः। ओं ६ मां मातृकाम्बायै नमः इत्याग्नेयाम्। ओं जां जालेश्वरपीठाय नमः। तत्र ओं ६ जां जालेश्वराय नमः। ओं ६ ओं ६ जां जालेश्वर्यंबायै नमः॥ इति दक्षिणे॥ ओं ६ पूं पूर्णगिरिपीठाय नमः। ओं ६ पूं पूर्णेश्वराय नमः। ओं ६ पूं पूर्णेश्वर्यम्बायै नमः॥ इति नैऋत्याम्॥ ओं ६ उं उज्जयनीपीठाय नमः। ओं ६ उं उज्जयनीश्वराय नमः। ओं ६ उं उज्जयन्यम्बायै नमः॥ इति पश्चिमे॥ ओं ६ कां कामगिरिपीठाय नमः। ओं ६ कां कामेश्वराय नमः। ओं ६ कां कामेश्वर्यम्बायै नमः॥ इति वायव्याम्॥ ओं ६ सं संहारपीठाय नमः। ओं ६ सं संहारेश्वराय नमः। ओं ६ सं संहारेश्वर्यम्बायै नमः॥ इत्युत्तरे॥ ओं ६ कों कोल्लापुरिपीठाय नमः। ओं ६ कों कोल्लेश्वराय नमः। ओं ६ कों कोल्लांबायै नमः॥ इति ईशान्याम्॥ इत्यष्टदिक्षु संपूज्य ततः चतुरश्रस्याग्नेयादिकोणचतुष्के प्रादक्षिण्येन ओं ६ अं अग्निमुखभेताळाय नमः ओं ६ ऐं ५ पीतवाससे भेताळाय नमः। ओं ६ जां ज्वालामुखभेताळाय नमः। ओं ६ धूं धूम्राक्षाय भेताळाय नमः॥ इतीशानान्तं संपूज्य। ततः चतुरश्रस्य परितः। ओं ६ मं महाचतुष्षष्टिकोटियोगिनीभ्यो नमः। ओं ६ मं महाचतुष्षष्ठिकोटिभैरवेभ्यो नमः इति सम्पूज्य। ततश्चतुरश्रस्यान्तरे भागे पूर्वाद्यष्टदिक्षु ओं ६ विं निऋऋतये नमः। ओं ६ वं वरुणाय नमः। ओं ६ वां वायवे नमः। ओं ६ कुं कुबेराय नमः। ईं ईशानाय नमः इति दिक्पालान् सम्पूज्य अष्टदळपद्मस्य अष्टदळाग्रेषु प्रादक्षिण्येन ओं ६ अं असिताङ्गभैरवाय नमः। ओं ६ रुं रुरुभैरवाय नमः। ओं ६ चं चण्डभैरवाय नमः। ओं ६ क्रों क्रोधनभैरवाय नमः। ओं ६ उं उन्मत्तभैरवाय नमः। ओं ६ कं कपालभैरवाय नमः। ओं ६ भीं भीषणभैरवाय नमः। ओं ६ सं संहारभैरवाय नमः। तत्पद्मदळमध्येषु प्रादक्षिण्येन। ओं ६ ब्रां ब्राह्म्यै नमः। ओं ६ मां माहेश्वर्यै नमः। ओं ६ कौं कौमार्यै नमः। ओं ६ वैं वैष्णव्यै नमः। ओं ६ वां वाराह्यै नमः। ओं नां नारसिंह्यै नमः। ओं ६ कौं कौमार्यै नमः ओं कां काळरात्र्यै नमः। ओं ६ कं कल्याण्यै नमः। ओं ६

रों रोहिण्यै नमः । ओं ६ कां कालिकायै नमः । ओं ६ चं चण्डिकायै नमः । ओं ६ शां शांभव्यै नमः । ओं ६ दुं दुर्गायै नमः । ओं ६ सुं सुभद्रायै नमः एतद्दुर्गापूजास्थानात्परितः प्रादक्षिण्येन ओं ६ पार्वत्यै नमः । ओं ६ त्रिमूर्त्यै नमः । ओं ६ कालिकायै नमः । ओं ६ सुभगायै नमः । ओं ६ महिषायै नमः । ओं ६ कालिमालिकायै नमः । ओं ६ चण्डिकायै नमः । ओं ६ कालसंकर्षिण्यै नमः । ओं ६ अपराजितायै नमः । ओं ६ रुद्राण्यै नमः । ओं ६ भैरव्यै नमः । ओं ६ महालक्ष्म्यै नमः । ओं ६ पीठादिनाडिकायै नमः ओं ६ अपराजितायै नमः । ओं ६ रुद्राण्यै नमः । ओं ६ नन्दायै नमः । ओं ६ रक्तदन्तिकायै नमः । ओं ६ शाकंभर्यै नमः । ओं ६ सुभीमायै नमः । ओं ६ भ्रामर्यै नमः । ओं ६ शिवदूत्यै नमः । ततस्त्रिकोणस्य बाह्यतः वामपार्श्वे ओं ६ सुरथाय नमः । दक्षिणपार्श्वे समाधये नमः । सुरथस्य समीपे महिषासुरं ध्यात्वा । ओं ६ ओं हं रं रं महिष ठं ठं हं नमः । त्रिकोणस्य बाह्ये दक्षिणे समाधेः पृष्ठभागे ओं ६ क्ष्म्रां वज्रनखदंष्ट्रायुधाय महाज्ञानसिंहाय हुं फट् नमः इति संपूज्य । त्रिकोणस्य बाह्ये वामे सुरथसमीपे परिपूजितमहिषासुरपृष्ठाग्रे ओं ६ मधुकैटभदैत्याभ्यां नमः । ओं ६ चिक्षुराय नमः । ओं ६ चामराय नमः । ओं ६ उदग्राय नमः । ओं ६ महाहनवे नमः । ओं ६ असिलोम्ने नमः । ओं ६ बाष्कलाय नमः । ओं ६ उदग्रदर्शनाय नमः । ओं ६ कालाय नमः । ओं ६ बिडालाय नमः । ओं ६ कराळाय नमः । ओं ६ उद्धताय नमः । ओं ६ डामराय नमः । ओं ६ अन्धकाय नमः । ओं ६ उग्रास्याय नमः । ओं ६ उग्रवीर्याय नमः । ओं ६ त्रिणेत्राय नमः । ओं ६ दुर्धराय नमः । ओं ६ दुर्मुखाय नमः । ओं ६ काळाय नमः । ओं ६ धूम्रलोचनाय नमः । ओं ६ चण्डमुण्डाभ्यां नमः । ओं ६ रक्तबीजाय नमः । ओं ६ शुम्भनिशुम्भाभ्यां नमः इति सम्पूज्य ॥ ततस्त्रिकोणमनुसृत्य परितः प्रादक्षिण्येन ओम् ६ शैलपुत्र्यै नमः । ओम् ६ ब्रह्मचारिण्यै नमः । ओम् ६ छन्नघण्टायै नमः । कूश्माण्डायै नमः । ओम् ६ स्कन्दमात्रे नमः । ओम् ६ कात्यायन्यै नमः । ओम् ६ काळरात्र्यै नमः ।

ओम् ६ महागौर्यै नमः। ओम् ६ सिद्धिदायै नमः इति सम्पूज्य। ततस्त्रिकोणकोणेषु प्रादक्षिण्येन ओम् ६ कामेश्वर्यै नमः। ओम् ६ वज्रेश्वर्यै नमः। ओम् ६ भगमालिन्यै नमः। तेष्वेव प्राग्वत् ओम् ६ रत्यै नमः। ओम् ६ प्रीत्यै नमः। ओम् ६ मनोभवाय नमः ततस्त्रिकोणरेखासु ओम् ६ इच्छाशक्त्यै नमः। ओम् ६ ज्ञानशक्त्यै नमः। ओम् ६ क्रियाशक्त्यै नमः। बिन्दुत्रिकोणमध्ये। वामभागे ओम् ६ विनायकाय नमः। दक्षिणभागे ओम् ६ त्रिवेदभैरवाय नमः। तयोः पृष्ठभागे ओम् ६ कालमृत्युभ्यां नमः। तदधः बिन्दोर्बाह्ये प्रधानस्य पृष्ठतः मध्यस्थले ओम् ६ ब्रह्मासरस्वतीभ्यां नमः। तद्दक्षिणे ओम् ६ रुद्रगौरीभ्यां नमः। वाणीब्रह्माणीर्वामभागे ओम् ६ हृषीकेश लक्ष्मीभ्यां नमः। ततः बिन्दोर्बाह्ये पुरतः पङ्क्त्याकारेण मध्यस्थले ओम् ६ लक्ष्म्यै नमः। तद्दक्षिणे ओम् ६ कान्त्यै नमः। तद्वामे ओम् ६ वाण्यै नमः। ततो बिन्दुमध्यस्थाने पङ्क्त्याकारेण मध्ये ह्रीं बीजे मूलेन महालक्ष्म्या मूर्ति परिकल्प्य मूलेन तामभ्यर्च्य कराभ्यां पुष्पाञ्जलिमादाय हृदयकमले यथोक्तरूपां साङ्गां सावरणां महालक्ष्मीं ध्यायेत् तद्यथा।

सर्वदेवशरीरेभ्यो याविर्भूतामितप्रभा।
त्रिगुणा सा महालक्ष्मीस्साक्षान्महिषमर्दिनी ॥

श्वेतानना नीलभुजा सुश्वेतस्तनमण्डला।
रक्तमध्या रक्तपादा नीलजङ्घोरुरुन्मदा ॥

सुचित्रजघना चित्रमाल्याम्बरविभूषणा।
चित्रानुलेपना कान्तिरूपसौभाग्यशालिनी ॥

अष्टादशभुजा पूज्या सा सहस्रभुजासती।
आयुधान्यत्र वक्ष्यन्ते दक्षिणाधःकरक्रमात् ॥

अक्षमाला च कमलं बाणोऽसिः कुलिशं गदा ।
चक्रं त्रिशूलं पाशुदशुंभो घण्टा च पाशकः ।

शक्तिर्दण्डश्चर्मचापः पाणिपात्रं कमण्डलुः ॥
अलंकृतभुजामेभिरायुधैः कमलासनाम् ।

सर्वदेवमयीमीशां महालक्ष्मीमिमां नृप ॥
पूजयेत्सर्वलोकानां स देवानां प्रभुर्भवेत् ।

इति ध्यात्वा ॥ तेजोरूपतामापाद्य सुषुम्नामार्गेण तत्तेजो ब्रह्मरन्ध्रं नीत्वा प्रवहन्नासारन्ध्रेण करस्थपुष्पाञ्जलौ तत्तेजस्समानीय ॥

ओं महापद्मवनांतस्थे कारणानन्दविग्रहे ।
सर्वभूतहिते मात रेह्यहि परमेश्वरि ॥

इति पठित्वा ॥ मूलमुच्चार्य श्रीमहालक्ष्मीरिहा गच्छागच्छ इति मूर्ते शिरसि पुष्पाञ्जलिप्रक्षेपेण तत्तेजस्तस्यां मूर्तौ ब्रह्मरन्ध्रे संयोज्य आवाहनी-मुद्रां प्रदर्श्य ।

देवेशि भक्तसुलभे सर्वावरणसंयुते ।
यावत्त्वां पूजयिष्यामि तावत्त्वं सुस्थिरा भव ॥

इति संप्रार्थ्य मूलमुच्चार्य श्रीमहालक्ष्मीरिह तिष्ठ तिष्ठेति स्थापनमुद्रां प्रदर्श्य पुनः मूलमुच्चार्य श्रीमहालक्ष्मीरिह सन्निधेहि सन्निधेहीति सन्निधान-मुद्रया सन्निधाप्य पुनर्मूलमुच्चार्य श्रीमहालक्ष्मीरिहसन्निरुद्धा भव सन्निरुद्धा-भवेति सन्निरोधनमुद्रया सन्निरुद्धय पुनर्मूलमुच्चार्य श्रीमहालक्ष्मी रिहाव-कुण्ठिता भव अवकुण्ठिताभव इत्यवकुण्ठनमुद्रयाऽवकुण्ठय पुनर्मूलमुच्चार्य श्रीमहा-लक्ष्मीरिह प्रसीद प्रसीद इत्यञ्जलिमुद्रया संप्रार्थ्य देव्यङ्गेषु मातृकातत्व षडङ्गादि विन्यस्य पुनर्मूलमुच्चार्य श्रीमहालक्ष्मीरमृतीकृता भव अमृतीकृता भव इति

देव्याश्शिरसि धेनुमुद्रां प्रदर्श्य अमृतवृष्टिं सञ्चिन्त्य मूलेन पुष्पाञ्जलित्रयेण सम्पूज्य मूलमुच्चार्य एतत्ते आसनमिति पुष्पादिकमासनं दत्वा मूलेन स्वागतार्घ्यपाद्या-चमनीयमधुसंपर्कस्नानवसनाभरणसुगन्धपुष्पधूपदीपनैवेद्यताम्बूलपर्णपुष्पनीरा-जनादीनि समर्प्य श्रीभगवती परिवारदेवतापूजार्थमनुज्ञां देहीति संप्रार्थ्य देव्या दक्षिणभागे प्रथमबीजे स्थितां महाकाळीमुक्तरूपां ध्यायेत् ।

त्रिगुणा तामसी देवी सात्विकी या त्रिधोदिता ।
सा शर्वा चण्डिका भद्रा दुर्गा भगवतीर्यते ॥

योगनिद्राहरेरुक्ता महाकाळीतमोगुणा
मधुकैटभनाशार्थं यां तुष्टावाम्बुजासनः ।
दशवक्त्रा दशभुजा दशपादाञ्जनप्रभा
विशालया राजमाना त्रिंशल्लोचनमालया ॥

स्फुरद्दशनदंष्ट्रा सा भीमरूपाऽपि भूमिप ।
रूपसौभाग्यकान्तीनां सा प्रतिष्ठा महाश्रियाम् ॥

खड्गबाणगदाशूलशङ्खचक्रभुसुण्डिभृत् ।
परिघं कार्मुकं शीर्षं निश्च्योतद्रुधिरं ददौ ॥

एषा सा वैष्णवी माया महाकाळी दुरत्यया ।
आराधिता वशीकुर्यात्पूजाकर्तुश्चराचरम् ॥

इति ध्यात्वा ॥ ओम् ऐं महाकाळ्यै नमः इति गन्धादिभिस्सम्पूज्य देव्या वाम-भागे तृतीयबीजे स्थितां महासरस्वतीमुक्तरूपां ध्यायेत् ॥

गौरीदेहात्समुद्भूता या सत्वैकगुणाश्रया ।
साक्षात्सरस्वती प्रोक्ता शुम्भासुरनिबर्हिणी ॥

दधौ चाष्टभुजा बाणान्मुसलं शूलचक्रभृत् ।
शङ्खं च लांगलं घण्टां कार्मुकं वसुधाधिप ॥

एषा संपूजिता भक्त्या सर्वज्ञत्वं प्रयच्छति ।
निशुम्भमथनी देवी शुम्भासुरनिर्बर्हिणी ॥

इति ध्यात्वा ॥ ओम् क्लीं महासरस्वत्यै नमः । इति गन्धादिभिस्सम्पूज्य महालक्ष्म्याः पृष्ठभागे ब्रह्मासरस्वतीभ्यां नमः । महाकाळ्याः पृष्ठभागे रुद्रगौरीभ्यां नमः । महासरस्वत्याः पृष्ठभागे हृषीकेशलक्ष्मीभ्यां नमः इति सम्पूज्य । महालक्ष्म्याः वामभागे महिषासुराय नमः । तद्दक्षिणभागे सिंहाय नमः इति सम्पूज्य । षट्सु कोणेषु देव्यग्रकोणमारभ्य प्रादक्षिण्येन ओम् नं नन्दायै नमः । ओम् रं रक्तदन्तिकायै नमः । ओम् शां शाकंभर्यै नमः । ओम् दुं दुर्गायै नमः । ओम् भीं भीमायै नमः । ओम् भ्रां भ्रामर्यै नमः । इति गन्धजलपुष्पैस्सम्पूज्य ।

अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ॥

इति देव्याश्शिरसि पुष्पाञ्जलिं दत्वा । देव्या आग्नेयभागे ओं ऐं ह्रीं क्लीं हृदयाय नमः । ईशान्ये ओं ऐं ह्रीं क्लीं शिरसे नमः । नैरृत्यां ओं ऐं ह्रीं क्लीं शिखायै नमः । वायव्ये ओं ऐं ह्रीं क्लीं कवचाय नमः । देव्याः उपरि ओं ऐं ह्रीं क्लीं नेत्रत्रयाय नमः । दिक्षु ओं ऐं ह्रीं क्लीं अस्त्राय नमः । इति गन्धजलपुष्पैस्संपूज्य ।

अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम् ॥

इति पुष्पाञ्जलिं दत्वा । अष्टदळेषु देव्यग्रदळमारभ्य प्रादक्षिण्येन ब्रां ब्राह्म्यै नमः । मां माहेश्वर्यै नमः । कौं कौमार्यै नमः । वं वैष्णव्यै नमः । नां

वारसिंह्यै नमः। वां वाराह्यै नमः। इं इन्द्राण्यै नमः। चां चामुण्डायै नमः। इति गन्धजलपुष्पैस्सम्पूज्य।

अभीष्टसिद्धिं मे देहि शरणागतवत्सले।
भक्त्या समर्पये तुभ्यं तृतीयावरणार्चनम्॥

इति पुष्पाञ्जलिं दत्वा॥ चतुरश्रप्रथमविध्यां देव्यग्रमारभ्य प्रादक्षिण्येन इं इन्द्राय नमः। अं अग्नये नमः। यं यमाय नमः। निं निर्ऋतये नमः। वं वरुणाय नमः। वां वायवे नमः। कुं कुबेराय नमः। ईं ईशानाय नमः इति सम्पूज्य। इन्द्रेशानयोर्मध्ये ह्रीं अनन्ताय नमः। निर्ऋतिवरुणयोर्मध्ये अं ब्रह्मणे नमः। इति गन्ध-जलपुष्पैस्सम्पूज्य।

अभीष्टसिद्धिं मे देहि शरणागतवत्सले।
भक्त्या समर्पये तुभ्यं तुरीयावरणार्चनम्॥

इति पुष्पाञ्जलिं दत्वा। चतुरश्रद्वितीयविध्यां देव्यग्रमारभ्य प्रादक्षिण्येन अं अक्षमालायै नमः। कं कमलाय नमः। बां बाणाय नमः। अं असये नमः। कुं कुशीशाय नमः। गं गदायै नमः। चं चक्राय नमः। त्रिं त्रिशूलाय नमः। पं परशवे नमः। शं शङ्खाय नमः। घं घण्टाय नमः। पां पाशाय नमः। शं शक्तये नमः। दं दण्डाय नमः। चं चर्मणे नमः। चां चापाय नमः। पां पानपात्राय नमः। कं कमण्डलवे नमः। इति सम्पूज्य।

अभीष्टसिद्धिं मे देहि शरणागतवत्सले।
भक्त्या समर्पये तुभ्यं पञ्चमावरणार्चनम्॥

इति सुगन्धपुष्पाञ्जलिं दत्वा॥ देव्या नित्यपूजां कुर्यात्। अथ पूजासमाग्रिः। अशीतिगुंजामिता कस्तूरी तावन्मानं कुकुमं तावज्जातीफलं तावान् कर्पूरः

एतच्चतुष्टयपलमात्रं घर्षयेत् । तेन पलद्वयमनुलेपनं भवति । पलस्तु विंशत्युत्तरत्रिशतगुञ्जामितं पट्टवस्त्रं स्त्रीजनपरिधानयोग्यं हेमगद्याणकत्रयं ग्राह्यं पञ्चविंशतसहस्रसंख्याकानि पुष्पाणि पलत्रय गुग्गुलुः विंशतिदीपाः कुडुपद्वयमात्रं हविष्यनैवेद्यं शतद्वय नागवल्लीदळानि तदनुकूलपूगफलादिकं कर्पूरचूर्णं च ग्राह्यं इत्थं पूजासामग्रीं संपाद्य मूलमुच्चार्य ॥

हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् ।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥

आगच्छ वरदे देवि दैत्यदर्पनिषूदिनि ।
पूजां गृहाण सुमुखि नमस्ते शङ्करप्रिये ॥

सर्वतीर्थमयं वारि सर्वदेवसमन्वितम् ।
इमं घण्टं समागच्छ सान्निध्यमिह कल्पय ।
बलिं पूजां गृहाण त्वमष्टाभिश्शक्तिभिस्सह ॥

ओं महाकाळी महालक्ष्मी महासरस्वतीरावाहयामि । आवाहनादि षण्मुद्राः प्रदर्श्य ॥

तं म आवह जातवेदो लक्ष्मीमनपगामिनीम् ।
यस्यां हिरण्यं विंदेयं गामश्वं पुरुषानहम् ॥

प्रेतासनसमासीने श्वेतपद्मासनासने ।
आसनं कल्पयामीशे चामुण्डे चण्डविक्रमे ॥

महाकाळी महालक्ष्मी महासरस्वतीभ्यो नमः ॥ रत्नसिंहासनं समर्पयामि ॥

अश्वपूर्वां रथमध्यां हस्तिनादप्रबोधिनीम् ।
श्रियं देवीमुपह्वये श्रीर्मा देवीर्जुषताम् ॥

सुरासुरमहामौळिमालामाणिक्यकान्तिभिः ।
विराजितपदद्वन्द्वे पाद्यं ते कल्पयाम्यहम् ॥

महाकळी ………… भ्यो नमः ॥ पाद्ययोः पाद्यम् ॥

कांसोस्मितां हिरण्यप्राकारामाद्रां ज्वलन्तीम् ।
तृप्तां तर्पयन्तीं पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम् ॥

रक्तबीजसमुत्पन्नरत्नासनसमाश्रये ।
ददाम्याचमनं तुभ्यं भक्तानां भद्रदायिनि ॥

महाकाळी ………… भ्यो नमः ॥ आचमनीयम् ।

चन्द्रां प्रभासां यशसा ज्वलन्तीम्
श्रियं लोकेदेवजुष्टामुदाराम् ।

तां पद्मिनीमीं शरणमहं प्रपद्ये
अलक्ष्मीर्मे नश्यतां त्वां वृणे ॥

अनर्घसत्वसंपूर्णे प्रसन्ने नार्घ्यवाञ्छिते ।
अर्घ्यं दास्यामि देवेशि ममानर्घवरप्रदे ॥

महाकाळी ………… भ्यो नमः ॥ हस्तयोरर्घ्यं समर्पयामि ॥

आदित्यवर्णे तपसोधिजातो वनस्पतिस्तव वृक्षोथबिल्वः ।
तस्य फलानि तपसा नुदन्तु मायांतरायाश्च बाह्या अलक्ष्मीः ॥

चामुण्डे चण्डिके दुर्गे दुर्गकाननभीतिदे ।
मधुपर्कं गृहाणेदं महिषासुरमर्दिनि ॥

महाकाळी ………… भ्यो नमः । मधुपर्कम् ॥

उपैतु मां देवसखः कीर्तिश्च मणिनासह ।
प्रादुर्भूतोस्मि राष्ट्रेस्मिन् कीर्तिमृद्धिं ददातु मे ॥
मधुकैटभदर्पघ्नि धूम्रलोचननाशिनि ॥

महाकळी ............ भ्यो नमः । पञ्चामृतस्नानम् ॥

क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम् ।
अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात् ॥

सुवर्णकलशानीतं गङ्गादिसरिदुद्भवम् ।
देवि तुभ्यं प्रदास्यामि स्नानं कुरु शिवप्रिये ॥

महाकाळी ............ भ्यो नः । शुद्धोदकस्नानम् ।

गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्
ईश्वरींग् सर्वभूतानां तामिहोपह्वये श्रियम् ।
पीतांबरधरे देवि पीतांबरसहोदरि
पीतांबरं प्रयच्छामि विद्युत्पिङ्गजटाधरे ॥

महाकाळी ............ भ्यो नमः । वस्त्रयुग्मम् ॥

मनसः काममाकूतिं वाचस्सत्यमशीमहि ।
पशूनांग् रूपमन्नस्य मयि श्रीश्श्रयतां यशः ॥

तक्षकानन्तकार्कोटनागयज्ञोपवीतिनि ।
सौवर्णं यज्ञसूत्रं ते ददामि हरिवाहिनि ॥

महाकाळी ............ भ्यो नमः ।स्वर्णयज्ञोपवीतम् ॥

कर्दमेन प्रजाभूता मयि संभव कर्दम ।
श्रियं वासय मे कुले मातरं पद्ममालिनीम् ॥

किरीटहारकेयूरकङ्कणांगुळिभूषणैः ।
भूषितानि तवाङ्गानि देहि मे सर्वसंपदः ॥

महाकाळी ………… भ्यो नमः । सर्वाभरणानि ॥

आपस्रजंतु स्निग्धानि चिक्लीत वस मे गृहे ।
निच देवीं मातरं श्रियं वासय मे कुले ॥

कर्पुरगन्धसंमिश्रं कस्तूरीकुंकुमान्वितम् ।
श्रीगन्धं ते प्रस्यामि कीर्तिमृद्धिं कुरुष्व मे ॥

महाकाळी ………… भ्यो नमः । दिव्यगन्धान् ॥

आर्द्रां पुष्करिणीं पुष्टिं सुवर्णां हेममालिनीम् ।
सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥

तत्पादजलजद्वन्द्वप्रणत क्षेमदायिनि ।
प्रतिगृह्याक्षतां देवि देहि मह्यं महावरम् ॥

महाकाळी ………… भ्यो नमः । अक्षतान् ॥

आर्द्रां पुष्करिणीं यष्टिं पिङ्गळां पद्ममालिनीम् ।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥

ब्रह्मेश हरि देवेन्द्रप्रमुखामरपूजिते ।
कुसुमानि मनोरम्ये मद्दत्तानि सुरेश्वरि ॥

पद्मशङ्खैश्च पुष्पैश्च शतपत्रविराजितैः ।
पुष्पाणि ते प्रयच्छामि संगृहाण महेश्वरि ॥

महाकाळी ………… भ्यो नमः । पुष्पाणि ॥

तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ।
यस्यां हिरण्यं प्रभूतं गावो दास्योश्वान् विंदेयं पुरुषानहम् ॥

श्रीवृक्षममृतोद्भूतं महादेवप्रियं सदा ।
बिल्वपत्रं प्रदास्यामि पवित्रं ते सुरेश्वरि ॥

महाकाळी ………… भ्यो नमः । बिल्वपत्रम् ॥ अङ्गपूजा ॥ दुर्गायै नमः पादौ पूजयामि । जयन्त्यै नमः गुल्भौ पूजयामि । मङ्गळायै नमः जानुनी पूजयामि । काळ्यै नमः ऊरू पूजयामि । भद्रकाळ्यै नमः कटिं पूजयामि । कपालिन्यै नम नाभिं पूजयामि । कौमार्यै नमः हृदयं पूजयामि । मदनमात्रे नमः स्तनौ पूजयामि । भद्रायै नमः भुजान् पूजयमि । अभयप्रदायै नमः हस्तान् पूजयामि । स्वधायै नमः कण्ठं पूजयामि । महिषघ्न्यै नमः नेत्राणि पूजयामि । सिंहवाहिन्यै नमः मुखं पूजयामि। शिवायै नमः ललाटं पूजयामि । कुमार्यै नमः शिरः पूजयामि । नवदुर्गारूपिण्यै नमः सर्वाङ्गाणि पूजयामि ॥



## ॥ अथाष्टोत्तरशतनामपूजा ॥

### — चण्डचष्टोत्तरशतनामावळिः —

ॐ महत्यै नमः
,, चेतनायै ,,
,, मायायै ,,
,, महागौर्यै ,,
,, महेश्वर्यै ,,
,, महोदरायै ,,
,, महाबुद्ध्यै ,,

ॐ महाकाळ्यै नमः
,, महाबलायै ,,
,, महासुधायै ,, १०
,, महानिद्रायै ,,
,, महामुद्रायै ,,
,, महोदयायै ,,
,, महालक्ष्म्यै ,,

ॐ महाभोगायै नमः
,, महामोहायै ,,
,, महाजयायै ,,
,, महातुष्टयै ,,
,, महालज्जायै ,,
,, महाधृत्यै ,, २०
,, महाघोरायै ,,
,, महादंष्ट्रायै ,,
,, महाकान्त्यै ,,
,, महास्मृत्यै ,,
,, महाश्रद्धायै ,,
,, महामेधायै ,,
,, महाबोधायै ,,
,, महातपसे ,,
,, महास्थानायै ,,
,, महारवायै ,, ३०
,, महारोषायै ,,
,, महायुधायै ,,
,, महाबन्धनसंहत्र्यै नमः
,, महाभयविनाशिन्यै ,,
,, महानेत्रायै नमः
,, महावक्त्रायै ,,
,, महावक्षसे ,,
,, महाभुजायै ,,
,, महामहीरुहायै ,,
,, पूर्णायै ,, ४०

ॐ महाछायायै नमः
,, महानघायै ,,
,, महाशान्त्यै ,,
,, महाश्वासायै ,,
,, महापर्वतनन्दिन्यै ,,
,, महाब्रह्ममय्यै ,,
,, मात्रे ,,
,, महासारायै ,,
,, महासुरघ्न्यै ,,
,, महत्यै ,, ५०
,, पार्वत्यै ,,
,, चर्चिकायै ,,
,, शिवायै ,,
,, महाक्षान्त्यै ,,
,, महाभ्रान्त्यै ,,
,, महामन्त्रायै ,,
,, महीमय्यै ,,
,, महाकुलायै ,,
,, महालोलायै ,,
,, महामायायै ,, ६०
,, महाफलायै ,,
,, महानीलायै ,,
,, महाशीलायै ,,
,, महाबालायै ,,
,, महाकलायै ,,
,, महाचित्रायै ,,

ॐ महासेतवे नमः
,, महाहेतवे ,,
,, यशस्विन्यै ,,
,, महाविद्यायै ,, ७०
,, महासाध्यायै ,,
,, महासत्यायै ,,
,, महागत्यै ,,
,, महासुखिन्यै ,,
,, महादुस्स्वप्ननाशिन्यै नमः
,, महामोक्षप्रदायै ,,
,, महापक्षायै ,,
,, महीयस्यै ,,
,, महाभद्रायै ,,
,, महावाण्यै ,, ८०
,, महारोगविनाशिन्यै नमः
,, महाधारायै नमः
,, महाकारायै ,,
,, महामायै ,,
,, खेचर्यै ,,
,, महाक्षेमंकर्यै ,,

ॐ महाक्षमायै नमः
,, महैश्वर्यप्रदायिन्यै ,,
,, महाविषघ्न्यै ,,
,, विषदायै ,, ९०
,, महादुर्गविनाशिन्यै नमः
,, महावर्षायै नमः
,, महातत्वायै ,,
,, महाकैलासवासिन्यै नमः
,, महासुभद्रायै नमः
,, सुभगायै ,,
,, महाविद्यायै ,,
,, महासत्यै ,,
,, महाप्रत्यङ्गिरायै ,,
,, महानित्यायै ,, १००
,, महाप्रळयकारिण्यै नमः
,, महाशक्त्यै नमः
,, महामत्यै ,,
,, महामङ्गळकारिण्यै नमः
,, महादेव्यै नमः

॥ अष्टोत्तरशतनापूजां समर्पयामि ॥



सहस्रनामचण्डीनामादिभिश्च सम्पूज्य

यश्शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् ।
श्रियः पञ्चदशर्चंञ्च श्रीकामस्सततं जपेत् ॥

चन्दनागरुकर्पूरसारगुग्गुलुसंयुतम् ।
धूपं गृहाण चामुण्डे काळरूपे नमोस्तु ते ॥

महाकाळी महालक्ष्मी महासरस्वतीभ्यो नमः । धूपं समर्पयामि ॥

पद्मासने पद्मऊरु पद्माक्षी पद्मसम्भवे ।
त्व मां भजस्व पद्माक्षि येन सौख्यं लभाम्यहम् ॥

कपिलाघृतसंयुक्तं दीपं कार्पासवर्तिकम् ।
कर्पूररेणुसंयुक्त सर्वबन्धविमोचनम् ॥

महाकाळी महालक्ष्मी महासरस्वतीभ्यो नमः । दीपं दर्शयामि ॥

अश्वदायि गोदायि धनदायि महाधने ।
धनम्मे जुषतां देवि सर्वकामार्थसिद्धये ॥

नानादिव्यान्नसंयुक्तं नानाफलसमन्वितम् ।
नानापायससंयुक्तं नानाभोज्यसमन्वितम् ॥

शर्करामधुसंयुक्तं आज्याद्यैः परिपूरितम् ।
गृहाण दुर्गे नैवेद्यं महिषासुरमर्दिनि ॥

महाकाळी महालक्ष्मी महासरस्वतीभ्यो नमः । नैवेद्यं समर्पयामि ॥

पुत्रपौत्रधनं धान्यं हस्त्यश्वाजावि गोरथम् ।
प्रजानां भवसि माता आयुष्मन्तं करोतु माम् ॥

पानीयं पावनं श्रेष्ठं गङ्गादि सरिदुद्भवम् ।
हस्तप्रक्षाळनं देवि शुद्ध्यर्थं प्रतिगृह्यताम् ।।

महाकाळी महालक्ष्मी महासरस्वतीभ्यो नमः । पानीयंसमर्पयामि ।।
उत्तरापोशनम् ।। हस्तप्रक्षाळनं पादप्रक्षाळनं पुनराचमनं समर्पयामि ।।

चन्द्राभां लक्ष्मीमीशानां सूर्याभां श्रियमीश्वरीम् ।
चन्द्रसूर्याग्निवर्णाभां महालक्ष्मीमुपास्महे ।।

कर्पूरखण्डसंयुक्तं कस्तूरीपूगसंयुतम् ।
मुक्ताचूर्णसमायुक्तं ताम्बूलं प्रतिगृह्यताम् ।।

महाकाळी महालक्ष्मी महासरस्वतीभ्यो नमः । ताम्बूलं समर्पयामि ।।

धनमग्निर्धनं वायुर्धनं सूर्यो धनं वसुः ।
धनमिन्द्रो बृहस्पतिर्वरुणं धनमश्नुते ।।

कर्पूरवह्निसंयुक्तस्सुभगस्सुप्रकाशकः ।
सर्वदेवप्रियकरो दीपोऽयं प्रतिगृह्यताम् ।।

महाकाळी महालक्ष्मी महासरस्वतीभ्यो नमः । नीराजनं समर्पयामि ।।

वर्षं तु ते विभावरि दिवो अभ्रस्य विद्युतः ।
रोहन्तु सर्वबीजा न्यवब्रह्म द्विषो जहि ।।

सर्वमङ्गळमाङ्गल्ये शिवे सर्वार्थसाधके ।
शरण्ये त्र्यंबके देवि नारायणि नमोस्तु ते ।।

महाकाळी महालक्ष्मी महासरस्वतीभ्यो नमः । मन्त्रपुष्पं समर्पयामि ।।

पद्मप्रिये पद्मिनि पद्महस्ते पद्मालये पद्मदळायताक्षि ।
विश्वप्रिये विष्णुमनोनुकूले त्वत्पादपद्मं मयि सन्निधत्स्व ।।

महादुर्गे नमस्तेस्तु सर्वेष्टफलदायिनि ।
प्रदक्षिणं करोमि त्वां प्रीयतां हरिवल्लभे ॥

शूलेन पाहि नो देवि पाहि खड्गे चाम्बिके ।
घण्टास्वनेन नः पाहि चापज्यानिस्वनेन च ॥

प्राच्यां रक्ष प्रतीच्यां च चण्डिके रक्ष दक्षिणे ।
भ्रामणेनात्मशूलस्य उत्तरस्यां तथेश्वरि ॥

सौम्यानि यानि रूपाणि त्रैलोक्ये विचरन्ति ते ।
यानि चात्यर्थघोराणि तैरक्षास्मां स्तथा भुवम् ॥

खड्गशूलगदादीनि यानि चास्त्राणि तेऽम्बिके ।
करपल्लवसङ्गीतैरस्मान्रक्षतु सर्वतः ॥

महाकाळी महालक्ष्मी महासरस्वतीभ्यो नमः । प्रदक्षिणं समर्पयामि ॥

या सा पद्मासनस्था विपुलकटितटी पद्मपत्रायताक्षी
गम्भीरावर्तनाभिस्तनभरनमिता शुभ्रवस्त्रोत्तरीया ।
लक्ष्मीर्दिव्यैर्गजेन्द्रैर्मणिगणखचितैस्स्नापिता हेमकुम्भैः
नित्यं सा पद्महस्ता मम वसतु गृहे सर्वमाङ्गल्ययुक्ता ॥

नमो देव्यै महादेव्यै शिवायै सततं नमः ।
नमः प्रकृत्यै भद्रायै नियताः प्रणताःस्म ताम् ॥

रौद्रायै नमो नित्यायै गौर्यै धात्र्यै नमो नमः ।
ज्योत्स्नायै चेन्दुरूपिण्यै सुखायै सततं नमः ॥

कल्याण्यै प्रणतामृद्ध्यै कूर्मो नमो नमः ।
नैऋत्यै भूभृतां लक्ष्म्यै शर्वाण्यै ते नमो नमः ॥

दुर्गायै दुर्गपारायै सारायै सर्वकारिण्यै ।
ख्यात्यै तथैव कृष्णायै धूम्रायै सततं नमः ॥

अतिसौम्यातिरौद्रायै नतास्तस्यै नमो नमः ।
नमो जगत्प्रतिष्ठायै देव्यै कृत्यै नमो नमः ॥

महाकाळी महाळक्ष्मी महासरस्वतीभ्यो नमः । नमस्कारान् समर्पयामि ॥

सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्वि ते ।
भयेभ्यस्त्राहि नो देवि दुर्गे देवि नमोस्तुते ॥

एतत्ते वदनं सौम्यं लोचनत्रयभूषितम् ।
पातु नस्सर्वभूतेभ्यः कात्यायनि नमोस्तु ते ॥

ज्वाळाकराळमत्युग्रमशेषासुरसूदनम् ।
त्रिशूलं पातु नो भीतेर्भद्रकळि नमोस्तु ते ॥

हिनस्ति दैत्यतेजांसि स्वनेनापूर्य या जगत् ।
सा घण्टा पातु नो देवी पापेभ्यो नस्सुतानिव ॥

असुरासृग्वसापङ्कचर्चितस्ते करोज्वलः ।
शुभाय खड्गो भवतु चण्डिके त्वां नता वयम् ॥

रोगानशेषानपहंसि तुष्टा
पुष्णासि कामान्सकलानभीष्टान् ।
त्वामाश्रितानां नविपन्नराणाम्
त्वामाश्रिताह्याश्रयतां प्रयान्ति ॥

महादेव्यै च विद्महे सर्वसिद्ध्यै च धीमहि । तन्नो लक्ष्मीः प्रचोदयात् ।

कुंकुमेन समायुक्तं पुष्पाक्षतसमन्वितम् ।
बिल्वपत्रैस्समायुक्तं पुनरर्घ्यं ददाम्यहम् ॥

महाकाळी महालक्ष्मी महासरस्वतीभ्यो नमः । पुनरर्घ्यं समर्पयामि ॥

महिषघ्नि महामाये चामुण्डे चण्डविक्रमे ।
देहि मे विजयारोग्यं सर्वशत्रुविनाशनम् ॥

महाकाळी महालक्ष्मी महासरस्वतीभ्यो नमः । प्रार्थनां समर्पयामि ॥
एवं महालक्ष्मीं सम्पूज्य बलिदानं कुर्यात् ।

देव्याः पुरो भागे भूमिं प्रोक्ष्य चतुष्कोणमण्डलं कृत्वा चन्दनादिभि-रलंकृत्य "व्यापकमण्डलाय नम" इति सम्पूज्य —

यशो देहि जयं देहि चण्डिके भक्तवत्सले ।
गृहाणेमं बलिं मातर्देहि सिद्धिमनुत्तमाम् ॥

इति गन्धाक्षतपुष्पसहितबलिं देव्यै निवेद्य वटुकादिबलिं पानं कुर्यात् ॥ चतु-ष्कोणमण्डलस्य ईशानाग्नि नैऋतिवायव्यकोणेषु मण्डलचतुष्कं तदुत्तरभागे मण्डलमेकं निर्माय सर्वत्र व्यापकमण्डलाय नम इति सम्पूज्य ॥ ईशानमण्डले वं वटुकभैरवाय नम इत्यावाह्य ध्यात्वा संपूज्य । एह्येहि देवीपुत्र वटुकनाथ कपिलजटाभारभासुर त्रिनेत्र ज्वालामुख सर्वविघ्नान्नाशय नाशय सर्वोपचारसहितं बलिं गृहाण गृहाण स्वाहेति अंगुष्ठानामिकाभ्यां बलिमुत्सृज्य ।

बलिदानेन संतुष्टो वटुकस्सर्वसिद्धिदः ।
शान्तिं करोतु मे नित्यं भूतभेताळसेवितः ॥

इति पुष्पाञ्जलिं दत्वा प्रणमेदिति वटुकबलिः ॥ अग्नेयमण्डलेयां योगिनीभ्यो नम। इति योगिनीस्समावाह्य पूजयित्वा ध्यात्वाः बलिं गृहीत्वा। यां योगिनीभ्यो नमः। योगिन्यस्सर्वोपचारसहितं बलिं गृह्णन्तु इति मन्त्रेण अंगुष्ठमध्या-नामिकाभिः बलिमुत्सृज्य ।

या: काश्चिद्योगिनी रौद्रास्सौम्या घोरतराश्रयाः ।
खेचरी भूचरी व्योमचर्यस्तुष्टास्तु मे सदा ॥

इति योगिनीबलिः । निरृतिमण्डले क्षं क्षेत्रपालकाय नम इति पुष्पाञ्जलिं निक्षिप्य योनिमुद्रया प्रदर्श्य क्षेत्रपाल एह्येहि इहागच्छागच्छ क्षेत्रपाल सर्वोपचारसहितं बलिं गृहाण गृहाण स्वाहा इति मन्त्रेणांगुष्ठतर्जनीभ्यां बलिमुत्सृज्य ।

यस्मिन् क्षेत्रे निवासी च क्षेत्रपालस्य किङ्करः ।
प्रीतोऽयं बलि दानेन सर्वरक्षां करोतु मे ॥

इति पुष्पाञ्जलिं दत्वा प्रणमेदिति क्षेत्रपालबलिः ॥ अथ वायव्यमण्डले गं गणपतये नम इति संपूज्य गणपते इहागच्छागच्छ इत्यावाह्य ध्यात्वा संपूज्य वरवरदसर्वजनम्मे वशमानय बलिं गृहाण गृहाण स्वाहा । इति मन्त्रेण मध्यमांगुष्ठाभ्यां बलिमत्सृज्य ।

सर्वदा सर्वकार्येषु निर्विघ्नं साधयेन्मम ।
शान्तिं करोतु सततं विघ्नराजस्सशक्तिकः ॥

इति पुष्पाञ्जलिं दत्वा प्रणमेदिति गणपतिबलिः ॥ अथ उत्तरदिग्भागमण्डले सुरासुरनराद्यास्सर्वभूतगणा इहागच्छतागच्छत इत्यावाह्य सुरासुरनरादिभ्यस्सर्वेभ्यो भूतगणेभ्यो नम इति संपूज्य । ओं ह्रीं सर्वविघ्नकृद्भ्यस्सर्वेभ्यो भूतेभ्यो ह्रूं स्वाहा सर्वभूतेभ्य एष बलिर्नम इति सर्वांगुळीभिर्बलिमुत्सृज्य पुष्पाञ्जलिमादाय ।

पाताळतलसंस्थाश्च शिवयोगेन भाविताः ।
क्रूराद्याश्शतसंख्याकाः पाषण्डाद्या व्यवस्थिताः ।
तृप्यन्तु प्रीतमनसः भूत्वा गृह्णन्त्विमं बलिम् ॥

इति संपूज्य प्रणमेदिति भूतबलिः । एवं बलिं कृत्वा धूपं दत्वा देव्यै पुष्पाञ्जलिसमर्प्य ।

साधु वाऽसाधु वा कर्म यद्यदाचरितं मया ।
तत्सर्वं भगवत्यम्ब गृहाणाराधनं परम् ।।

इति समर्प्य ।

रश्मिरूपा महादेव्यश्चात्र पूजितदेवताः ।
महालक्ष्म्यङ्गलीनास्तास्सन्तु सर्वशुभावहाः ।।

इति देव्यङ्गे परिवारदेवता विलीना विभाव्य स्वयं तन्मयो भूत्वा कुमारीं पूजयेत ।। तत्प्रकारस्तु —

एकवर्षा तु या कन्या पूजार्थं तां परित्यजेत् ।
द्विवर्षकन्यामारभ्य दशवर्षावधिक्रमात् ।।

पूजयेत्सर्वकार्येषु यथा विध्युक्तमार्गतः ।
कन्यकाया द्विवर्षा च त्रिवर्षा च त्रिमूर्तिका ।।

चतुर्वर्षा च कल्याणी पञ्चवर्षा च रोहिणी ।
षड्वर्षा काळिका चान्या सप्तवर्षा तु चण्डिका ।।

अष्टवर्षा शाम्भवी स्याद् दुर्गा च नवमी स्मृता ।
सुभद्रा दशवर्षोक्ता नाममन्त्रैः प्रपूजयेत् ।।

तासामावाहने मन्त्रः प्रोच्यते शङ्करोदितः ।
मन्त्राक्षरमयीं लक्ष्मीं मातृणां रूपधारिणीं ।।

नवदुर्गात्मिकां साक्षात्कन्यामावाहयाम्यहम् ।
कुमारिकादि कन्यानां पूजामन्त्रान् ब्रुवेध्रुवा ।।

जगत्पूज्ये जगद्वन्द्ये सर्वशक्तिस्वरूपिणि ।
पूजां गृहाण कौमारि जगन्मातर्नमोस्तु ते ॥

त्रिपुरां त्रिपुराधारां त्रिवर्षां ज्ञानरूपिणीम् ।
त्रैलोक्यवन्दितां देवीं त्रिमूर्ति पूजयाम्यहम् ॥

कलात्मिकां कलातीतां कारुण्यहृदयां शिवाम् ।
कल्याणजननीं देवीं कल्याणीं पूजयाम्यहम् ॥

अणिमादिगुणाधारामकाराद्यक्षरात्मिकाम् ।
अनन्तशक्तिकां लक्ष्मीं रोहिणीं पूजयाम्यहम् ॥

कामचारीं शुभां कान्तां कालचक्रस्वरूपिणीम् ।
कामदां करुणोदारां काळिकां पूजयाम्यहम् ॥

चण्डवीरां चण्डमायां चण्डमुण्डप्रभञ्जनीम् ।
पूजयामि सदा देवीं चण्डिकां चण्डविक्रमाम् ॥

सदानन्दकरीं शान्तां सर्वदेवनमस्कृताम् ।
सर्वभूतात्मिकां लक्ष्मीं शाम्भवीं पूजयाम्यहम् ॥

दुर्गमे दुस्तरे कार्ये भवदुःखविनाशिनीम् ।
पूजयामि सदा भक्त्या दुर्गां दुर्गतिनाशिनीम् ॥

सुन्दरीं स्वर्णवर्णाभां सुखसौभाग्यदायिनीम् ।
सुभद्रजननीं देवीं सुभद्रां पूजयाम्यहम् ॥

एतैर्मन्त्रैः पुराणोक्तैस्तां तां कन्यां समर्चयेत् ॥

तद्यथा – प्रथमेह्नि प्रातःकाले विशेषेण अभ्यञ्जनादिकं कारयित्वा पूर्वाभिमन्त्रितां द्विवर्षात्मिकामखिलालंकारशोभितां कन्यामाहूय देव्याः पुरोभागे

[ 59 ]

त्रिकोणवृत्तचतुरश्रमण्डलं विलिख्य गन्धाक्षतकुसुमादिभिस्सर्वाभ्यश्चण्डिकापीठशक्तिभ्यो नम इति संपूज्य पीठोपरि कन्यामुपवेश्य ।

मन्त्राक्षरमयीं लक्ष्मीं मातृणां रूपधारिणीम् ।
नवदुर्गात्मिकां साक्षात्कन्यामावाहयाम्यहम् ॥

— इत्यावाह्य —

जगत्पूज्ये जगद्वन्द्ये सर्वशक्तिस्वरूपिणि ।
पूजां गृहाण कौमारि जगन्मातर्नमोस्तु ते ॥

इति संप्रार्थ्य ॥ तन्मूर्ध्नि पुष्पाञ्जलिं निक्षिप्य कन्यां परदेवतारूपां विभाव्य तस्याश्चरणौ मण्डले संस्थाप्य उष्णोदकेन प्रक्षाळ्य गन्धपुष्पाक्षतैरभ्यर्च्य त्रिमूर्तिकादिनामभिष्षोडशोपचारान् कुर्यात् ॥ द्वित्रिचतुः पञ्चषट्सप्ताष्टनवदशमेषु कन्यका त्रिमूर्ति कल्याणी रोहिणी काळिका चण्डिका शांभवी दुर्गा सुभद्रानामभिः कन्यां पूजयेत् यथा मूलेन स्वाङ्गन्यासं कृत्वा आत्मानं विधिवत्संपूज्य कुमारीं ध्यायेत् ।

ध्यानम् — अथ ध्यात्वा कुमारीं तां महालक्ष्मीस्वरूपिणीम् ।
मातुलुङ्गं गदां खेटं पात्रं पीयूषपूरितम् ॥

दक्षिणाधः क्रमाद्धस्तैर्बिभ्रतीं सर्वमङ्गळाम् ।
सुतप्तहेमवर्णाङ्गामाद्याम्मावेशपूजिताम् ।
नवाक्षरेण मन्त्रेण सुसिद्धेन समाचरेत् ॥

इति ध्यात्वा । महालक्ष्मीस्वरूपिण्यै कुमार्यै नमः ध्यानावाहनाचमनीयमधुपर्कस्नानवस्त्रकञ्चुकग्रैवेयककङ्कणांगुळीयकाद्याभरणदर्पणगन्धपुष्पमाल्यधूपदीपादिभिरभ्यर्च्य नानाविधभक्ष्यभोज्यपायसादिभिः देवीसूक्तजपपूर्वकं भोजयित्वा उत्तराचमनताम्बूलादि दत्वा नीराजनप्रदक्षिणनमस्कारैस्सन्तोष्य कुमारी-

मुद्रापयेत्। एवं सकलसौभाग्यद्रव्यैस्साकं कन्यापूजां कृत्वा आचार्योऽन्येभ्यः ब्राह्मणेभ्यस्सप्तशती पाठार्थमनुज्ञां दद्यात्॥ ते विप्राः कृतानुज्ञाः वेद्यामाचार्यसन्निधौ भूशुद्ध्याद्यखिलन्यासजालं कृत्वा चण्डिकान्यासपूर्वकं सरहस्यचरित्रत्रयं जप्त्वा उत्थाय देवीं प्रदक्षिणनमस्कारैः परितोष्य इष्टार्थं प्रार्थयेयुः।

॥ इति शतचण्डीसहस्रचण्ड्यादि कलशस्थापनादि पूजाप्रकारस्समाप्तः॥

अष्टमीनवमीचतुर्दशीपौर्णमासीषु यथा शतावृत्तिसमाप्तिर्भवेत् तथारम्भः कर्तव्य इति संप्रदायः॥ एवं चतुर्दिनं कुर्यात्। तत्र प्रथमेह्नि एकावृत्तिः द्वितीये द्वे तृतीये तिस्रश्चतुर्थे चतस्र इति॥ एवमेव प्रथमेह्नि एककन्यकां द्वितीये कन्याद्वयं तृतीये कन्यात्रयं चतुर्थे कुमारीचतुष्टयं च पूजयेत्। चतुर्थदिवस एव मिथुनत्रयञ्च पूजयेत्॥ पञ्चमेह्नि प्रातःकृत्यं विधाय सप्तशतीपाठदशांशतर्पणं गोक्षीरकुंकुमादिना विधाय तन्निशि होमं कुर्यात्॥

होमद्रव्याणि —

पायसान्नैस्त्रिमध्वक्तैर्द्राक्षारम्भाफलादिभिः
मातुलुङ्गैरिक्षुखण्डैर्नारिकेळयुतैस्तिलैः।
जातीफलैराम्रफलैरन्यैर्मधुरवस्तुभिरिति॥

सप्तशत्या दशावृत्या प्रतिमन्त्रं हुतं चरेत्
अयुतं च नवार्णेन स्थापितेग्नौ विधानतः।
कृत्वावरणदेवानां होमं तन्नाममन्त्रतः
कृत्वा पूर्णाहुतिं सम्यग्देवीमग्निं विसृज्य च।
अभिषिञ्चेच्च यष्टारं विप्रौघः कलशोदकैरिति॥

— होमविधिः —

अथ शतचण्ड्यादिहोमप्रयोगो लिख्यते। अथ होमप्रकारः।

शतचण्डीविधानस्य होमकुण्डस्य लक्षणम् ।
किमायामश्च देवेश कर्तव्यं खननस्य च ॥

ईश्वरः —

रहस्यमपि वक्ष्यामि श‍ृणु नान्यमनाः प्रिये ।
सर्वेषां कर्मणां कुण्डभेद उक्तस्स लक्षणः ॥

आयामनिम्नयोर्मानं लक्षणं सुन्दरि श‍ृणु ।
शतचण्डीविधाने तु वक्षोदघ्नप्रमाणतः ॥

खननं तस्य विस्तारो हस्तद्वयमुदाहृतः ।
योनिर्वितस्तिमात्रं च मेखलात्रयसंयुतम् ॥

ऋत्विग्भिस्सहितः कुर्यादाचार्यो विजितेन्द्रियः ।
मेखलालक्षणं वक्ष्ये द्व्यगुळोन्नतमानतः ॥

अंगुळीनां चतुष्कं स्यादायामे च विधानतः ।
अन्तराळे द्व्यंगुळं स्यात्परिमाणमुदीरतम् ॥

इत्युक्तरीत्या कुण्डं परिकल्प्य तत्समीपे आचार्यो ऋत्विक्परिवृतस्सन्नुपविश्य देशकालौ सङ्कीर्त्य सप्तशतीशतजपताङ्गतासिद्ध्यर्थं दशांशत्वेनोक्तद्रव्यैर्होमं करिष्य इति सङ्कल्प्य कुण्डस्थपांसून्निरस्य कुण्डे त्रिकोणमुल्लिख्य तत्र ह्रीमिति मायाबीजं विलिख्य गोमुखमुद्रां प्रदर्श्य मूलेन निरीक्ष्य अस्त्रेण संप्रोक्ष्य कुण्डमध्यं मूलेन संपूज्य अस्त्रेणावकुण्ठ्य प्रागग्रोदगग्रास्तिस्रस्तिस्रो रेखाः लिखित्वा —

प्राचीः पूर्वमुदक्संस्थं दक्षिणारंभमालिखेत् ।

ततोदीचीः पुरस्संस्थं पश्चिमारम्भमालिखेत् ।

इति प्रागग्ररेखासु – मुकुन्दाय नमः। ईशानाय नमः। पुरंदराय नमः। इति संपूज्य॥ उदगग्ररेखासु ब्रह्मणे नमः। वैवस्वताय नमः। इन्दवे नमः। इति संपूज्य॥ तन्मध्ये त्रिकोणषट्कोणवृत्ताष्टदलचतुरश्रात्मकं यन्त्रं परिकल्प्य मूलेनाभ्युक्ष्य वैश्वानरस्थंडिलाय नमः। इति गन्धपुष्पाक्षतैरभ्यर्च्य तत्र वैश्वानरपीठशक्तिः पूजयेत्। यन्त्राद्बहिरष्टदिक्षु पूर्वादितः ॐ ऐं ह्रीं श्रीं पीतायै नमः। ॐ ३ श्वेतायै नमः। ॐ ३ अरुणायै नमः। ॐ ३ कृष्णायै नमः। ॐ ३ धूम्रायै नमः। ॐ ३ तीव्रायै नमः। ॐ ३ स्फुलिङ्गिन्यै नमः। ॐ ३ विस्फुलिङ्गिन्यै नमः। मध्ये यन्त्राधारे। ॐ ३ ज्वालिन्यै नमः। इति संपूज्य। कुण्डं देवीशरीरत्वेन सञ्चित्य देव्या योनौ गर्भस्थाने सूर्यकान्तोद्भवं अरणिमन्थनोद्भूतं श्रोत्रियगृहादानीतं वा अग्निं संपाद्य कांस्यादिभाजने विक्षिप्य क्रव्यादेभ्यो हुं फट् स्वाहेति मन्त्रेण नैरृत्यां एकमङ्गारं परित्यज्य शिष्टाग्निं मूलेनाभिमन्त्र्य प्रणवेन प्रतिष्ठाप्य कुण्डं नवसूत्रेण संवेष्ट्य मूलविद्यां जपन् हुमिति बीजेन मुखफूत्कारेण त्रि प्रज्वाल्य चित्पिङ्गळ हन हन दह दह पच पच सर्वज्ञा ज्ञापय स्वाहा इति मन्त्रेण प्रज्वाल्य चिदग्निं विभाव्य।

अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम्।
सुवर्णवर्णममलं समिद्धं सर्वतोमुखम्॥

इति संप्रार्थ्य चत्वारि शृंगेति परिस्तरणान्तं कृत्वा प्रणवेन प्राणानायम्य वैश्वानरमन्त्रन्यासं कुर्यात्॥ अस्यश्री वैश्वानरमहामन्त्रस्य भृगुऋषिः गायत्रीच्छन्दः वैश्वानरो देवता रं बीजं स्वाहा शक्तिः हुंफट् कीलकं मम वैश्वानरध्यानावाहने विनियोगः। सहस्रार्चिषे अंगुष्ठाभ्यां नमः। स्वस्तिपूरणाय तर्जनीभ्यां नमः। उत्तिष्ठ पुरुषाय मध्यमाभ्यां नमः। धूमव्यापिने अनामिकाभ्यां नमः। सप्तजिह्वाय कनिष्ठिकाभ्यां नमः। धनुर्धराय करतलकरपृष्ठाभ्यां नमः। एवं हृदयादिन्यासं कृत्वा वैश्वानरजातवेद इहावह

लोहिताक्ष सर्वकर्माणि साधय साधय हुंफट् स्वाहेति मूलमन्त्रेण व्यापकन्यासं कृत्वा अस्त्रेण ताळत्रयं कृत्वा भूर्भुवस्सुवरोमिति दिग्बन्धः ।।

ध्यानम् – त्रिनयनमरुणप्ताबद्धमौळिं सशुक्लाम्
शुकमरुणमनेकाकल्पमंभोजसंस्थम् ।
अभिमतवरशक्तिस्वस्तिकाभीतिहस्तम्
नमत कनकमालालंकृताङ्गं कृशानुम् ।।

इति ध्यात्वा – पूर्वोक्त यन्त्रत्रिकोणमध्ये वैश्वानरमूलमन्त्रेण वैश्वानरमूर्ति मावाह्य वैश्वानराय नम इति संपूज्य । त्रिकोणकोणाग्ररेखासु क्रमात्प्रादक्षिण्येन ओं ऐं ह्रीं श्रीं श्य्र्यूं विश्वमूर्त्यै नमः । ओं ३ ष्य्र्यूं स्फुलिङ्गिन्यै नमः । ओं ३ स्य्र्यूं धूम्रवर्णायै नमः । ओं ३ ह्य्र्यूं मनोजवायै नमः । ओं ३ ल्य्र्यूं लोहितायै नमः । ओं क्ष्य्र्यूं कराळास्यायै नमः । इति षडभ्यर्च्य । ओं ३ मध्ये य्य्र्यूं नाळायै नः । इति तामससप्तजिह्वास्संपूज्य ततः त्रिकोणकोणाग्ररेखासु ओं ऐं ह्रीं श्रीं श्य्र्यूं पद्मरागायै नमः । ओं ३ ष्य्र्यूं सुवर्णायै नमः । ओं ३ स्य्र्यूं भद्रलोहितायै नमः । ओं ३ ह्य्र्यूं रोहितायै नमः । ओं ३ ल्य्र्यूं श्वेतायै नमः । ओं ३ क्ष्य्र्यूं धूमिन्यै नमः । इति षडभ्यर्च्य ।। मध्ये ओं ३ य्य्र्यूं कराळिकायै नमः । इति राजससप्तजिह्वस्सम्पूज्य ततः पूर्वोक्तत्रिकोणकोणाग्ररेखासु प्राग्वत् । ओं ऐं ह्रीं श्रीं श्य्र्यूं हिरण्यायै नमः । ओं ३ ष्य्र्यूं कनकायै नमः । ओं ३ स्य्र्यूं रक्तायै नमः । ओं ३ ह्य्र्यूं कृष्णायै नमः । ओं ३ ल्य्र्यूं सुप्रभायै नमः । ओं ३ क्ष्य्र्यूं अतिरक्तायै नमः इति षडभ्यर्च्य । पूर्ववन्मध्ये य्य्र्यूं बहुरूपायै नमः । इति सात्विकसप्तजिह्वास्सम्पूज्य ।। षट्कोणेषु – ओं ३ हृदयदेव्यै नमः । ओं ३ शिरोदेव्यै नमः । ओं ३ शिखादेव्यै नमः । ओं ३ कवचदेव्यै नमः । ओं ३ नेत्रदेव्यै नमः । ओं ३ अस्त्रदेव्यै नमः । ततः अष्टदळेषु प्रादक्षिण्येन ओं ३ ब्राह्म्यै नमः । ओं ३ माहेश्वर्यै नमः । ओं ३ कौमार्यै नमः । ओं ३ वैष्णव्यै नमः । ओं ३ वाराह्यै नमः । ओं ३ इन्द्राण्यै नमः । ओं ३ नारसिंह्यै

नमः । ओं ३ चामुण्डायै नमः । इति सम्पूज्य चतुरश्रस्याष्टदिक्षु इन्द्रादीन् तेषामायुधान् वज्रशक्तिदण्डखड्गपाशांकुशगदात्रिशूलान् संपूज्य ततः स्वशाखोक्तप्रकारेण स्रुक्स्रुवादिसम्मार्जनं कृत्वा आज्यं संस्कृत्य धर्मप्रक्षेपणाद्यग्निमुखान्तं कृत्वा व्यस्तसमस्ताहुतिहोमं विधाय अग्नेर्गर्भादानादि षोडशकर्मणां सिद्धयर्थं प्रतिकर्मणः अष्टानष्टावाज्याहुतीः प्रणवेन होष्ये ।। इति सङ्कल्प्य ।। ओं ऐं ह्रीं श्रीं अग्नेर्गर्भाधानसिद्धयै ओं स्वाहा इत्यष्टौ । ओं ३ अग्नेः पुंसवनसिद्धयै ओं स्वाहा इत्यष्टौ । एवं प्रकारेण सीमन्तोन्नयन जातकर्म नामकरण उपनिष्क्रमण अन्नप्राशन चौल उपनयन प्राजापत्य सौम्य आग्नेय वैश्वदेवव्रत गोदान समावर्तन विवाहान्तं आज्येन जुहुयात् । तामसराजससात्विक जिह्वाहोमं कृत्वा षडङ्गहोमं विधाय ब्राह्म्यादि शक्त्यष्टकहोमं कृत्वा इन्द्राद्यष्टदिक्पालमन्त्रैः तदायुधहोमं च कृत्वा स्रुवेण चतुर्वारमाज्यमादाय स्रुचि निधाय स्रुवेण तां पिधाय उत्तिष्ठन् वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा वौषडन्तेन जुहुयात् । विन्यस्तमहागणपतिमन्त्रस्मन् गणपतिमावाह्य प्रणवेन प्रणव श्रीबीजाभ्यां प्रणव श्रीबीजहृल्लेखाबीजैः प्रणवश्री बीजहृल्लेखाकामबीजैः । प्रणवश्री बीजहृल्लेखाकामभूबीजैः प्रणवश्रीबीजहृल्लेखाकामभूगणपतिबीजैः चतुर्थीसंबोधनाद्वितीयास्वाहान्तैः खण्डैरप्येनमेवावृत्याधिकतया संयोज्य समस्तं चतुर्वारं हुत्वा अथ मूलविद्यान्यासध्यानमुद्रापञ्चोपचारान् कृत्वा आज्येन पीठपूजापूर्वकं प्रधानदेवताहोमं दशांशतया विधाय भूरग्नयेचेति महाव्याहृतिहोमं कृत्वा ।। स्वशाखोक्तक्रमेण स्विष्टकृदादिहोमशेषं समाप्य उत्तरपरिषेचनं कृत्वाऽलंकृत्य सङ्कल्प्य पूर्णाहुतिं हावयेत् । कनकपात्रे दिव्यवस्त्रगन्धपुष्पताम्बूलकाञ्चनादिसौभाग्यद्रव्याणि यथाविभवं विक्षिप्य गन्धादिभिस्सम्पूज्य गीतवाद्यपुरस्सरं हस्ते धृत्वा मूलदेवताप्रकाशकैर्वैदिकैस्तांत्रिकैर्मन्त्रैर्ब्रह्मार्पणमन्त्रेण च पूर्णाहुतिं दद्यात् । ओं ऐं ह्रीं श्रीं इतःपूर्वं प्राणबुद्धिदेहधर्माधिकारतो जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा कर्मणा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत्कृतं यदुक्तं यत्स्मृतं तत्सर्वं ब्रह्मार्पणं भवतु स्वाहा ।। इति

मन्त्रेण पूर्णाहुतिं हुत्वा ॥ पूजाकल्पोक्तप्रकारेण कुण्डस्येशानभागे बलिदानं कृत्वा । कुण्डस्याष्टदिक्षु दिक्पालकबलिं दद्यात् ॥ पूर्णाहुत्यंते विशेषबलिः । कुण्डस्येशानभागे देवीपुरोभागे वा छागादिकं वा अशक्तश्चेत्कूश्माण्डादिकं वा संपाद्य । तत्र पशुप्राणप्रतिष्ठां कृत्वा बलिं वस्त्रेणावेष्टच पूर्वमुखं संस्थाप्य कुंकुमाक्षतग्रन्थपुष्पादिभिस्संपूज्य । उत्तराभिमुखीसन् पूर्वमुखबलिं निरीक्ष्य ।

पशुस्त्वं बलिरूपेण मम भाग्यादुपस्थितः ।
प्रणमामि ततस्सर्वरूपिणं बलिरूपिणम् ॥

चण्डिकाप्रीतिदानेन दातुरापद्विनाशनम् ।
चामुण्डाबलिरूपाय बले तुभ्यं नमो नमः ॥

यज्ञार्थं बलयस्सृष्टा स्स्वयमेव स्वयंभुवा ।
अतस्त्वां घातयाम्यद्य तस्माद्यज्ञे वधो वधः ॥

इत्युच्चार्थ एं ईं श्रीं इति मन्त्रेण तं बलिं सर्वरूपिणं ध्यात्वा तस्य पशोरुमूंध्नि पुष्पाञ्जलिं निक्षिपेत् । एवं पशुपूजां कृत्वा खड्गपूजां कुर्यात् । रसनात्वं चण्डिकायास्सुरलोकप्रसाधक ईं ईं खड्ग खड्गेति मन्त्रेण ध्यात्वा पुष्पगन्धाक्षतै स्संपूज्य आं हूं फट् इति मन्त्रेण छेदयेत्। ओं ईं एं ईं ओं ह्रीं ऐं ह्रीं कौशिक रुधिरेणाप्यायतामिति बलिं समर्प्य तद्गुच्छस्रवद्रुधिरादिकं गृहीत्वा पूतनाचारकीविदारीपापराक्षसीभ्यो नैऋतिभ्यो नम इति राक्षसीभ्यो बलिं दद्यात् इति बलिदानं कृत्वा ॥ तत आचार्यप्रमुखास्सर्वे देवीमग्निं च प्रदक्षिणीकृत्य नमस्कृत्वा यस्य स्मृत्या चेति जपं होमं च महालक्ष्म्यै समर्प्य । स्वमनोरथं प्रार्थयेत् ॥

महिषघ्नि महामाये चामुण्डे मुण्डमालिनि ।
आयुरारोग्यमैश्वर्यं देहि देवि नमोस्तु ते ॥

रूपं देहि यशो देहि भगं भगवति देहि मे ।
पुत्रान् देहि जयं देहि सर्वान् कामांश्च देहि मे ॥

इति संप्रार्थ्य ततष्षष्ठेऽह्नि प्रातः पुनः पूजां कृत्वा देवीमुद्वासयेत् ॥ ततो यजमानं सपत्नीकं आचार्यादयः कलशोदकेनाभिषिंचेयुः । ततो यजमानः ऋत्विग्भ्यो निष्कत्रयहेमसहितं वस्त्रालङ्कारसहितं गोमिथुनद्वयं दद्यात् । आचार्याय्योक्तलक्षणयुक्तगोमिथुनाष्टकं कपिलाङ्गां नीलमणीन् श्वेतच्छत्रं श्वेताश्वं चामरे च दत्वा पूजितकलशवस्त्रप्रतिमां दत्वा प्रार्थयेत् ।

— निवेदनमन्त्रः —

आचार्य त्वं गृहाणेमां प्रतिमां चण्डिकामयीम्
समर्चितां मया देवीं मण्डपीं च तथैव च ।
त्रैलोक्यनाथे देवि त्वं सर्वभूतदयानिधे
दानेनानेन संतुष्टा सुप्रीता वरदा भव ॥

इति ध्यात्वा —

यस्याः प्रभावमतुलं भगवाननंतो
ब्रह्मा हरश्च न हि वक्तुमलं बलं च ।
सा चण्डिकाखिलजगत्परिपालनाय
नाशाय चाशुभभयस्य मतिं करोतु ॥

इति श्लोकं पठन् आचार्यं प्रणमेत् । ततस्सुखासने यजमानं समुपवेश्य आचार्यादयो ब्राह्मणाः कुङ्कुमाक्षत दूर्वादधीन्यादाय चतुर्णां स्तोत्राणां ऐकैकं श्लोकमुच्चार्य आशीर्वादं दद्युः । यथा ॥

देव्याय यातमिदं जगदात्मशक्त्या
निश्शेषदेवगणशक्तिसमूहमूर्त्या ।

तामम्बिकामखिलदेवमहर्षिपूज्याम्
भक्त्या नतास्स्म विदधातु शुभानि सा नः ॥

स्तुतासुरैः पूर्वमभीष्टसंश्रयात्
तथा सुरेन्द्रेण दिनेषु सेविता ।
करोतु सा नश्शुभहेतुरीश्वरी
शुभानि भद्राण्यभिहन्तु चापदः ॥

यासां व्रतं चोद्धतदैत्यतापितैः
अस्माभिरीशा च सुरैः नमस्यते ।
या च स्मृता तत्क्षणमेव हन्ति न
स्सर्वापदो भक्तिविनम्रमूर्तिभिः ॥

देवि प्रपन्नार्तिहरे प्रसीद
प्रसीद मातर्जगतोखिलस्य ।
प्रसीद विश्वेश्वरि पाहि विश्वं
त्वमीश्वरी देवि चराचरस्य ॥

रोगानशेषानपहंसि तुष्टा
पुष्णासि कामान् सकलानभीष्टान् ।
त्वामाश्रितानां नविपन्नराणाम्
त्वमाश्रिताह्याश्रयतां प्रयान्ति ॥

ततो यजमानः शान्तचित्तस्सभार्यस्सपुत्रः धृताशीर्वादमङ्गलः श्रीमहालक्ष्मी परायणः रत्नपुष्पाञ्जलिं देव्यै दत्वा ॥

उत्तिष्ठ देवि चामुण्डे शुभां पूजां प्रगृह्य च ।
कुरुष्व मम कल्याणमष्टाभिशक्तिभिस्सह ॥

गच्छ गच्छ परं स्थानं देहि सौख्यं च चण्डिके
दुर्गे देवि जगन्मात स्स्वस्था संगच्छ पूजिते ।
इमां पूजां मया देवि यथाशक्त्युपपादिताम्
रक्षार्थं त्वां नमस्यामि व्रज स्वस्थानमुत्तमम् ॥

इति भगवतीं विसृज्य ब्राह्मणेभ्यो भूरिदक्षिणां दत्वा वाद्यघोषशान्तिपाठवेदघोषैस्सह ब्राह्मणबन्धुवर्गैस्सुहृद्भिस्सार्थं तोरणादिभिरलंकृतं स्वगृहं प्रविश्य यथाशक्ति ब्राह्मणान् भोजयित्वा स्वयं सुहृद्बन्धुसुतैस्सार्थं भुक्त्वा चन्दनताम्बूलादि दत्वा सन्तुष्टान्तरंगो यथासुखं विहरेदिति शिवम् ॥

॥ इति शतचण्ड्यादिचण्डीकलशस्थापनपूजाहोमप्रकरणं समाप्तम् ॥



श्रीगणेशाय नमः

## श्रीसप्तशतीमन्त्रविभागक्रमः

आदौ ऋषिरुवाचैकश्चत्वारश्लोकमन्त्रकाः ।
रूपं देहीति मन्त्रोर्थस्सानुषंगाश्च विंशतिः ॥

पञ्चविंशतिसंख्याश्च हुनेद्देव्यर्गले मनून् इत्यर्गलस्तुतिः। ऋषिश्चैको मन्त्र आदौ श्लोकमन्त्राश्चतुर्दश । एवं पञ्चदशान्मन्त्रान् श्रीदेव्याः कीलिके हुनेत् ॥ इति कीलकम् । मार्कण्डेय उवाचैको ब्रह्मोवाचैक एव च । श्लोकमन्त्रा चष्टपंचाशद्देवीकवचे हुनेत् । इति कवचम् । स्तोत्रत्रयेपि होतव्यमन्त्राः । अथ प्रथमाध्यायस्य । महाकाल्या इदम् । उवाच १४
अर्धमन्त्राः ॥ २४ ॥ श्लोकाः ॥ ६६ ॥ एवं संख्या ॥ १०४ ॥

ब्रह्मैको भगवानेको मार्कण्डेयद्वयं ततः ।
वैश्यद्वयं त्रयं राज्ञो ऋषयः पञ्चसंस्मृताः ॥

चतुर्विंशत्यर्थमन्त्राष्षट्षष्टिश्लोकमन्त्र इति प्रथमोध्यायः ॥ १ ॥
अथ द्वितीयाध्यायस्य । ॐ महाभैरव्यै नम स्वाहा ॥ महाभैरव्या इदम् उवाच ॥ १ ॥ अर्धश्लोकः ॥ ० ॥ श्लोकाः ॥ ६८ ॥ एवं संख्याः ॥ ६९ ॥ एवमादितः ॥ १२३ ॥

ऋषिरेकोष्टषष्टिश्च श्लोकमन्त्रास्तु संस्मृताः ।
एकोनसप्ततीन्मन्त्रान् द्वितीयाध्यायके हुवेत् ॥

इति द्वितीयः ॥ २ ॥

अथ तृतीयाध्यायस्य । ओं विजयायै नमः स्वाहा । सर्वमङ्गलाया इदम् ॥ उवाच ॥ ३ ॥ अर्धश्लोकः ॥ ० ॥ श्लोकाः ॥ ४१ ॥ एवं संख्या ॥ ४४ ॥ एवमादितः ॥ २१७ ॥

ऋषिद्वयं च देव्येकश्लोकेन्दूवेदसंख्यकाः ।
चतुश्चत्वारिंशमन्त्रान् तृतीयाध्यायके हुवेत् ॥

इति तृतीयः ॥ ३ ॥

अथ चतुर्थाध्यायस्य ओं महालक्ष्म्यै नमः स्वाहा ॥ महालक्ष्म्या इदम् ॥ उवाच ॥ ५ ॥ अर्धश्लोकौ ॥ २ ॥ श्लोकाः ॥ ३५ ॥ एवं संख्या ॥ ४२ ॥ एवमादितः ॥ २५९ ॥

ऋषित्रयं च देव्येको देवा ऊचुस्तथैकदा ।
द्वावर्धमन्त्रकौ पञ्चत्रिंशत्श्लोकात्ममन्त्रकाः ।
द्विचत्वारिंशकान् मन्त्रान् चतुर्थाध्यायके हुवेत् ॥

इति चतुर्थः ॥ ४ ॥

अथ पञ्चमाध्यायस्य महासरस्वत्यै नम स्वाहा महासरस्वत्या इदम् ॥ या देवी सर्वभूतेष्वित्यादिद्वाविंशतिश्लोकानां आद्यावदाने महाकाल्यै द्वितीये

महालक्ष्म्यै तृतीये महासरस्वत्यै स्वाहेदं न ममेत्युद्देशत्यागः ॥ उवाच ॥ ९ ॥ अर्थश्लोका: ॥ ६६ ॥ श्लोकाः ॥ ५४ ॥ एवं संख्या ॥ १२९ ॥ एवमादितः ॥ ३८८ ॥

दूतद्वयं द्वयं देव्या देवा ऊचुश्च एकदा ।
ऋषिर्वद श्लोकचतुःपञ्चाशन्मन्त्रसंज्ञिकाः ॥

द्वाविंशतिश्लोकसंख्याष्षट्षष्टिरवदावतः ।
एकोनत्रिंशदधिकशतं मन्त्राह्यनुस्मृताः ॥
हुत्वा तु पञ्चमेऽध्याये अंकाक्षीन्दुमनुस्मृतः ।

इति पञ्चमः ॥ ५ ॥

अथ षष्टाध्यायस्य । ओं धूम्राक्ष्यै नम स्वाहा । धूम्राक्ष्यै नम इदम् ॥ उवाच ॥ ४ ॥ श्लोकाः ॥ २० ॥ अर्धश्लोकाः ॥ ० ॥ एवं संख्या॥ २४ ॥ एवमादितः ॥ ४१२ ॥

ऋषित्रयं च देव्येकश्लोकमन्त्राश्च विंशतिः ।
चतुर्विंशतिसंख्याश्च षष्ठेऽध्याये हुनेन्मनून् ॥

इति षष्ठः ॥

अथ सप्तमाध्यायस्य । ओं चामुण्डायै नमः स्वाहा । चामुण्डायै नम इदम् ॥ उवाच ॥ २ ॥ अर्धश्लोकः ॥ ० ॥ श्लोका। ॥ २५ ॥ एवं संख्या ॥ २७ ॥ एवमादितः ॥ ४३९ ॥

ऋषेरुक्तिद्वयं श्लोकमन्त्राख्याः पञ्चविंशतिः ।
सप्तविंशतिमन्त्रास्तानध्याये सप्तमे हुवेत् ॥

इति सप्तमः ॥

अथाष्टमाध्यायस्य ॥ ओं रक्तदन्तिकायै नमस्स्वाहा रक्तदन्तिकायै नम इदम् । उवाच ॥ १ ॥ अर्धश्लोकः ॥ १ ॥ श्लोका ॥ ६१ ॥ अत्र नव महाशक्तीः ब्रह्म्यादितो ईशानान्तं तत्तन्वामत्यागः कर्तव्यः ॥ एवं संख्या ॥ ६३ ॥ एवमादितः ॥ ५०२ ॥

ऋषिरेकश्चार्थं एकश्लोकह्येकाम्रिषष्टिकाः ।
त्रिषष्टिमन्त्रैर्जुहुयादष्टमेऽध्याय उच्यते ॥

इति अष्टमः ॥

अथ नवमाध्यायस्य । ओं भीमायै नम स्स्वाहा । भीमायै नम इदम् । उवाच ॥ २ ॥ अर्धश्लोकः ॥ ० ॥ श्लोकाः ॥ ३९ ॥ एवं संख्या ॥ ४१ ॥ एवमादितः ॥ ५४३ ॥ ऋषिरेकश्च राजैको नवाग्निश्लोकसंख्यया एकचत्वारिंशमन्त्रान्नवमेऽध्यायके हुनेत् इति नवमः ॥

अथ दशमाध्यायस्य । ओं तारायै नम स्वाहा तारायै नम इदं उवाच ॥ ४ ॥ अर्धश्लोकः ॥ १ ॥ श्लोकाः ॥ २७ ॥ एवं संख्या ॥ ३२ ॥ एवमादितः ॥ ५७५ ॥

ऋषिद्वयं द्वयं देव्याश्चार्थमन्त्रैक उच्यते ।
सप्तविंशतिसंख्याश्च श्लोकमन्त्रा उदीरिताः ।
द्वात्रिंशन्मन्त्रसंख्याश्च दशमेऽध्यायके हुनेत् ॥

इति दशमः । अथैकादशाध्यायस्य अस्य प्रथमरहस्यस्य ब्रह्मात्मा भगवान् सुमेधा-ऋषिः गायत्रीच्छन्दः श्रीमहादुर्गा देवता ऐं बीजं रं भूस्तत्वं मम इष्टकाम्यार्थे जपे विनियोगः । ह्रा मित्यादि करहृदयन्यासः । ळोकत्रयेण दिग्बन्धः ॥

ध्यानम् – पराङ्कुशौ पाशमभीतिमुद्राम्
करैर्वहन्तीं कमलासनस्थाम् ।

बालार्ककोटिप्रतिभान्तिनेत्राम्
भजेहमाद्यां जगदीश्वरीं ताम् ॥

ओं नमश्चण्डिकायै ओं ऐं ऋषिरुवाच देव्याह ते इत्येकादशाध्यायस्य ओं दुर्गायै वषस्स्वाहा नारायण्या इद अन्याः यस्य नाम तस्य अवदानत्यागः कर्तव्यः । उवाच ॥ ४ ॥ अर्धश्लोकाः ॥ १ ॥ श्लोकाः ॥ ५० ॥ एवं संख्या ॥ ५५ ॥ एवमादितः ॥ ६३० ॥ ऋषीरेकोद्वयं देव्या देवा ऊचुस्तदैकदा ॥

अर्धश्लोकैकमन्त्रश्च पञ्चाशच्छ्लोकमन्त्रकाः ।
पञ्चपञ्चातोमन्त्रान् दशैकाध्यायके हुवेत् ॥ इति एकादशः ।

अस्यश्री द्वितीयरहस्यस्य विष्णवात्मको भगवान् सुमेधाऋषिः उष्णिक्छन्दः बाला सरस्वती देवता क्लीं बीजं यं भुवस्तत्वं मम इष्टकाम्यसिद्धयर्थे विनियोगः । क्लामित्यादिकरहृदयन्यासः । लोकत्रयेण दिग्बन्धः ॥

ध्यानम् – वरदाभयपुस्तकाक्षमालाम्
विलसत्पाणिसरोजभासमानाम् ।
शरदिन्दुसहस्रकोटिरूपाम्
परमानन्दमयीं प्रणौमि बालाम् ॥

इति ध्यात्वा ॥ पञ्चोपचारैस्सम्पूज्य ओं नमश्चण्डिकायै ओं क्लीं देव्युवाच ॥ एभिस्तवैश्चेति द्वादशाध्यायस्य । ओं बालायै नम स्स्वाहा । बालायै नम इदं उवाच ॥ २ ॥ अर्धं ॥ २ ॥ श्लोकाः ॥ ३७ ॥ एवं संख्या ॥ ४१ ॥ एवमादितः ॥ ६७१ ॥

देव्येकश्च ऋषिश्चैको ह्यर्धमन्त्रद्वयं ततः ।
सप्तत्रिंशश्लोकसंख्यान् जुहुयान्मन्त्रमागतः ।
एकचत्वारिंशसंख्यानध्याये द्वादशे हुनेत् ॥

इति द्वादशः ॥

अस्यश्री तृतीयरहस्यस्य रुद्रात्मको भगवान् सुमेधा ऋषिः अनुष्टुप्छन्दः श्रीमहात्रिपुरसुन्दरी देवता सौः बीजं ह्रीं शक्तिः हं सुवस्तत्वं मम इष्टकाम्यार्थं सिद्धयर्थे जपे विनियोगः। हुंसावित्यादि करहृदयन्यासः। लोकत्रयेण दिग्बन्धः॥

ध्यानम् – सकळङ्कशशाङ्काभात्र्यक्षसूत्रकळावती ।
मुद्रा पुस्तकहस्ताब्जा पातु मां परमा कळा ॥

इति ध्यात्वा ॥ पञ्चोपचारैस्सम्पूज्य ॐ नमश्चण्डिकायै ॐ सौः ऋषिरुवाच एतत्ते कथितं भूपेति त्रयोदशाऽध्यायस्य ॐ त्रिपुरसुन्दर्यै नमस्स्वाहा त्रिपुरसुन्दर्या इदं ॥ उवाच ॥ ६ ॥ अर्धः ॥ ११ ॥ श्लोकाः ॥ १२ ॥ एवं संख्या ॥ २९ ॥ एवमादितः ॥ ७०० ॥

ऋषिरेको द्वयं देव्या मार्कण्डेयत्रयं ततः ।
एकादशार्धमनवो द्वादशश्लोकमन्त्रकाः ॥

त्रयोदशाऽध्याय मन्त्रा एकोन त्रिंशदाहुतिः ।
मार्कण्डेय उवाचादिस्सावर्णिर्भविता मनुः ॥
इत्यन्त मन्त्रा होतव्यास्सप्तशत्या इतीरिताः ॥

मूलमन्त्रे समस्तमन्त्रसंख्या उवाच ॥ ५७ ॥ अर्धश्लोकाः ॥ ४२ ॥ श्लोकाः ॥ ५३५ ॥ अवदानश्लोकाः ॥ २२ ॥ ६६ ॥ समस्तश्लोकसंख्याः ॥ ५७८ ॥ एवमादितः ॥ ७०० ॥ मालामन्त्रसमस्ताक्षरसंख्या ॥ १९५३१ ॥ इति संख्या। पुनस्सप्तशतीमालामन्त्रस्य उत्तरन्यासं पूर्ववत्कृत्वा मूलमष्टोत्तरशतं जप्त्वा देव्यै निवेदयेत्। इति त्रयोदशाऽध्यायस्समाप्तः ॥

॥ इति सप्तशतीमन्त्रविभागक्रमस्समाप्तः ॥
श्रीमहात्रिपुरसुन्दरीपरदेवतार्पणमस्तु ।



श्रीललिताम्बायै नमः

## पूर्णमण्डलन्यासः

मूलेन कालनित्यविद्यया प्राणानायम्य संकल्प्य संक्षेपतो भूतशुद्धिं विधाय प्राणप्रतिष्ठान्तर्मातृका बहिर्मातृकान्यासं च कृत्वा ।

मस्तके ॥ अं आं इं ईं उं ऊं ऋं ॠं ऌं ॡं एं ऐं ओं औं अं अः ॥ षोडशपद्मदलं विभाव्य विन्यस्य ।

दक्षबाहुमूले । कं कां किं कीं कुं कूं कृं कॄं कें कैं कों कौं कं कः ।

तत्कूर्परे । खं खां खिं खीं खुं खूं खृं खॄं खें खैं खों खौं खं खः ।

तन्मणिबन्धे । गं गां गिं गीं गुं गूं गृं गॄं गें गैं गों गौं गं गः ।

तदङ्गुलिमूले । घं घां घिं घीं घुं घूं घृं घॄं घें घैं घों घौं घं घः ।

तदङ्गुल्यग्रे । ङं ङां ङिं ङीं ङुं ङूं ङृं ङॄं ङें ङैं ङों ङौं ङं ङः ।

वामबाहुमूले । चं चां चिं चीं चुं चूं चृं चॄं चें चैं चों चौं चं चः ।

तत्कूर्परे । छं छां छिं छीं छुं छूं छृं छॄं छें छैं छों छौं छं छः ।

तन्मणिबन्धे । जं जां जिं जीं जुं जूं जृं जॄं जें जैं जों जौं जं जः ।

तदङ्गुलिमूले। झं झा झि झीं झुं झूं झृं झॄं झें झैं झों झौं झं झः।

तदङ्गुल्यग्रे। ञं ञा ञि ञीं ञुं ञूं ञृं ञॄं ञें ञैं ञों ञौं ञं ञः।

दक्षोरुमूले। टं टा टि टीं टुं टूं टृं टॄं टें टैं टों टौं टं टः।

दक्षजानुनि। ठं ठा ठि ठीं ठुं ठूं ठृं ठॄं ठें ठैं ठों ठौं ठं ठः।

गुल्फे। डं डा डि डीं डुं डूं डृं डॄं डें डैं डों डौं ड डः।

तदंगुलिमूले। ढं ढा ढि ढीं ढुं ढूं ढृं ढॄं ढें ढैं ढों ढौं ढं ढः।

अंगुल्यग्रे। णं णां णि णीं णुं णूं णृं णॄं णें णैं णों णौं णं णः।

वामोरुमूले। तं तां ति तीं तुं तूं तृं तॄं तें तैं तों तौं तं तः।

तज्जानुनि। थं थां थि थीं थुं थूं थृं थें थैं थों थौं थं थः।

वामगुल्फे। दं दां दि दीं दुं दूं दृं दॄं दें दैं दों दौं दं दः।

पादंगुलिमूले। धं धा धि धीं धुं धूं धृं धॄं धें धैं धों धौं धं धः।

अंगुल्यग्रे। वं वा वि वीं नुं नूं नृं नॄं नें वैं वों नौं न नः।

दक्षपार्श्वे। पं पां पिं पीं पुं पूं पृं पॄं पें पैं पों पौं पं पः।

वामपार्श्वे। फं फां फिं फीं फुं फूं फृं फॄं फें फैं फों फौं फं फः।

पृष्ठे। बं बां बिं बीं बुं बूं बृं बॄं बें बैं बों बौं बं बः।

नाभौ। भं भां भिं भीं भुं भूं भृं भॄं भें भैं भों भौं भं भः।

उदरे। मं मां मिं मीं मुं मूं मृं मॄं में मैं मों मौं मं मः।

हृदये। यं यां यिं यीं युं यूं यृं यॄं यें यैं यों यौं यं यः।

दक्षस्कन्धे। रं रां रिं रीं रुं रूं रृं रॄं रें रैं रों रौं रं रः।

गलपृष्ठे। लं लां लिं लीं लुं लूं लृं लॄं लें लैं लों लौं लं लः।

वामस्कन्धे। वं वां विं वीं वुं वूं वृं वॄं वें वैं वों वौं वं वः।

हृदयादि दक्षकराङ्गुल्यन्तम्। शं शां शिं शीं शुं शूं शृं शॄं शें शैं शों शौं शं शः।

हृदयादि वामकराङ्गुल्यन्तम्। षं षां षिं षीं षुं षूं षृं षॄं षें षैं षों षौं षं षः।

हृदयादि दक्षपादांगुल्यन्तम्। सं सां सिं सीं सुं सूं सृं सॄं सें सैं सों सौं सं सः।

एवं वामपादंगुगुल्यन्तम्। हं हां हिं हीं हुं हूं हृं हॄं हें हैं हों हौं हं हः।

वाभ्यादि पादान्तम्। ळं ळां ळिं ळीं ळुं ळूं ळृं ळॄं ळें ळैं ळों ळौं ळं ळः

क्षं क्षां क्षिं क्षीं क्षुं क्षूं क्षृं क्षॄं क्षें क्षैं क्षों क्षौं क्षं क्षः। सर्वाङ्गे। इत्येवं विन्यस्येत्।

इति पूर्णमण्डलन्यासः ॥

पुनः तद्दिननित्यविद्यया सह प्राणायामं कृत्वा शिरसि। दक्षिणामूर्ति ऋषये नमः। मुखे पङ्क्तिछन्दसे नमः। हृदये कालनित्यास्वरूपिण्यै श्री महात्रिपुरसुन्दरीदेवतायै नमः। वर्षः बीजं मासश्शक्तिः। दिननित्य-कीलकम्। मम मोक्षार्थे जपे विनियोगः। तत्दिननित्यविद्याक्षरैः द्विरावृत्या यथाविधि करषडङ्गन्यासं कृत्वा चतुरासनन्यासम् वाग्देवताष्टकन्यासं च विधाय।

ध्यानम् — रक्तां रक्तांबरां रक्तस्रग्विभूषानुलेपनाम्।
पाशाङ्कुशेक्षुकोदण्डप्रसूनविशिखां स्मरेत् ॥

कालनित्यास्वरूपिणीं देवीं स्वहृदये ध्यात्वा वक्ष्यमाणविधिना स्वहृदये श्रीचक्रं कालचक्रमध्यगतं विभाव्य। तत्र देवीं सावरणां कालनित्या परिवृता ध्यात्वा। मानसैः उपचारैः संपूज्य पारायणमाचरेत्।

— एकपञ्चाशद्विद्याजपः —

ओं ३ मूलं दिननित्यविद्या आ ह सौः हंसः

ओं ४ मूलं दिननित्यविद्यां आ ह सौः हंसः। एवं क्षान्तं। एकपञ्चाशद्विद्याभिस्सह मूलविद्यां जपित्वा। केवलमूलं त्रिजपेत्।

## — दीपिनीविद्या —

ऐं वद वद वाग्वादिनि ऐं क्लीं क्लिन्ने क्लेदय क्लेदय महाक्षोभं कुरु कुरु क्लीं सौः मोक्षं कुरु कुरु सौः ह्सौः। इति दीपिनीविद्या मेकवारं जपित्वा गुरुपादुका मेकवारं जपित्वा। ततश्चत्वारिंशत् विद्याभिस्सह मूलविद्यां जपेत्। यथा ४ मूलं आ क्षा ह सा ई हंसः। ४ मूलं ई ळा ह सा ई हंसः। ४ मूलं ऊ हा ह सा ई हंसः। ४ मूलं ॠ सा। ४ मूलं ॡ षा। ४ मूलं ऐं शा। ४ मूलं औ वा। ४ मूलं अः ला ह सा ई हंसः। इत्यष्टधा जपित्वा।

४ मूलं अ क्षा ई हंसः। ४ मूलं अ क्षा ई हंसः। ४ मूलं ई ळा ई हंसः। ४ मूलं इ ळा ई हंसः। ४ मूलं उहा ई हंसः। ४ मूलं ऊ हा ई हसः। ४ मूलं ॠ सा ई हंसः। ४ मूलं ॠ सा ई हंसः। ४ मूलं ए शा ई हंसः। ४ मूलं ओ वा ई हंसः। ४ मूलं ओ वा ई हंसः। ४ मूलं आः ला ई हंसः। ४ मूलं अं ला ई हंसः। इति षोडशवारं जपित्वा। ४ मूलं अ का ई हंसः। ४ मूलं इ चा ई हंसः। ४ मूलं उ टा ई हंसः। ४ मूलं ॠ ता ई हंसः। ४ मूलं लु पा ई हसः। ४ मूलं ए या ई हंसः। ४ मूलं ओ शा ई हंसः। ४ मूलं अं ळा ई हंसः। इत्यष्टधा जपित्वा पुनः। ४ मूलं आ क्षा ई हंसः। ४ मूलं ई ळा ई हंसः। ४ मूलं ऊ हा ई हंसः। ४ मूलं ॠ सा ई हंसः। ४ मूलं ॡ षा ई हंसः। ४ मूलं ऐ शा ई हंसः। ४ मूलं औ वा ई हंसः। ४ मूलं अः ला ई हंसः। इत्यष्टधा जपित्वा।

## — नामपारायणम् —

पञ्चाशत्कालवित्याभि स्सह मूलविद्यां जपेत्। वर्गद्वयस्यादौ प्रत्यहम्। कार्यः ततः प्रथमदिने।

४ मूलं आ ई हंसः। ४ मूलं आ का ई हंसः। ४ मूलं आ खा ई हंसः। ४ मूलं आ गा ई हंसः। ४ मूलं आ घा ई हंसः। ४ मूलं आ ङा ई हंसः। इत्यादिरीत्या क्षान्तं जपित्वा। पुनः ४ मूलं आ आ ई हंसः। ४ मूलं आ का ई हंसः। ४ मूलं आ खा ई हंसः। इत्यादि क्षान्तं जपित्वा। पुनः ४ मूलं इ आ ई हंसः। इत्यादिरीत्या अः आ ई हंसः। आः क्षा ई हंसः। इत्यन्तं द्वितीयदिने। ४ मूलं क आ ई हंसः। ४ मूल क का ई हंसः। ४ मूलं क खा ई हंसः। ४ मूलं क गा ई हंसः। इत्यादि क्षान्तं जपित्वा पुनः ४ मूलं का आ ई हंसः। ४ मूलं का का ई हंसः। ४ मूलं का खा ई हंसः। ४ मूलं क गा ई हंसः। इत्यादि क्षान्तं जपित्वा पुनः ४ मूलं का आ ई हंसः। ४ मूलं का का ई हंसः। ४ मूलं का खा ई हंसः ४ मूलं का गा ई हंसः। इत्यादि क्षा तं जपित्वा। पुनः ४ मूलं कि आ ई हसः। ४ मूलं कि का ई हसः। ४ मूलं कि खा ई हसः। ४ मूलं कि गा ई हंसः। ४ मूलं कि घा ई हंसः। इन्यादिरीत्या दिन नित्याक्षरं षोडशस्वरयुक्तं जप्यम्। एवं कृते दिवस्य ५७६ मूलविद्यावृत्तिः भवति। ततः मूल विद्यां त्रिः जपित्वा।

दीपिनीविद्यामेकवारं जपित्वा ऐं वद वद वाग्वादिनि।

— दीपिन्युत्तीर्थप्रार्थनीविद्या —

डलरकसहीं हसकलरडीं हसकलरडौः नमः इति उत्तीर्णविद्यामेकवारं जपित्वा।

— प्रार्थनीविद्या —

मम मनोरथान् साधय साधय तुभ्यं नमः इति प्रार्थनीविद्यामेकवारं जपित्वा कृताञ्जलिर्वदेत् –

— स्तोत्रम् —

क्ष्मांब्वग्निरणखार्केन्दुद्व्यष्टप्रापयुगस्वरैः ।
मातृभैरवगां वन्दे देवीं त्रिपुरभैरवीम् ॥

कादिवर्गाष्टकाकारसमस्ताष्टकनिग्रहाम् ।
अष्टशक्त्यावृतां वन्दे देवीं त्रिपुरभैरवीम् ॥

सर्वषोडशकानां तु षट्त्रिंशद्भिः परापरैः ।
षट्त्रिंशत्तत्वगां वन्दे देवीं त्रिपुरभैरवीम् ॥

षट्त्रिंशत्तत्वसंस्थाप्य शिवशक्तिकलास्वपि ।
कादितत्वान्तरां वन्दे देवीं त्रिपुरभैरवीम् ॥

आ ई मायाद्वयोपाधिविचित्रेन्दुकलावतीम् ।
सर्वात्मिकां परां वन्दे देवीं त्रिपुरभैरवीम् ॥

षडध्वपिण्डयोनिस्थमण्डलत्रयकुण्डलीम् ।
लिङ्गत्रयात्मिकां वन्दे देवीं त्रिपुरभैरवीम् ॥

स्वयंभूहृदयां बाणभ्रूकामान्तस्थितेतराम् ।
पात्यप्रत्यक्चितिं वन्दे देवीं त्रिपुरभैरवीम् ॥

अक्षान्तरगताशेषनामरूपक्रियापराम् ।
शक्तिविश्वेश्वरीं वन्दे देवीं त्रिपुरभैरवीम् ॥

वर्गान्ते पठितं यस्त्वास्तोत्रमेतत्समाहितैः ।
सर्वान्कामानवाप्नोति अन्ते सायुज्यमाप्नुयात् ॥

कालवित्यया सह प्राणायामत्रयं कृत्वा जपं देव्यै समर्पयेत् ।



श्रीमहात्रिपुरसुन्दर्यै नमः

## — श्रीदेवीनाभिविद्याप्रारम्भः —

शुक्लांबरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥

गुरुर्ब्रह्मा गुरुर्विष्णु गुरुर्देवो महेश्वरः ।
गुरुस्साक्षात्परब्रह्म तस्मै श्रीगुरुवे नमः ॥

वन्दे गुरुपदद्वन्द्वमवाङ्मानसगोचरम् ।
रक्तशुक्लप्रभामिश्रमतर्क्यं त्रैपुरं महः ॥

अस्यश्री नाभिविद्यामहामन्त्रस्य आनन्दभैरवऋषिः अमृतविराट्छन्दः श्री महात्रिपुरसुन्दरीदेवता ॥ ऐं बीजं सौः शक्तिः क्लीं कीलकं श्रीमहात्रिपुरसुन्दरीदेवताप्रसादसिद्ध्यर्थे जपे विनियोगः । बालयान्यासः । लमित्यादि पञ्चपूजा ॥

श्रीं ओं ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ऐं क ए ईल क ए ईलह्रीं क्लीं क्लीं हसकहल हसकहल ह्रीं सौः सौः सकल सकल ह्रीं श्रीं श्रों सौः क्लीं ऐं श्रीं ह्रीं ऐं ओं ॥

७ ऐं ऐं क ४ क ४ ह्रीं ह्रीं क्लीं क्लीं ह ५ ह ५ ह्रीं ह्रीं सौः सौः स ३ ह्रीं ह्रीं श्रीं श्रीं सौः क्लीं ऐं श्रीं ह्रीं ऐं ओं ॥

७ ११ क ४ ह ५ २२ ह ५ ह ५ ह्रीं ३ ३ स ३ स ३ स ३ ह्रीं ९ ॥

७ ११ क ४ ह ४ ह्रीं ह्रीं २ २ ह ५ ह ५ ह्रीं ह्रीं ३ ३ स ३ स ३ ह्रीं ह्रीं ९ ॥ ४

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| ७ १ १ | ह ४ | ह ५ | २ २ | ह ५ | ह ६ | ३ ३ | स ३ | स ४ ९ | । ५ । |
| ७ १ १ | ह ४ | ह ६ | २ २ | ह ५ | ह ७ | ३ ३ | स ३ | स ५ ९ | । ६ । |
| ७ १ १ | ह ४ | क ५ | २ २ | ह ५ | ह ६ | ३ ३ | स ३ | स ४ ९ | । ७ । |
| ७ १ १ | ह ४ | क ६ | २ २ | ह ५ | ह ७ | ३ ३ | स ३ | स ५ ९ | । ८ । |
| ७ १ ३ | क ४ | स ५ | २ २ | ह ५ | ह ६ | ३ १ | स ३ | क ५ ९ | । १ । |
| ७ १ ३ | क ४ | स ५ | २ २ | ह ५ | ह ७ | ३ १ | स ३ | क ६ ९ | । २ । |
| ७ १ ३ | स ४ | स ४ | २ २ | ह ५ | ह ६ | ३ १ | स ३ | ह ५ ९ | । ३ । |
| ७ १ ३ | क ४ | स ५ | २ २ | ह ५ | ह ७ | ३ १ | स ३ | ह ७ ९ | । ४ । |
| ७ १ ३ | ह ४ | स ४ | २ २ | ह ५ | ह ६ | ३ १ | स ३ | ह ५ ९ | । ५ । |
| ७ १ ३ | ह ४ | स ५ | २ २ | ह ५ | ह ७ | ३ १ | स ३ | ह ६ ९ | । ६ । |
| ७ १ ३ | ह ४ | स ४ | २ २ | ह ५ | ह ६ | ३ १ | स ३ | क ५ ९ | । ७ । |
| ७ १ ३ | ह ४ | स ५ | २ २ | ह ५ | ह ७ | ३ १ | स ३ | क ६ ९ | । ८ । |
| ७ ३ ३ | स ३ | स ४ | २ २ | ह ५ | ह ६ | १ १ | क ४ | क ५ ९ | । १ । |
| ७ ३ ३ | स ३ | स ५ | २ २ | ह ५ | ह ७ | १ १ | क ४ | क ६ ९ | । २ । |
| ७ ३ ३ | स ३ | स ४ | २ २ | ह ५ | ह ६ | १ १ | क ४ | ह ५ ९ | । ३ । |
| ७ ३ ३ | स ३ | स ५ | २ २ | ह ५ | ह ७ | १ १ | क ४ | ह ६ ९ | । ४ । |
| ७ ३ ३ | स ३ | स ४ | २ २ | ह ५ | ह ६ | १ १ | ह ४ | ह ५ ९ | । ५ । |
| ७ ३ ३ | स ३ | स ५ | २ २ | ह ५ | ह ७ | १ १ | ह ४ | ह ६ ९ | । ६ । |
| ७ ३ ३ | स ३ | स ४ | २ २ | ह ५ | ह ६ | १ १ | ह ४ | क ५ ९ | । ७ । |
| ७ ३ ३ | स ३ | स ५ | २ २ | ह ५ | ह ७ | १ १ | ह ४ | क ६ ९ | । ८ । |

कादिपरा ॥ ओं श्रीं ह्लीं क्लीं ऐं सौः ओं ह्लीं श्रीं १ १ क ४ क ५ २ २ ह ५ ह ६ ३ ३ स ३ स ४ श्रीं ह्लीं ओं सौः ऐं क्लीं ह्लीं श्रीं ओं ॥ १ ॥

९ ११ क ४ क ६ २ २ ह ५ ह ४ ३ ३ स ३ स ५ ९ ।२।
९ ३ ३ स ३ स ४ २ २ ह ५ ह ६ ११ क ४ क ५ ९ ।३।
९ ३ ३ स ३ स ५ २ २ ह ५ ह ७ ११ क ४ क ६ ९ ।४।

हादिपरा ॥ ओं श्रीं सौः क्लीं ऐं ह्रीं ओं श्रीं श्रीं १ १ ह ४ ह ५ २ २
ह ५ ह ६ ३ ३ स ३ स ४ ९ ।५।
९ ११ ह ४ ह ६ २ २ ह ५ ह ७ ३ ३ स ३ स ५ ९ ।६।
९ ३ ३ स ४ २ २ ह ५ ह ६ १ १ ह ४ ह ५ ९ ।७।
९ ३ ३ स ३ स ५ २ २ ह ५ ह ७ ११ ह ६ ९ ।८।

कादि हादिपरा ॥ ओं श्रीं ह्रीं क्लीं ऐं सौः ओं ह्रीं श्रीं १ ३ क ४ स ४
२ २ ह ५ ह ६ ३ १ स ३ ह ५ ९ ।९।
६ १ ३ क ४ स ५ २ २ ह ५ ह ७ ३ १ स ३ ह ६ ९ । १०।

हादि कादिपरा ॥ ओं श्रीं सौः क्लीं ऐं ह्रीं ओं श्रीं श्रीं १ ३ ह ४ स ४
२ २ ह ५ ह ६ ३ १ स ३ क ५ ९ ।११।
९ १ ३ ह ४ स ५ २ २ ह ५ ह ७ ३ १ स ३ क ६ ९ ।१२।

श्रीं ह्रीं क्लीं ऐं सौः ओं ह्रीं श्रीं अ १६ हंसस्सोहम् । सोहम् ।

हं सः क ३५ सौः ऐं क्लीं ह्रीं श्रीं ॐ ॥ इति मातृका ॥ श्रीं सौः क्लीं ऐं ह्रीं ॐ श्रीं श्रीं हंसस्सोहं हसक्षमलवरयूं सौः क्लीं ऐं सहक्षमलवरयीं हंसस्सोहं सोहं हंसः ॥ श्री गुरुनाथाय नमो नमः स्स्वाहा ॥ ऐं १ १ क्लीं २ २ सौः ३ ३ ऐं ॥ इति बाला ॥

ॐ श्रीं सौः श्रीं ॐ ॥ इति नाभिविद्या ॥ ४ ॥

क १५ श्रीं ह १५ ॥ इति कादिहादि विद्याद्वयं यथाशक्ति जपेत् ॥

श्रीमत्पञ्चदशाक्षर्याः कोट्यावृत्त्या तु यत्फलम् ।
नाभिविद्यां सकृज्जप्त्वा तत्फलं लभते ध्रुवम् ॥

पूर्वहृदयादिन्यास ध्यान पञ्चपूजाः कुर्यात् । महापद्मवनान्तरालकाल-चक्रान्तर्गतबैन्दवसिंहासनस्थितत्रयस्त्रिंशत्कोटिदेवतात्मक श्री महात्रिपुरसुन्दरी श्रीपादुकां पूजयामि ॥ इति श्री नाभिविद्या ॥

॥ स्तोत्रखण्डं संपूर्णम् ॥



श्रीरस्तु

# नैमित्तिकखण्डप्रारम्भः

## — वसन्तदमनोत्सवविधिः —

नित्योत्सवोक्त वसन्तोत्सवादि विशेषोत्सवविधिः ।

आदौ वसन्तनवरात्रि वसन्तदमनोत्सवाः कथ्यन्ते ।

वसन्तसमये प्राप्ते दर्शान्तप्रतिपत्तिथिम् ।
आरभ्य पूजयेद्देवीं गन्धपुष्पोपहारकैः ॥

इति तन्त्रराजवचनात् ॥ चैत्रशुद्धप्रतिपदादिकः तत्पूर्णिमावधिकः । तन्नवम्यन्तो वा वसन्तनवरात्रोत्सवः कार्यः । तत्र प्रतिपदि कलशं संस्थाप्य देवीमावाह्य विशेषतः पुष्पनिवेदनाद्युपचारैः पूजयेत । तथाहि श्रीसूक्तादिभिरभिषिच्य अनर्घ्यवस्त्राभरणैरलंकृत्य तत्पूजावसरे सुगन्धीनि सुवृक्षोत्पन्नानि स्वच्छानि च निम्बकुसुमान्यानीय शङ्खोदकेनाभ्युक्ष्यामृतीकृत्य ॐ फट् निम्बविवासिनि निम्बप्रिये सर्वामयहारिणि परदेवता प्रियकारिणि हुं फट् । इति सप्तवारमभिमन्त्र्य नैवेद्यान्तं च कृत्वा तन्निम्बकुसुमैर्देवीमभ्यर्च्य ।

चैत्रप्रतिपदिप्रातः देव्यै भक्त्या तु साधकः ।
तिन्त्रिणीगुडसम्मिश्रं निम्बपुष्पं निवेदयेत् ॥

इति कुळार्णववचनात् । गुडादिसंस्कृतं निम्बकुसुमं निवेद्य अनन्तरं कुमारीं च सुवासिनीरिति वचनात् । कन्यासुवासिनीस्सस्रक्चन्दनवसनाभरणभोजनादभिर्यथाविभवं तोषयित्वा पूजां निर्वर्त्य सामयिकानपि सन्तोष्य स्वयं उपवासनक्तैकभक्त्यान्यतमव्रतनियमेनाचरेदिति ॥ एवं यस्मिन् पर्वणि यन्मुख्यं तेन देवतामग्नि सामयिकांश्चार्चयेदिति ॥ कल्पद्रुमवचनादपि तिन्त्रिणी-

फलस्यापि तात्कालिकत्वात्। तात्कालिकनिम्बपुष्पैस्सह मिश्रीकृत्य निवेदनीय-मित्याशयोलभ्यते। एवं प्रत्यहं पूर्णिमापर्यन्तं देवीं पूजयेत्। किञ्च तत्पौर्ण-मास्यामेव सायं दमनादिपुष्पारामं गत्वा॥

शिवप्रसादसम्भूत अत्र सन्निहितो भव।
देवीकार्यं समुद्दिश्य नेतव्योसि शिवाज्ञया॥

इति दमनानि तत्कालोत्पन्न पुष्पाणि च आमन्त्र्य अस्त्रं मन्त्रेण समूलं दमनादि पुष्पलताः सपर्यापर्याप्ताः उत्पाद्य। अलाभे तद्गुच्छान्वा शस्त्रेण छित्वा स्वातन्त्र्याभावे विक्रेतुस्सकाशात् क्रयक्रीता वा आनीय पवित्रे वंशादिपात्रे विधाय। मूलविद्यया शुद्धाभिरद्भिः अभ्युक्ष्य। दमनादिपुष्पेभ्यो नमः। गन्धपुष्पधूपदीपनैवेद्याख्यपञ्चोपचारानारचय्य। सूक्ष्मवस्त्रेणाच्छाद्य। याग मन्दिरे क्वचित् शुचिनि स्थले निधाय। जाग्रयत् जागरणमभ्युदयाय। इति सद्योधिवासनं उत्तरत्रापि कुसुमानां दुग्धान्नं निवेद्य। ततः एवंगुण विशेषण विशिष्टायां पौर्णमास्यां शुभतिथौ श्रीललितापरदेवतामुद्दिश्य श्रीललिता परदेवताप्रीत्यर्थं वसन्तदमनोत्सवौ तन्त्रेण करिष्ये इति संकल्प्य प्रधानदेवी पूजोत्तरं आवरणार्चनावसरे।

षोडशार्णे जगन्मातर्वाञ्छितार्थफलप्रदे।
हृत्स्थान् पूरय मे कामान् देवि कामेश्वरेश्वरि॥

इति देवीं संप्रार्थ्य नित्यर्चनक्रमेणैव श्रीदेवीं देवताश्चतुराम्नायादि समयतद्देव ताश्च अधिवासित दमनैः तत्कालसंभवैः संह्लादकैः कर्पूरचन्दनोक्षितैः कुसुमैश्च युगपदभ्यर्च्य देव्यै नानाविध फलभक्ष्य भोज्यान्नानि निवेद्य मङ्गला रात्रिकादिकं कृत्वा मूलमन्त्रं जप्त्वा श्रीगुरुशक्तिसामयिकान् संभाव्य वसन्तदमनोत्सवमपि निर्वर्त्य तदनन्तरप्रभाते देवी मुद्रास्य शान्त्यभिषेका दिकं कारयेत्। एवंचेत् विद्यासिद्धिः भवति। अथवा कुलार्णवोक्त नव

रात्रिपक्षेपि एकोत्तरवृद्धया वा तदसंभवे यथोक्तक्रमेणैव वा कर्तव्यः। अयं स्वतन्त्रः न तु पूर्णिमाङ्गम्। तत्पक्षे पूर्णिमापूजापि प्रत्येकमुक्तरीत्या कर्तव्येति दिक्।

इति चैत्र प्रतिपदादि पूर्णिमान्तकृत्यम।

---

— अथ वैशाखीकृत्यम् —

अथ वैशाख्यां पौर्णमास्यां कृत्यनित्यक्रियः श्रीललितापरदेवतां श्रीपुंसूक्ता दिभिः अभिषिच्य। दिव्यवस्त्रगन्धमाल्याभरणादिभिरलङ्कृत्य। तत्कालो दितदिव्यकुसुमैः कुङ्कुमैश्च देवीमभ्यर्च्य नानाविधदिव्यान्नादीनि निवेद्य। पूजां निर्वर्त्य। श्रीगुरुशक्तिसामयिकान् संभाव्य। रुपयौवनादिसंपन्नाः सुशीलाः अभ्यञ्जनस्नाताः स्वलङ्कृताः षोडशनित्यारूपाः ब्राह्मणसतीः नाना-विधभक्ष्यभोज्याद्यादिभिस्संतर्प्य। स्वयमपि भुञ्जानः मूलमन्त्रादिस्मरण पूर्वकं यथासुखं विवसेत्। तद्रात्र्यां कलित सायन्तनक्रियः यागमन्दिरं प्रविश्य श्रीदेवीप्रार्थनापुरस्सरं प्रणम्योपविश्य। कलितकवाटोद्घाटनः देवीस्तवैः ललितामभिमुखीकृत्य। देशकालौ संकीर्त्य। एवंगुणविशेषणविशिष्टायां वैशाखपूर्णिमायां शुभतिथौ रात्रौ श्रीललितापरदेवतामुद्दिश्य श्रीललितापरदेवता प्रीत्यर्थं तुषारोदकनिवेदनपूर्वकपूजां करिष्य इति संकल्प्य। अथ हेमन्तकाले संग्रहीतं तुषारोदकं तदलाभे कर्पूरमृगनाभिसुरभिलं सुशीतलं पानीयं वा संपाद्य प्राग्वत्सद्योधिवासनं कुर्यात्। तद्यथा॥

शिवप्रसादसंभूत सुशीतल मनोहर।
देवीकार्यं समुद्दिश्य नीतं चासि शिवाज्ञया॥

इति तुषारोदकमामन्त्र्य। अस्त्रमन्त्रेण उत्पाद्य। स्वर्णादिपात्रे निधाय। मूलविद्यया शुद्धाभिरद्भिरभ्युक्ष्य। तुषारोदकदेवतायै अमुं कल्पयामि नम

इति उपचारमन्त्रैः गन्धपुष्पधूपदीपनैवेद्याख्यान् पञ्चोपचारानाचर्य । सूक्ष्मनववस्त्रेण आच्छाद्य । यागमन्दिर एव क्वचित्स्थले निधाय जागृयात् । जागरणमभ्युदयाय इत्यधिवासनं सद्योपि वा कार्यम् । अथ प्रधानदेवी पूजोत्तरं आवरणार्चने ।

षोडशार्णे जगन्मातःवांञ्छितार्थफलप्रदे ।
हृत्स्थान् पूरय मे कामान् देवी कामेश्वरेश्वरि ॥

इति देवीं संप्रार्थ्य । नित्यार्चनक्रमेणैव श्रीदेवीं देवताश्चतुराम्नायादि समयदेवताश्च नानाविधपुष्पैस्समभ्यर्च्य । नैवेद्यावसरे तत्पूर्वाधिवासितं तुषारोदकमपि निवेद्य । मङ्गलारात्रिकां दत्वा मूलमन्त्रं यथाशक्ति जप्त्वा श्रीगुरुशक्तिसामयिकान् संभाव्य ब्राह्मणान् दिवा सन्तर्पिताः षोडशनित्यारूपिणीस्सुवासिनीरपि स्रक्चन्दन दक्षिणाभरणवसनादिभिस्तोषयित्वा स्वयमपि अभ्यवहृत्य यथासुखं विहरेत् ।

इति वैशाखपूर्णिमाकृत्यम् ।
संपूर्णम् ॥



## — अथ ज्येष्ठपूर्णिमाकृत्यम् —

अथ ज्येष्ठपौर्णमास्यां रात्रौ पादौ प्रक्षाल्याचम्य परदेवता सदनमुपगम्य प्रणम्य च देशकालौ संकीर्त्य । अस्यां ज्येष्ठपूर्णिमायां शुभतिथौ श्रीललिता परदेवतामुद्दिश्य श्रीललितापरदेवताप्रीत्यर्थं कदलीपनसाम्रादिफलनिवेदनपूर्वकसपर्यां करिष्य इति संकल्प्य । ततः कदलीपनसाम्रादीनि संगृह्य पूर्ववत् सद्योधिवासनं कुर्यात् । तद्यथा ।

शिवप्रसादसंभूत कदलीपनसादिक ।
देवीकार्यं समुद्दिश्य नीतं चासि शिवाज्ञया ॥

इति कदलीफलादीन्यामन्त्र्य । अस्त्रमन्त्रेण उत्पाद्य नववेण्वादि पात्रेषु निधाय । मूलविद्यया शुद्धाभिरद्भिरभ्युक्ष्य । कदलीपनसाम्रादिफलदेवताभ्यः अमुकं कल्पयामि नम इति उपचारमन्त्रैर्गन्धपुष्पधूपदीपनैवेद्याख्यान् पञ्चोपचारान् कृत्वा नव्यसूक्ष्मवस्त्रेणच्छाद्य । यागमन्दिर एव क्वचिन्निधाय जाग्रियात् जागरणमभ्युदयाय इत्यधिवासनं ततः प्रधानदेवीपूजानन्तरं आवरणार्चने ।

षोडशार्णे जगन्मातः वाञ्छितार्थफलप्रदे ।
हृत्स्थान् पूरय मे कामान् देवी कामेश्वरेश्वरि ॥

इति देवीं संप्रार्थ्य नित्यार्चन क्रमेणैव श्रीदेवीं देवताः चतुराम्नायादि समयदेवताश्च तात्कालिक पुष्पैस्संपूज्य नैवेद्यावसरे अधिवासितकदल्यादिफलानि निवेद्य दीपाराधनादिकं कृत्वा यथाशक्ति मूलमन्त्रं जप्त्वा ः श्रीगुरुशक्ति सामयिकान् संभाव्य । विप्रान् दिवा संतर्पिताः षोडशनित्यरूपिणीस्सुवासिनीरपि स्रक्चन्दनदक्षिणाभरणवसनादिभि स्तोषयित्वा स्वयमपि भुक्त्वा यथासुखं विहरेत् ॥

इति ज्येष्ठपूर्णिमाकृत्यम् ।

— अथ आषाढपूर्णिमाकृत्यम् —

अथ आषाढपूर्णिमारात्र्यां पादौ प्रक्षाल्याचम्य देशकालौ संकीर्त्य एव गुणविशेषणविशिष्टायां पौर्णमास्यां शुभतिथौ श्रीललितापरदेवताप्रीत्यर्थं कर्पूरकेसरीमिश्रचन्दनसमर्पणं जातीकुसुमैस्सावरणार्चनम् ताम्बूलावसरे लवङ्ग-एलातक्कोलसहितताम्बूलनिवेदनपूर्वकवरिवस्यां करिष्ये इति संकल्प्य चन्दनादीनि संपाद्य । पूर्ववत् सद्योधिवासनं कुर्यात् । तद्यथा ।

शिवप्रसादसंभूत गन्धजातीसुधान्वित ।
ताम्बूल देवीमुद्दिश्य नीतं चासि शिवाज्ञया ॥

इति श्रीचन्दनजातीपुष्पताम्बूलान्यभिमन्त्र्य अस्त्रेण संरक्ष्य स्वर्णादिपात्रेषु निधाय ॥ मूलविद्यया शुद्धाभिरद्भिरभ्युक्ष्य श्रीचन्दनजातीपुष्पताम्बूलदेवताभ्यः अमुकं कल्पयामि नम इत्युपचारमन्त्रैः गन्धपुष्पधूपदीपनैवेद्याख्य पञ्चोपचारान् विरचय्य सूक्ष्मवस्त्रेण पिधाय पूजामन्दिर एव क्वचित्स्थले निधाय जागृयात् जागरणमभ्युदयाय इत्यधिवासनं तदनु प्रधानदेवतापूजनोत्तरं आवरणार्चने ॥

षोडशार्णे जगन्मातर्वाञ्छितार्थफलप्रदे ।
हृत्स्थान् पूरय मे कामान् देवि कामेश्वरेश्वरि ॥

इति देवीं संप्रार्थ्य नित्यार्चनक्रमेणैव श्रीदेवीं देवताश्चतुराम्नायादिसमयदेवताश्च चन्दनवासरे अधिवासितचन्दनानुलेपनपूर्वकं जातीपुष्पैस्समभ्यर्च्य ताम्बूलसमये लवङ्गैलादिसम्मिश्रताम्बूलं निवेद्य मङ्गळारात्रिकां दत्वा मूलं यथाशक्ति जप्त्वा श्रीगुरुशक्तिसामयिकान् संभाव्य ब्राह्मणान् दिवा-सन्तर्पिताः षोडशनित्यारूपिणी सुवासिनीरपि स्रक्चन्दनदक्षिणाभरणवसनकञ्चुकादिभिरानन्दयित्वा स्वयमपि संभुज्य यथासुखं चरेदित्याषाढपूर्णिमाकृत्यम् ।



## — अथ श्रावणपूर्णिमाकृत्यम् —

अथ श्रावण्यां पौर्णमास्यां रात्रौ पादौ प्रक्षाळ्याचम्य देशकालौ सङ्कीर्त्य एवंगुणविशेषणविशिष्टायां श्रावण्यां पूर्णिमायां शुभतिथौ मम श्रीललितापरदेवतामुद्दिश्य ललितापरदेवताप्रीत्यर्थं पवित्रारोपणोत्सवाख्यं कर्म करिष्य

इति सङ्कल्प्य अथ षण्णवत्यंगुळायामसरग्रन्थिकानि त्रीणि पवित्राणि कृत्वा कुंकुमगोरोचनमृगमदरक्तचन्दनपङ्कलिप्तानि लाक्षागैरिकान्यतरचित्रितग्रन्थिकानि च विरचय्य प्राग्वत्सद्योधिवासनं कुर्यात्। तद्यथा ॥

शिवप्रसादसंभूत ग्रन्थिरम्यपवित्रक ।
देवीकार्यं समुद्दिश्य नीतं चासि शिवाज्ञया ॥

इति पवित्रमभिमन्त्र्य अस्त्रेणापकुण्ठ्य स्वर्णादिपात्रे विधाय मूलविद्यया शुद्धाभिरद्भिरभ्युक्ष्य पवित्रदेवतायै अमुकं कल्पयामि नम इत्युपचारमन्त्रैः गन्धपुष्पधूपदीपनैवेद्याह्वयैः पञ्चोपचारैस्सम्पूज्य नवग्रन्थिपूजां कुर्यात् तथाहि –

प्रणवं चन्द्रमा वह्निर्ब्रह्मा नागो गुहो रविः ।
साम्बश्च सर्वदेवस्तान्नवग्रन्थिषु पूजयेत् ॥

प्रणवाय नमः । चन्द्रमसे नमः । वह्नये नमः । ब्रह्मणे नमः । नागाय नमः । गुहाय नमः । रवये नमः । साम्बाय नमः । सर्वदेवाय नमः । इत्यधिवासनपूजां कृत्वा वाससा पिधाय यागमन्दिर एव क्वचिन्निक्षिप्य जाग्र्यात् जागरणमभ्युदयाय आवरणार्चनावसरे प्रधानदेवतयै पुष्पैस्समं पवित्राणि समर्प्य ॥

षोडशार्णे जगन्मातर्वाञ्छितार्थफलप्रदे ।
हृत्स्थान् पूरय मे कामान् देवि कामेश्वरेश्वरि ॥

इति देवीं संप्रार्थ्य नित्यार्चनक्रमेणैव श्रीदेवीं चतुराम्नायादिसमयदेवताश्च तात्कालिकैः प्रसूनैस्सम्पूज्य धूपदीपनैवेद्यताम्बूलनित्यमङ्गळदीपाराधवादीनि कृत्वा मूलमन्त्रं यथाशक्ति जप्त्वा श्रीगुरुशक्तिसाधयिकान् सन्तोष्य ब्राह्मणान् मध्याह्ने सन्तर्पिताः नित्याष्षोडशिकारूपास्सुवासिनीरपि वस्त्राभरणादिभिरानन्दयित्वा यथासुखं विहरेदिति पवित्रारोपणविधिः ॥

अथ भाद्रपद्यां पूर्णिमायां रात्रौ पादौ प्रक्षाळ्याचम्य पूजागृहमुपगम्योपविश्य देशकालौ सङ्कीर्त्य एवंगुणविशिष्टायां पौर्णमास्यां शुभतिथौ श्रीललितापरदेवतामुद्दिश्य श्रीललितापरदेवताप्रीत्यर्थं केतकिकुसुमार्चनपूर्वकपूजां करिष्य इति सङ्कल्प्य आदौ केतकीपुष्पाणां सद्योऽधिवासनं कुर्यात् ॥

शिवप्रसादसम्भूत केतकीकुसुमोत्तम ।
देवीकार्यं समुद्दिश्य नीतं चासि शिवाज्ञया ॥

इति पुष्पाण्यादाय पवित्रे वंशपात्रे निधाय मूलविद्यया शुद्धाभिरद्भिरभ्युक्ष्य केतक्यै नमः । अमुकं कल्पयामीत्यादिरीत्या उपचारमन्त्रैः गन्धपुष्पधूपदीपनैवेद्याख्यान् पञ्चोपचारानारचय्य सूक्ष्मवस्त्रेणाच्छाद्य यागमन्दिर एव क्वचिन्निधाय जाग्राज्जागरणमभ्युदयायेत्यधिवासनं कृत्वा ततः प्रधानदेवीपूजानन्तरमावरणार्चने ॥

षोडशार्णे जगन्मातर्वाञ्छितार्थफलप्रदे ।
हृत्स्थान् पूरय मे कामान् देवि कामेश्वरेश्वरि ॥

इति देवीं संप्रार्थ्य नित्यार्चनक्रमेणैव श्रीदेवीं देवताः चतुराम्नायादिसमयदेवताश्च अधिवासितकेतकीकुसुमैः सम्पूज्य पूजां निर्वर्त्य धूपदीपनैवेद्यताम्बूलदीपाराधनादिकं कृत्वा यथाशक्ति मूलमन्त्रं जप्त्वा श्रीगुरुशक्तिसामयिकान् सम्भाव्य विप्रान् दिवा सन्तर्पिताष्षोडशनित्यारूपिणीस्सुवासिनीरपि स्रक्चन्दनदक्षिणाभरणवसनकञ्चुकादिभिस्तोषयित्वा यथासुखं विहरेदिति-भाद्रपदपूर्णिमाकृत्यम् ॥



## — आश्वयुज पूर्णिमाकृत्यम् —

ततः आश्वयुज्यां पूर्णिमायां रात्रौ पादप्रक्षालनाचमनपूर्वकं देवीपूजा

सद्म मुपगम्योपविश्य देशकालौ संकीर्त्य एवंगुणविशिष्टायां पूर्णिमायां शुभतिथौ श्रीललितापरदेवता मुद्दिश्य श्रीललितापरदेवताप्रीत्यर्थं तात्कालिक पङ्कजपारिजातादिकुसुमार्चनपूर्वकपूजां करिष्य इति संकल्प्य आदौ पङ्कजादि पुष्पाणां सद्योधिवासनं कुर्यात् ।

शिवप्रसादसंभूत पङ्कजादिसुमव्रज ।
देवीकार्यं समुद्दिश्य नीतं चासि शिवाज्ञया ॥

इति कुसुमान्यादाय पवित्रवंशपात्रे निधाय मूलविद्यया शुद्धाभिरद्भि-रभ्युक्ष्य तात्कालिकपुष्पेभ्यः अमृतं कल्पयामि नमः इत्यादिरीत्योपचारमन्त्रैः गन्धपुष्पधूपदीपनैवेद्याख्यपञ्चोपचारान् विधाय नूतनवस्त्रेण आच्छाद्य । याग-मन्दिर एव क्वचिन्निधाय जागरयात् । जागरण मभ्युदयाय इत्यधिवास्य । तदनन्तरं प्रधानदेवीपूजानुपदं आवरणार्चने ।

षोडशार्णे जगन्मातर्वाञ्छितार्थफलप्रदे ।
हृत्स्थान् पूरय मे कामान् देवि कामेश्वरेश्वरि ॥

इति देवीं संप्रार्थ्य नित्यार्चनक्रमेणैव श्रीदेवीं देवताः चतुराम्नायसमय देवताश्च अधिवासितकुसुमैस्संपूज्य पूजां परिसमाप्य धूपदीपनैवेद्यैः ताम्बूल वीपाराधनादिकं कृत्वा । यथाशक्ति मूलमन्त्रं जप्त्वा । श्रीगुरुशक्ति सामयिकान् संभाव्य । ब्राह्मणान् दिवा सन्तर्पिताष्षोडश नित्यास्वरूपाः सुवासिनी रपि स्रक्चन्दन दक्षिणाभरणवासः कञ्चुकादिभि स्तोषयित्वा यथासुखं विहरेत् इति आश्वयुजपूर्णिमाकृत्यम् ।

★

॥ अथ कार्तिकपूर्णिमाकृत्यम् ॥

अथ कार्तिक्यां पौर्णमास्यां रात्रौ पादप्रक्षालनाचमनपूर्वकं देवीयाग

मन्दिरमुपगम्य प्रणम्य देशकालौ संकीर्त्य एवं गुणविशेषणविशिष्टायां पौर्णमास्यां शुभतिथौ श्रीललितापरदेवता मुद्दिश्य श्रीललितापरदेवता प्रीत्यर्थं अभिनव कुङ्कुमार्चनपूर्वकपूजां गोधूमादि पिष्टदीपारोपणं च करिष्ये इति संकल्प्य आदौ अभिनवकुङ्कुमादिवासनं कुर्यात् ॥

शिवप्रसादसंभूत नव्य श्रीकुङ्कुमोत्तम ।
देवीकार्यं समुद्दिश्य वीतं वासि शिवाज्ञया ॥

इत्यभिनवकुङ्कुमं कस्मिंश्चित्पात्रे निधाय मूलविद्यया शुद्धाभिरद्भि रभ्युक्ष्य कुंकुमाय नमः अमुकं कल्पयामीत्यादि रीत्या उपचारमन्त्रैः गन्धपुष्पधूप दीपनैवेद्याख्यान् पञ्चोपचारान् विरचय्य नूतनवस्त्रेणाच्छाद्य यागमन्दिर एव क्वचिन्निधाय जाग्रयात् । जागरणमभ्युदयाय इत्यधिवास्य ततः प्रधानदेवीपूजोत्तरं आवरणार्चने ।

षोडशार्णे जगन्मातर्वाञ्छितार्थफलप्रदे ।
हृत्स्थान् पूरय मे कामान् देवि कामेश्वरेश्वरि ॥

इति देवीं संप्रार्थ्य नित्यार्चनक्रमेणैव श्रीदेवीं देवताः चतुराम्नायादि समयदेवताश्च अधिवासितकुंकुमैः संपूज्य नैवेद्यानन्तरं दीपाराधनात्परे गोधूमादि प्रकृतिकैः प्रज्वलित कर्पूरवर्तिभिः प्रदीपैः देव्याः पुरतः शुचिनि भूतले षोडशदीपान् नवदीपान् वा नवयोनिचक्राष्टदल कमलालङ्कृते वा तत्र मध्य एकं दलेषु वा अष्टौ दीपान् प्रज्वाल्य देव्यै मूलेन प्रसूनं निवेदयेत् । शेषमभिहितवत् ।

---

## — अथ मार्गशिर पूर्णिमाकृत्यम् —

अथ मार्गशीर्ष्यां पूर्णिमायां रात्रौ पादौ प्रक्षाल्याचम्य शुचिर्भूत्वा देवीपूजासदनं गत्वा प्रणम्य देशकालौ सङ्कीर्त्य एवंगुणविशेषण विशिष्टायां

पौर्णमास्यां शुभतिथौ श्रीललितापरदेवतामुद्दिश्य श्रीललितापरदेवता प्रीत्यर्थं सुगन्धिजपन्ती कुसुमार्चनपूर्वकं माषापूपकर्पूरसुरभिल नारिकेलोदक निवेदनादि सपर्यां करिष्ये इति सङ्कल्प्य। आदौ जपन्तीकुसुमानां सद्योधिवासनं कार्यम्।

शिवप्रसादसंभूत जपन्तीकुसुमोत्तम।
देवीकार्यं समुद्दिश्य नीतं चासि शिवाज्ञया॥

इति पुष्पाण्यादाय पवित्रे वंशपात्रे निधाय मूलविद्यया शुद्धाभिरद्भिरभ्युक्ष्य जपन्तीकुसुमेभ्यो नमः अमुकं कल्पयामीत्यादि रीत्या उपचारमन्त्रैः गन्धपुष्पधूपदीपनैवेद्याख्यान् पञ्चोपचारान् कृत्वा नववस्त्रेणाच्छाद्य यागमन्दिर एव क्वचिन्निधाय जाग्रयात्। जागरणमभ्युदयाय इत्यधिवास्य। ततः प्रधानदेवी पूजानन्तरं आवरणार्चने।

षोडशार्णे जगन्मातर्वाञ्छितार्थफलप्रदे।
हृत्स्थान् पूरय मे कामान् देवि कामेश्वरेश्वरि॥

इति संप्रार्थ्य। नित्यार्चनक्रमेणैव श्रीदेवीं देवताः चतुराम्नायादि समयदेवताश्च अधिवासितजपन्तिकाकुसुमैस्संपूज्य नैवेद्यावसरे घृतपक्व माषापूपान् घनसारसुरभिलं नारिकेलोदकं च प्रागुक्तान्यतमया भङ्ग्या सर्वाभ्यो देवताभ्यो निवेद्य तांबूलदीपाराधनादिकं यथाविधि विधाय यथाशक्ति मूल मन्त्रं जप्त्वा श्रीगुरुशक्तिसामयिकान् संभाव्य ब्राह्मणान् दिवासन्तर्पिता ष्षोडशनित्यारूपिणीस्सुवासिनीरपि स्रक्चन्दनदक्षिणादिभिस्तोषयित्वा यथा-सुखं विहरेदिति मार्गशीर्षपूर्णिमाकृत्यम्।

— अथ पुष्यपूर्णिमाकृत्यम् —

ततः पौष्यां पौर्णमास्यां रजन्यां शुचिर्भूत्वा यागमन्दिरं संप्राप्य देवीं प्रणम्य देशकालौ संकीर्त्य। एवंगुणविशिष्टायां पौर्णमास्यां शुभतिथौ

श्रीललितापरदेवताप्रीत्यर्थं शर्करामिश्रगव्यदुग्धनिवेदनपूजां करिष्य इति संकल्प्य । आदौ गव्यदुग्धाधिवासनं कुर्यात् : यथा ।।

शिवप्रसादसंभूत शर्करासंयुतं पयः ।
देवीकार्यं समुद्दिश्य नीतं चासि शिवाज्ञया ।।

इति गव्यदुग्धमादाय । कांस्यादिपात्रे निधाय । मूलविद्यया शुद्धाभिरद्भिरभ्युक्ष्य शर्करामिश्रगव्यदुग्धाय नमः अमुकं कल्पयामीत्यादि रीत्या उपचारमन्त्रैः गन्ध पुष्प धूप दीपनैवेद्याख्यान् पञ्चोपचारान् विरचय्य । सूक्ष्मनववस्त्रेण पिधाय यागमन्दिर एव क्वचिन्निधाय जाग्रयात् । जागरण मभ्युदयाय इत्यधिवासनं कृत्वा ततः प्रधानदेवीपूजानन्तरं नैवेद्यावसरे

षोडशार्णे जगन्मातर्वाञ्छितार्थफलप्रदे ।
हृत्स्थान् पूरय मे कामान् देवि कामेश्वरेश्वरि ।।

इति संप्रार्थ्य नित्यार्चनक्रमेणैव श्रीदेवीं देवताः चतुराम्नायसमय देवताश्च शर्करामिश्रगव्यदुग्धैस्संतर्प्य पूजां निर्वर्त्य ताम्बूलदीपाराधनादिकं कृत्वा यथाशक्ति मूलमन्त्रं जप्त्वा श्रीगुरुशक्तिसामयिकान् संभाव्य ब्राह्मणान् दिवा सन्तर्पिता षोडशनित्यास्वरूपास्सुवासिनीश्च स्रक्चन्दन दक्षिणाकञ्चुकादिभिस्तोषयित्वा यथासुखं विहरेदिति पुष्यपूर्णिमाकृत्यम् ।

— अथ माघपूर्णिमाकृत्यम् —

अथ माघपूर्णिमायां रात्रौ पादौ प्रक्षाल्याचम्य शुचिर्भूत्वा देविपूजासदनं गत्वा प्रणम्य देशकालौ संकीर्त्य एवंगुणविशेषणविशिष्टायां पौर्णमास्यां शुभतिथौ श्रीललितापरदेवतामुद्दिश्य श्रीललितापरदेवताप्रीत्यर्थं शुक्लतिलरक्तकुसुमार्चनपूर्वकं शर्करादुग्धं गोधूमापूपनिवेदनं च सद्योधिवासनं कुर्यात् ।

शिवप्रसादसंभूत अत्र सन्निहितो भव ।
देवीकार्यं समुद्दिश्य नीतं चासि शिवज्ञया ॥

इति शुक्लतिलादीन् तत्तदुचितपात्रे विधाय मूलविद्यया शुद्धाभिरद्भि-रभ्युक्ष्य । शुक्लतिलादिभ्यः अमुकं कल्पयामि नमः इत्युपचारमन्त्रैः गन्धपुष्पधूपदीपनैवेद्याख्यान् । पञ्चोपचारन् विधाय । नूतनवस्त्रेणाच्छाद्य यागमन्दिर एव क्वचिन्निधाय जाग्रियात् जागरणमभ्युदयाय इत्यधिवास्य तदनु प्रधानदेवीपूजानुपदमावरणार्चने ।

षोडशार्णे जगन्मातः वाञ्छितार्थफलप्रदे ।
हृत्स्थान् पूरय मे कामान् देवी कामेश्वरेश्वरि ॥

इति देवीं संप्रार्थ्य नित्यार्चनक्रमेणैव श्रीदेवीं देवताः चतुराम्नायादि समयदेवताश्च अधिवासित शुक्लतिलरक्तकुसुमै स्संपूज्य । नैवेद्यावसरे शर्करादुग्धगोधूमापूपान् निवेद्य ताम्बूलदीपाराधनादिकं कृत्वा यथाशक्ति मूल-मन्त्रं जप्त्वा श्रीगुरुशक्तिसामयिकान् सम्भाव्य ब्राह्मणान् दिवा सन्तर्पिता-न्षोडशनित्यास्वरूपास्सुवासिनीरपि स्रक्चन्दनदक्षिणाभरणवासः कञ्चुकादिभि स्तोषयित्वा यथासुखं विहरेदिति माघपूर्णिमाकृत्यम् ॥

— अथ फाल्गुनपूर्णिमाकृत्यम् —

अथ फाल्गुन्यां पूर्णिमारात्रौ पादौ प्रक्षाल्याचम्य देशकालौ संकीर्त्य एवं गुणविशेषणविशिष्टायां पौर्णमास्यां शुभतिथौ श्रीललितापरदेवताप्रीत्यर्थं श्री ललितापरदेवतामुद्दिश्य सौवर्णरजतपुष्पपङ्कजकल्हाराम्रकुसुमानां यथासम्भवं मिळितानामार्चनं करिष्य इति संकल्प्य आदौ तेषामधिवासनं कुर्यात् ।

शिवप्रसादसंभूत अत्र सन्निहितो भव ।
देवीकार्यं समुद्दिश्य नीतं चासि शिवाज्ञया ॥

इति पुष्पाण्यादाय पवित्रे वंशादिपात्रे निधाय मूलविद्यया शुद्धादिभिरद्भिरभ्युक्ष्य अमुकपुष्पेभ्यो नमः। अमुकं कल्पयामीत्यादिरीत्या उपचारमन्त्रैः गन्धपुष्पधूपदीपनैवेद्याख्यान् पञ्चोपचारान् विधाय नूतनवस्त्रेण पिधाय यागमन्दिर एव क्वचिन्निधाय जागृयात्। जागरणमभ्युदयाय इत्यधिवासय ततः प्रधानदेवीपूजान्तर मावरणार्चने -

षोडशार्णे जगन्मातर्वाञ्छितार्थफलप्रदे।

हृत्स्थान् पूरय मे कामान् देवि कामेश्वरेश्वरि॥

इति देवीं संप्रार्थ्य नित्यार्चनक्रमेणैव श्रीदेवीं देवताश्चतुराम्नायादि समयदेवताश्च अधिवासित कुसुमैः संपूज्य पूजां यथाविधि निर्वर्त्य श्रीगुरुशक्तिसामयिकान् सम्भाव्य ब्राह्मणान् दिवा दिव्यान्नैः सन्तुष्टाः षोडशनित्यारूपिणीः सुवासिनीश्च स्रक्चन्दनदक्षिणाभरणकञ्चुकादिभिस्तोषयित्वा यथासुखं विहरेदिति फाल्गुन पूर्णिमाकृत्यम्।

— अथ संक्षेपपूजाविधिः —

अयमेव नैमित्तिकार्चनविधिः। गणपतिश्यामावार्ताळीनां सामान्यक्रमोक्तानां सर्वत्रामुकपौर्णिमायानुमुकेन द्रव्यविशेषेणामुकदेवतां पूजयिष्य इति सङ्कल्पः। अत्राधिमासपात एकमासकृत्यस्य मासद्वय आवृत्तिः॥

क्षयमासप्रसक्तौत्वे कस्मिन् मासे मासद्वयकृत्यमपि कार्यम् भवति। इहोक्तगौणकालस्याप्यतिक्रमे मूलविद्यासहस्रजपः प्रायश्चित्तमाम्नातं तन्त्रराजे। नैमित्तिकातिक्रमेण सहस्रं जपेत्तथा। इति पञ्चपर्वार्चनविधिः। तन्त्रान्तरेषु युगमन्वन्तरादिषु विशेषदिवसेष्वपि श्रीदेव्यर्चनमभ्युदयायैव सूत्रकारेण काम्यहोमस्यैवोक्तत्वात्तत्पूजानुक्तिरिति शिवम्।

इति श्रीमद् भासुरानन्दनाथचरणारविन्दमिळिन्दायमानमाननेनोमानन्दनाथेन विरचिते कल्पसूत्रानुसारिणि नित्योत्सवे निबन्धे नवे यौवनोल्लासे नैमित्तिकप्रकरणं सम्पूर्णम्॥

# श्रीदेव्यपराध - क्षमापण - स्तोत्रम्



न मन्त्रं नो यन्त्रं तदपि च न जाने स्तुतिमहो
न चाह्वानं ध्यानं तदपि च न जाने स्तुतिकथाः ।
न जाने मुद्रास्ते तदपि च न जाने विलपनम्
परं जाने मातस्त्वदनुसरणं क्लेशहरणम् ॥ १

विधेरज्ञानेन द्रविणविरहेणालसतया
विधेया शक्यत्वात्तव चरणयोर्याच्युतिरभूत् ।
तदेतत् क्षन्तव्यं जननि सकलोद्धारिणि शिवे
कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ॥ २

पृथिव्यां पुत्रास्ते जननि बहवस्सन्ति सरळाः
परं तेषां मध्ये विरळतरळोऽहं तव सुतः ।
मदीयोऽयं त्यागः समुचितमिदं नो तव शिवे
कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ॥ ३

जगन्मातर्मातस्तव चरणसेवा न रचिता
न वा दत्तं देवि द्रविणमपि भूयस्तव मया ।
तथापि त्वं स्नेहं मयि निरुपमं यत्प्रकुरुषे
कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ॥ ४

परित्यक्ता देवा विविधविधसेवाकुलतया
मया पञ्चाशीतेरधिकमपनीते तु वयसि ।
इदानीं चेन्मातस्तव यदि कृपा नापि भविता
निरालम्बो लम्बोदरजननि कं यामि शरणम् ॥ ५

श्वपाको जल्पाको भवति मधुपाकोपमगिरा
निरातङ्को रङ्को विहरति चिरं कोटिकनकैः ।
तवापर्णे कर्णे विशति मनुवर्णे फळमिदम्
जनः को जानीते जननि जपनीयं जपविधौ ॥ ६

चिताभस्मालेपो गरळमशनं दिक्पटधरो
जटाधारी कण्ठे भुजगपतिहारी पशुपतिः ।
कपाली भूतेशो भजति जगदीशैकपदवीम्
भवानि त्वत्पाणिग्रहणपरिपाटीफलमिदम् ॥ ७

न मोक्षस्याकांक्षा न च विभववाञ्छापि च न मे
न विज्ञानापेक्षा शशिमुखि सुखेच्छापि न पुनः ।
अतस्त्वां संयाचे जननि जननं यातु मम वै
मृडानी रुद्राणी शिव शिव भवानीति जपतः ॥ ८

नाराधितासि विधिना विविधोपचारैः
किं रुक्षचिन्तनपरैर्न कृतं वचोभिः ।
श्यामे त्वमेव यदि किञ्चन मय्यनाथे
धत्से कृपामुचितमम्ब परं तवैव ॥ ९

आपत्सु मग्नः स्मरणं त्वदीयं करोमि दुर्गे करुणार्णवेशि ।
नैतच्छठत्वं मम भावयेथाः क्षुधातृषार्ता जननीं स्मरन्ति ।।

जगदम्ब विचित्रमत्र किं परिपूर्णा करुणाऽस्ति चेन्मयि
अपराधपरंपरावृतं न हि माता समुपेक्षते सुतम् ।
मत्समः पातको नास्ति पापघ्नी त्वत्समा न हि
एवं ज्ञात्वा महादेवि यथायोग्यं तथा कुरु ।।

।। इति देव्यपराधक्षमापणस्तोत्रं समाप्तम् ।।

यदक्षरपदभ्रष्टं मात्राहीनं च यद्भवेत् ।
तत्सर्वं क्षम्यतां देवि नारायणि नमोस्तु ते ।।




